त्तरं ति । यदि वो जानितुं न शक्ष्यथ परराष्ट्रं गच्छाम तत्र ज्ञास्यामः को विशेष्यति पुण्यवां वीर्यवां शिल्पवां रूपवां प्रज्ञावानिति ॥ ते दानि वाराणसीतो कम्पिल्लं नगरं गता यावत् ज्ञास्याम को लोके विशिष्यति पुण्यवां वीर्यवां शिल्पवां रूपवां प्रज्ञावां ॥

ते दानि कंपिल्लतो निर्गम्य गंगायां स्नापनाय गता पश्यन्ति च नदीये गंगाये स्रोतेन महान्तं दारुस्कन्धं ओरुह्यन्तं ॥ ते दानि अमात्यपुत्राः सो च पुण्यवन्तो राजपुत्रो तं वीर्यवन्तममात्यपुत्रमाहन्सुः ॥ वीर्यवन्त अत्र त्वया दारुस्कं[269a]-धे वीर्यं दर्शयितव्यं यं शक्नोसि इदं दारुस्कन्धं नदीये गंगाये ओरुह्यन्तं ओकड्ढितुं ॥ ततः सो वीर्यवन्तो तेन दानि महाबलस्थाम संजनित्वा तं दारुस्कन्धं नदीये गंगाये ओरुह्यन्तं स्थले ओकड्ढितं ॥ ते दानि तं प्रत्यवेक्षन्ति पश्यन्ति च महारहं चन्दनद्रुमं ॥ सो दानि तेन वीर्यवन्तेन अमात्यपुत्रेण गन्धिकानां हस्ते पुराणानां शतसहस्रेण विक्रीतो ॥ तेन तं पुराणानां शतसहस्रमानेत्वा तेषां वयस्यकानां दत्तं । तां वयस्यकां गाथाय अध्यभाषे ॥

वीर्यं लोके प्रशंसन्ति वीर्यं लोके अनुत्तरं ।
पश्य वीर्यप्रभावेन धनस्कन्धो मे आहृतो ॥

ते दानि आहन्सुः ॥ दृष्टं वीर्यस्य फलं । शिल्पवन्तस्य शिल्पफलं पश्यामः ॥

सो दानि शिल्पवन्तो वीणामादाय वयस्यकानां मूलातो निर्धावित्वा अमात्यपुत्रेहि च श्रेष्ठिपुत्रेहि च सार्धं वीणाये कुशलेहि वीणां प्रवादितो ॥ तत्र महाजनकायो सन्निपतितः यत्तका पि कंपिल्ले नगरे वीणावाद्येषु शिक्षिता ते पि सर्वे

1. C yadi vâ jâ° BC °jânitu na ça° B °râshṭhraṁ ga° shyati | pu° C °vîryyavân çilpavân rupavân prajñâvân iti ‖ . — 2. C °gatâḥ yâva jñâsyâ° BC °shyati ‖ pu°. — 5. C °snâvanâya ga° nti ca nadiye gaṁgâye gotreṇa mahâ° B °dîye gaṁgâye çrotena° C °dâruskaṁndhaṁ °.

6. C °ni amâtyaputro so ca puṇya° ryamantam a°. — 7. B vîryyavavanta° C vîryyavantaṁ atra° B °vyaṁ ye çaknosi | i° C °vyaṁ | ya ça° kaṭṭituṁ | B °okaṭṭituṁ ‖ . — 9. C tato so vîryavantaṁ te° B °taḥ se vîyavanto° C °dîye oruhya° B °gâye ohyantaṁ° BC °sthalaṁ okaṭṭi(C °ṭi)tuṁ | . — 10. B °kshanti | paçya° C °haṁ candranadrumaṁ | .

11. C °ryavantaṁna amâ° B °putrena gandhi° sreṇa vikrito te° C °krîyato | . — 12. B °ttaṁ tâṁ° C °ttaṁ gâ°. — 13. C °syakânâṁ dattaṁ gâ° syakâ gâ°. — 15. B °viryaṁ pra° skandhâ me â° C °skandhâto âhṛi°.

16[1]. B tena dâ° BC °nsuḥ dṛi°. — 16[2]. C dṛiḍhaṁ vîryasya yat phalaṁ. — 17. C °çilpivanto° B °nâṁ sthûlato ni° BC °nirddhâ(C °niddhâ)vitvâ a° C °tyaputrohi ca çre° BC °çreshṭiputre° C °sârddha vîṇâ° lehi vîṇâ pra°. — 18. C °janakâye sannipatitâḥ yatta° B °kaṁppille° C °kshitâḥ te pi çru° titâḥ te°.

श्रुत्वा सन्निपतिता ॥ तेन अमात्यपुत्रेण सार्धं परस्परस्य विस्पर्धं वीणां वादयन्ति । न च कोचिच्छक्नोति तस्य अमात्यपुत्रस्य वीणाये अभिभवितुं ॥ अथ खलु अमात्यपुत्रो सो शिल्पवन्तो सर्वेषां वीणावाद्येन विशिष्यति ॥ तेन दानि शिल्पवन्तेन तां वीणां वादयन्तेन तस्या वीणाये एका तन्त्री छिन्ना तादृशो एवं च ताये वीणाये स्वरो निश्चरति । तस्य द्वितीया तन्त्री छिन्ना तादृशो एवं च वीणाये स्वरो निश्चरति । तस्य तृतीया तन्त्री छिन्ना तादृशो एवं च ताये वीणाये स्वरो निश्चरति । एवमेकमेका षट्तन्त्रीयो छिन्ना एका तन्त्री अवशिष्टा । ततस्ताये एकाये तन्त्रीये तादृशो एव स्वरो निश्चरति ॥ सर्वा परिषा तस्य शिल्पवन्तस्य अमात्यपुत्रस्य वीणावाद्येन विस्मयमापन्ना ॥ तेन दानि प्रभूतं हिरण्यसुवर्णं आच्छादो च लब्धो । तेन तं हिरण्यसुवर्णं आहरित्वा तेषां वयस्यकानां दिन्नं । अयं पि मम शिल्पस्य फलं ॥ सो दानि तां वयस्यकां गाथाये अध्यभाषे ॥

शिल्पं लोके प्रशंसन्ति शिल्पं लोके अनुत्तरं ।
सुशिक्षितेन वीणायां धनस्कन्धो मे आहृतो ॥

ते दानि आहन्सुः ॥ दृष्टं इमस्य शिल्पवन्तस्यापि अमात्यपुत्रस्य शिल्पस्य फलं । रूपवन्तस्य पि रूपस्य फलं पश्यामः ॥

सो दानि रूपवन्तो अमात्यपुत्रो ततो वयस्यानां मूलातो निर्धावित्वा [269[b]] अन्तरापणवीथीमोकस्तो ॥ सो दानि अन्तरापणे वीथीयं अकस्तो अग्रगणिकाये दृष्टो प्रासादिको दर्शनीयो असुद्रावकाशो परमाये शुभाये वर्णपुष्कलताये

1. B °treṇa para ° sparddha vî° BC °dayati | . — 2[1]. C na ca kvaciçça ° bhavatu | . 2[2]. C °khala so amâ ° tro nilpa ° dyena viçikshyati | B ° dyena çikshyati | . — 3. C te dâ ° lpavantena tâm̃ vîṇâ vâda° BC °ntena tasya vîṇâye e° B °kân tantrî° C °cchinnâḥ tâdṛi °vam̃ ca tâya vîṇâye svarâ niçca° B °svarâni niçca°. — 5. B °dvitrî tantrî° C °dvitîya tantrî cchinnâs tâdṛi°.

6. C °tîyo tantrî cchinnâḥ tâdṛi°. — 7[1]. BC evam ekamekâm̃ evam̃ sha° B ° shaṭtrî (?)-yo cchinnâm̃ ekâ ta° C °shattantriyâ cchinnâ | ekâ ta ° çishṭâḥ ta°. — 7[2]. C tato te pi ekâ° B tatas te pi ekâ ° dṛiçâ eva° C °dṛiçâ evam̃ sva°. — 8. C sarve pari ° pannâḥ | . — 9. B °hiraṇyam̃ su ° bdho te°. — 10[1]. B °hiraṇyam̃ su° C °rṇṇam̃ âgacchâdo ca labdham̃ tam̃ hiraṇyam̃ suvarṇṇam̃ âha ° syakâm̃ dinnam̃.

11. C °bhâshye | . — 12. B °nti çilpam̃ lo a°. — 13. B susicchinnena vî° C suvicchinnena vî ° naskam̃dho me âhṛitaḥ | B °naskam̃dhe me â°. — 14[1]. B tena dâ° BC °nsuḥ dṛi°. — 14[2]. dṛiḍham̃ i ° tyasya pu°. — 15. C so dâni rûpavantasyâpi° B rûpam̃ tasya pi°.

16. B °tyapu tato yasyânâm̃ rûpânâm̃ mû ° ntapaṇavîthîyoka° C °vîthim okasto | . — 17. B °ntarâyaṇam̃ vî° C °ntarâpaṇavîthîyam̃ akaṇṭhako agra° B ° dṛishṭho prâ° C °dike darça° B °nîyo | akshu ° nvâgato ta°.

समन्वागतो ॥ तस्या तत्र दृष्टमात्रे अत्यर्थं प्रेमं संजातं । ताये चेटी प्रेषिता ॥ गच्छाहि एतं पुरुषं मम वचनेन शब्दापेहि ॥ सो दानि ताये चेटीये शब्दावितो आर्यधीता तव आर्यपुत्र पश्यितुकामा ॥ सो दानि ताये चेटीये सार्धं तस्या अग्रगणिकाये गृहं प्रविष्टो ॥ अग्रगणिकाये अमात्यपुत्रो अभिनन्दितो । स्वागतमार्यपुत्रस्य इमस्ते गृहमनुत्तरव्यसनं तं कल्याणं मया सार्धं पंचहि कामगुणेहि समर्पितो क्रीडाहि रमाहि परिचारेहि ॥ सो ताये अग्रगणिकाये एकपर्यंकेन उपविशापितो बहुप्रकारं च अर्थेन लोभितो । तस्य स्नानगृहं प्रवेशित्वा गंधतैलेन अभ्यंगो दिन्नो उदारेहि स्नानचूर्णेहि स्नापितो उदारेहि च आलेपनेहि अनुलेपितो महारहाणि च काशिकवस्त्राणि परिधापितो ॥ ताये अग्रगणिकाये सार्धमुपविष्टस्य महारहं भोजनमुपनामितं ॥ सो दानि ताये सार्धं आसन्तो आह ॥ अमुकत्र मे गृहे मम चत्वारो वयस्या आसन्ति तेषां शब्दावित्वा अर्थमात्रा दातव्या यथा ते न विहन्येन्सु ॥ अग्रगणिकाये वचनमात्रेण शतसहस्रं पुरतो थपितो इमन्तेषां वयस्यानां देहि ॥ तेन दानि ते वयस्या शब्दाविता । ते दानि ताये अग्रगणिकाये गृहमागताः पश्यन्ति रूपवन्तं अमात्यपुत्रं महतीये श्रियाये अग्रगणिकाये अंकगतमासन्नं ॥ सो दानि रूपवन्तो तां वयस्यां दृष्ट्वा गाथाये अध्यभाषे ॥

रूपं लोके प्रशंसन्ति रूपं लोके अनुत्तरं ।
गणिकाय च अङ्कगतो धनस्कंधो मे आहृतो ॥

इमं शतसहस्रं गृह्णथ व्ययं करोथ ॥ ते दानि शतसहस्रं गृह्य स्वकमोहारं गता ॥

1¹. B °shṭamâtrâ atya° C °shṭamâtro atya° B °jâtam̃ tâ°. — 1². BC °ṭiye preshitâ ga°. — 2¹. B gacchehi e° C °cchâhi | evam̃ pu ° cane çabdâ°. — 2². BC °tra paçyatukâmaḥ (C °maḥ |) so dâ°. — 3. B °shṭo agra°. — 4¹. B °ndito svâ°. — 4². C svâgata âryaputrasya snânagṛiham̃ praveçitvâ gandhataisena imam̃ te gṛi ° sanam̃ kalyâṇam̃ gṛiham̃ mayâ sâ ° rpitâ krî ° mâhi anulepanehi parivârehi | B ° ricârâhi | .

6. B °ekaparyake° C °paryaṅkena upaviçâyitaḥ | ba° B °rthena lâbhi° BC °bhito ta°. — 7. B °tailam̃ na atyam̃go di° C °lena abhyaṅgo di° BC °nno | udârehi snânacû(C °cu)-rṇṇe° B °snâpito | udârehi ca alepane° C °snâpito udârehi ca anulepito ma° B °lepito | ma° BC °rihâyito | . — 9. C ° sârddha upashṭaḥ tasya°. — 10¹. C sâ dâ°. — 10². B °vyâ || yathâ° C °vyâ ya yathâ te na vihanyetsuḥ | B °nyetsu | . — 13¹. C te dâ° BC °bdâvitvâ | . — 13². C °graganiganikâye gṛi° BC °çyantam̃ rû° C °ṇikâye aṅkegata°. — 15. C °rûpavantam̃ tâm̃°.

18. C °ca aṅgegato dhanaskandha ca me hṛitaḥ | . — 19¹. B °sram̃ gaccha vya° C °sram̃ accha vâyayam̃ karotyatha || . — 19². C °svakam âharagatâ | B °gato || .

ते दानि आहन्सुः ॥ दृष्टं रूपवन्तस्यापि अमात्यपुत्रस्य रूपफलं । प्रज्ञावन्तस्यापि प्रज्ञाये फलं द्रष्टव्यं ॥

प्रज्ञावन्तो पि ततो ओहारातो निर्गम्य अन्तरापणवीथिमोकस्तो । तत्र पश्यति श्रेष्ठिपुत्रं अग्रगणिकाये सार्धं विवदन्तं महतो जनकायस्य मध्ये । श्रेष्ठिपुत्रेण सा अग्रगणिका उक्ता । आगच्छ [270a] मम अद्य रात्रिमुपस्थापनकारि । अहन्ते शतसहस्रं दास्यामि ॥ अग्रगणिका आह ॥ आर्यपुत्र नास्ति मम अद्य रात्रीं क्षणो अन्यस्याहमद्य रात्रीये गृहीतवेतना । अद्य तं उपस्थिहिष्यामः श्वे आर्यपुत्र आर्यपुत्रस्य सकाशमागमिष्यं ॥ सा दानि तस्य पुरुषस्य तां रात्रिमुपस्थापनकारि गता ॥ श्रेष्ठिपुत्रो पि तामेव अग्रगणिकां संकीयन्तो शयितो ॥ तेन दानि ताये अग्रगणिकाये सार्धं स्वप्नान्तरे सर्वरात्रीं यथाभिप्रायं क्रीडितं रमितं प्रविचारितं ॥ सा दानि अग्रगणिका तां रात्रिं तेन पुरुषेण क्रीडित्वा रमित्वा प्रविचारित्वा प्रभाताये रात्रीये तस्य श्रेष्ठिपुत्रस्य सकाशं गता । एषाहमागता आर्यपुत्रस्य उपस्थापनकारिका ॥ श्रेष्ठिपुत्रो आह ॥ अद्याहं स्वप्नान्तरे त्वया सार्धं सर्वां रात्रिं यथाभिप्रायं क्रीडितो रमितो परिचारितो गच्छ न मे त्वया कार्यं ॥ यदि आर्यपुत्रो मया सार्धं स्वप्नान्तरे सर्वरात्रिं यथाभिप्रायं क्रीडितो रमितो प्रविचारितो देहि मे शतसहस्रं ॥ श्रेष्ठी आह ॥ या दानि त्वमन्येन पुरुषेण सार्धं सर्वरात्रिमाश्रिता किस्य तवाहं शतसहस्रं दास्यामि ॥ सा आह ॥ आर्यपुत्र स्वयं जल्पसि यथा सर्वरात्रिं एव त्वया सार्धं स्वप्नान्तरे यथाभिप्रायं क्रीडितं रमितं प्रविचारितं दातव्यं आर्यपुत्रेण शतसहस्रं भाटकं ॥ तत्र तेषां तं विवादं ॥ महाजनका-

1[1]. B °nsuḥ dṛi°. — 1[2]. B dṛishṭa rûpam̃vanta° C °shṭam̃ rûpavam̃tasyâ ° trasyâpi rû° B °sya rûpam̃ phalam̃ | . — 3[1]. C °jñâvantasyâpi ta° BC °ohârito ni ° ntarâyaṇa° B °ṇavithîm o° C °vîthi oka° BC °sto tatra pa°. — 3[2]. BC °çyati || çreshṭipu° C ° putram agra BC °dhye çre°. — 4. BC çreshṭipu° C °putraiṇa° BC °ktâ â°. — 5[1]. BC °sthânakâni (B °ni |) a°. — 5[2]. C ahamn te ça ° sram̃ dâsvâmi || B °dâsyâpi || .

6[2]. C °sti mama adya râtrîm̃ me gṛi ° BC °hitacetanâ | . — 7. C adya tvam upa ° maḥ | çuve âryaputrasya sa°. — 8. C ° râtrim̃ upasthapanakâ nirgatâḥ | B ° gatâ çre°. — 9[1]. B çreshṭîpu° C çreshṭiputrâ pi° BC °pi tam evam agra ° C ° kâm̃ sakriḍanto ça °. — 9[2]. C °sârddha sva ° re sacarâtrim̃ yathâ ° yam̃ kṛidi°.

11. C °mitvâ parivâritvâ prabhâ° BC ° çreshṭipu°. — 12. B esho ha âryaputro° C esho ham âgato âryya ° sthânakâritâ | . — 13[1]. C çreshṭipu°. — 13[2]. B °svapnâm̃nta ° rito gakara me tvayâ kâryya | . — 14. C °mito parivârito de°.

16[1]. B çreshṭhi â° C çreshṭi â°. — 16[2]. B °ni tvâm anye° C °ni tvâm̃ anye ° rddham̃ sarvâm̃ râtrim̃ âsitâ ki° B °sarvarrâtrim̃m âçri°. — 17[2]. C °putro sva° B °lpasi | yathâ sa° C ° trim̃m evam̃ tva ° mitam̃ paricâ°. — 19[1]. B °shâm̃ tam vivâ° BC °dam̃ ma°. — 19[2]. C °kâye samâgato na ca tam̃ kvacit tẹ° B °tam̃ kâcit te° BC °dam̃ nivindi° B °tam̃ samarthâ so°.

यो समागतो न च तं कोचित्तेषां विवादं विच्छिन्दितुं समर्थो ॥ सो तत्र स्थितको प्रज्ञावन्तो अमात्यपुत्रो । एतेहि कंपिल्लेहि नैगमेहि वुच्चति ॥ जल्प कुमार त्वं पि यन्ते अत्र प्रतिभायति किं दातव्यं एतेन श्रेष्ठिपुत्रेण एतस्या अग्रगणिकाये शतसहस्रं अथ न दातव्यमिति ॥ प्रज्ञावन्तो आह ॥ यथापि श्रेष्ठिपुत्रस्य एताये गणिकाये समागमः आसि तथापि श्रेष्ठिपुत्रेण एताये गणिकाये भाटकं दातव्यं ॥ ते आहन्सु ॥ निर्दिशतु कुमारो यथा दातव्यं ॥ तेन प्रज्ञावन्तेन महन्तो आदर्शमण्डलो आनापितो शतसहस्रं च । श्रेष्ठिपुत्रो वुच्चति । गृह्न एतं शतसहस्रकं करण्डकं एतस्य आदर्शमण्डलस्य अभिमुखं धारेहि ॥ श्रेष्ठिपुत्रेण तं शतसाहस्रिकं करण्डकं उत्क्षिपित्वा एतस्य आदर्शमण्डलस्य अभिमुखं स्थापितं । आगच्छ भद्रे यो इमस्य शतसाहस्रिकस्य करण्डकस्य [270b] अत्र आदर्शमण्डले प्रतिबिम्बं एतं गृह्णाहि । एषो ते भाटको ॥ एवं तस्य प्रज्ञावन्तस्य अमात्यपुत्रस्य निर्दिशिते महाजनकायेन हक्कारो दिन्नो प्रभूतं च हिरण्यसुवर्णमाच्छादयन्ति ॥ तेन तं हिरण्यसुवर्णं तेषां वयस्यानां दिन्नो ॥ सो तां वयस्यां गाथाये अध्यभाषे ॥

प्रज्ञां लोके प्रशंसन्ति प्रज्ञा लोके अनुत्तरा ।
सुचिन्तिताये प्रज्ञाये धनस्कन्धो मे आहृतो ॥

ते दानि अमात्यपुत्रा आहन्सुः ॥ दृष्टं वीर्यवन्तस्य अमात्यपुत्रस्य वीर्यप्रभावो शिल्पवन्तस्य शिल्पप्रभावो रूपवन्तस्य रूपप्रभावो प्रज्ञावन्तस्य प्रज्ञाप्रभावो । अधुना कुमारस्य पुण्यवन्तस्य पुण्यप्रभावं पश्येमः ॥

सो दानि पुण्यवन्तो राजपुत्रो तेषां वयस्यानां मूलातो निर्धावित्वा येन राज-

1. C tatra° B °sthitaḥ ko pra ° tro sâ te°. — 2[1]. C sâ tehi kaṁ° C so tehi kaṁ°. — 2[2]. BC ° çreshṭipu ° etasya (B °sya a)gra° C °hasram arthaṁ na dâtavyaṁ ti || B °sraṁ arthan dâta°. — 4[2]. B athâpi° B athâpi çreshṭipu ° mâgato âsi | tathâ° B °maḥ âçi tathâ° BC °ṇa etasya gaṇi°. — 5. C ° âhatsuḥ || .

6[1]. B nirviçatu mâro° C °tu mâro°. — 6[2]. BC °ntena mahato â° C °ṇḍalâ â ° sraṁ çre° B °sraṁ | . — 7[1]. BC çreshṭipu°. — 7[2]. BC gṛihna etaṁ° B °hasraṁkaṁ kalaṇḍaka etasya â° C °srakaṁ etasya â°. — 8. BC çreshṭipu° C °hasrika ka° BC °raṇḍakaṁ e(C ° ṇḍakasya e)tasya çatasâhasrikasya ukshipitvâ tasya âda ° pitaṁ â° — 9. B °rçanamaṇḍa° BC ° gṛihnâhi || .

11[1]. BC eshâ o bhâṭako tena ta°. — 11[2]. BC tena ta° C ° nirviçate ° B ° dinnâ | prabhû ° cchâdayaṁti | C °cchâdayati taṁ tena hi°. — 12. C taṁ tena hi ° nâṁ dinnâḥ so°. — 14. BC °jñâṁ loke prasaṁçanti°. — 15. B sucintaye pra° C sucintaṁ ye va prajñâ me dhanaskaṁdhaṁ ca âhṛitaḥ | B °hṛitâ te dâ°.

16[1]. C °putro â°. — 16[2]. B °shṭaṁ vîryaṁ ca tasya a° C °shṭaṁ vîryaṁ vayaṁ tasya a° BC °ryaprabhâvâ çilpava° C °jñâprabhâvaḥ adhu°. — 17. C °ntasya prabhâvaṁ paçyâmaḥ | . — 19 C °nto râjakumâro te ° nâṁ nilâto nirddhâ° B °ṇatâ | .

कुलं तेन प्रणतो । सो तत्र राजकुलसमीपे आसति च ॥ अपरेण अमात्यपुत्रेण दृष्टो । सह दर्शनेन तस्य अमात्यपुत्रस्य पुण्यवन्तस्य राजपुत्रस्य मूले प्रेमं निपतितं । सो तेन भक्तेन निमन्त्रितो स्वकं गृहं नीतो व्यायामशाले प्रवेशितो ॥ व्यायामं कृत्वा स्नानोपलिप्तो भक्तखज्जमुपविष्टो ॥ तत्र सो राजपुत्रो तेन अमात्यपुत्रेण सार्धं तं दिवसमुपस्थितो प्रणीतेन राजार्हेण अन्नपानेन ॥ सो च अमात्यपुत्रो राजक्यां यानशालामभिरूहापयित्वा शयायितो । ताये च राज्ञो ब्रह्मदत्तस्य धीताये दृष्टो ॥ तस्या एवं भवति । एषो अमात्यपुत्रो आगतः ॥ सा दानि विकाले राजकुलातो निर्धावित्वा निर्गम्य यानशालां प्रविशित्वा तत्र एव यानमंभिरूहित्वा यत्र सो पुण्यवन्तो राजपुत्रो शयितो । जानाति इदानीं मुहूर्तं पि विबुद्धिष्यति । ततो मया सार्धं रमिष्यति ॥ कुमारो पि खादितपीतो सुखं शयितो । सापि राजधीता कामवितर्कैहि विद्यमाना इदानिं विबुद्धिष्यति मुहूर्तं पि विबुद्धिष्यति इति बहुकेन रात्रीविभवाक्रान्ता ओसुप्ता ॥ सा दानि सूर्ये उद्गते ततो यानातो ओतरित्वा राजकुलं प्रविष्टा अमात्येहि च दृष्टा ॥ तेषामेतदभूषि ॥ इयं राजधीता यानशालातो ओतरित्वा विनिद्रा राजकुलं प्रविष्टा मा अत्र याने केनचित्पुरुषेण सार्धं आसितं भवेया ॥ ते च तथा विचिनन्ति पुण्यवन्तो च कुमारो ततः यानातो ओकस्तो ॥ तेषाममात्यानां एवं भवति । कुतो अयं [271[a]] पुरुषो ति राज्ञो ब्रह्मदत्तस्य धीतरेण सार्धं अत्र यानशालायामासितो ॥ सो तेहि अमात्येहि गृहीतो गृह्णिय राज्ञो ब्रह्मदत्तस्य उपनामितो । अयं महाराज पुरुषो राजधीताये सार्धं यानशालायां शयितो ॥ सो पृच्छियति ॥ कथमिदं ति ॥ सो आह ॥ महाराज अमुकेन अमात्यपुत्रेण गृहे निमन्त्रितो हं खादित-

1[1]. B °kule sa° C °kulam̃ samipem âsanti ca ‖ . — 1[2]. C °dṛishṭvo sa° B °shṭo sa°. — 3. B sâ te° C °svayam̃ gṛiham̃ nitaḥ vyâ ° veçaçayito. — 4[1]. C °liptaḥ bha°. — 4[2]. C °sârddha tam̃ di ° jârarheṇa a°. — 5. BC °jakyâ yânaçâ(B °sâ)lam abhi° C °çayito | .

6. B ° dṛishṭo ta° C ° dṛishṭaḥ ta°. — 7[1]. B °ti e°. — 7[2]. C °gato | B °taḥ sâ°. — 7[3]. B °çâlâ praviçitvâ | ta° C °tra evam̃ yânam̃ a° B °yatra sâ puṇya° BC °yito jâ°. — 9. BC °nâti ‖ i° C ° dânim̃ muhurttam api bu° B °pi buddhyishya°. — 10[2]. BC °ditopi°.

11. BC °râjâdhîtâ kâmaki(C °kâmevi)tarke° B °rkehi | vidya° C °idâni vibuddhishyato ottaritvâ vinidrâ° B °nim̃ vibuddhishyati | muhurttam̃ pi vibuddhishyati iti | bahukena râtrim̃ vibhâvakâmata supto | . — 12. B so dâni sûryo udgate tato jânâto o ° vishṭo amâtyehi ca dṛishṭvâ te°. — 14. B ° pravishṭo mâ° C °pravishṭaḥ mâ°. — 15. BC °vicinteti pu° C °ro tato yâ°.

16[1]. B teshâm̃m a° C teshâm̃ amâ° BC °ti ku°. — 16[2]. C kuto yam̃ pu ° sya dhîtaro sâ ° lâyâm̃ çayito | so pṛi°. — 18[1]. B °hîto gṛihniya râ°. — 18[2]. B °yito so pṛi°. — 19[1]. C °pṛicchiya° BC °ti ka°. — 19[2]. BC kathedam̃ ti ‖ . — 20[2]. C °râja muke° BC °dito pi° B °pito avikâle nikkâle nikkâçitvâ° C ° pito avikâle nishkâle nishkâçitvâ ° sthitaḥ so° B °sthito so°.

पीतो विकाले निष्क्रासित्वा ओहारं प्रस्थितो । सो तेन विकालदोषेण अत्र यानशालायामभिरुहित्वा शयायितो खादितपीतो नाप्येव तत्र अन्यो को चि द्वितीयो विदितो ॥ राज्ञापि धीता पृच्छिता । कथमेतन्ति ॥ ताये पि तु ब्रह्मदत्तस्य यथाभूतं आचिक्षितं । यथैव जल्पति पुरुषो तथा एव नान्यथा जल्पति ॥ राजा ब्रह्मदत्तो पुण्यवन्तस्य राजकुमारस्य प्रीतो संवृत्तो पश्यति च तं कुमारं प्रासादिकं दर्शनीयं बुद्धिमन्तं च सुस्थितं च । तस्य एतदभूषि । न एतेन प्राकृतपुरुषेण भवितव्यं महाकुलीनेन एतेन कुमारेण भवितव्यं ॥ सो दानि तं कुमारं पृच्छति ॥ कुमार कुतः त्वन्ति ॥ कुमारो आह ॥ वाराणसीतो अंजनस्य काशिराज्ञो पुत्रो ॥ तस्यापि कंपिल्लस्य राज्ञो ब्रह्मदत्तस्य सह दर्शनेन पुण्यवन्तस्य कुमारस्य पुत्रप्रेमं निपतितं तस्य च राज्ञो पुत्रो नास्ति । तेन सा धीता सुवर्णसहस्रमण्डितां कृत्वा महता राजानुभावेन महता राजर्द्धीये सर्वस्य अधिष्ठानस्य पुरतो पुण्यवन्तस्य कुमारस्य दिन्ना राज्ये च प्रतिष्ठापितो अमात्यानां च नैगमजानपदानां च राजाह ॥ एषो मे पुत्रो जातो ताव एषो भवे राजा अहं वृद्धो ॥ तेन दानि पुण्यवन्तेन राज्यप्राप्तेन ते वयस्या शब्दाविता गाथाये अध्यभाषे ॥

पुण्यं लोके प्रशंसन्ति पुण्यं लोके अनुत्तरं ।
राज्यं च राजकन्या च पुण्येहि मम आगता ॥

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन वीर्यवन्तो नाम अमात्यपुत्रो अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो श्रोणकोटिविंशो तेन कालेन तेन समयेन वीर्यवन्तो अमात्यपुत्रो अभूषि ॥ अन्यः स तेन कालेन तेन समयेन शिल्पवन्तो अमात्यपुत्रो अभूषि ।

1. B so te vikâ° C so me vikâ° BC °kâlo doshe° B °khâdati pito ° tra anyà kàci dvitîyo° C °khâdito pito nâpyevam̃ tatra anyo kvacid dvi°. — 3[1]. C râjño pi dhîtâpi pṛi° B °pṛicchati tâ ka°. — 3[2]. BC °nti tâye°. — 3[3]. C tâye pituḥ bra°. — 4[1]. C yathaisho jalpati purushaḥ tathâ nânyam̃ yathâ ja° B °evam̃ nânya°. — 4[2]. B °çyati | na ca tam̃ ku ° dika darça° BC °ddhivanto ca susthito ca ta°.

6[1]. B °shi na e°. — 6[2]. B °pushena bha° BC °kulinena e°. — 7. BC °ti kumâ°. — 8[1]. B °mâro kutaḥ° C °mâro kuto tvam̃ ti ||. — 8[3]. BC °sito am̃(C °a)jakasya°. — 9. BC °titam̃ | ta ° sti te°. — 10. C °srapratimaṇḍi° B °ṇḍitâ kṛi° C °bhâvena mahatâ râjariddhiye sa° B °dhisthâne purvato puṇya° C °shṭhâne pura ° ṇyavandasya kumârasya dinno râjye° BC °dânâm̃ ca râjâham̃ e°.

13[1]. C esho me pûtro° BC °tro jâto tâ(C °jâtâ)ca esho me râjâ(B °râjâ a)ham̃°. — 13[2]. C °bdâpitâ gâ° — 15. B °prasam̃çanti°.

16. C °jakam̃nyâm̃ ca pu°. — 17[2]. C °khalu bhikshavo yu°. — 18[2]. C °hetor aham̃ so bhi°. — 19. C °tivam̃ço tena kâ°. — 20. C anyas sa tena kâ°.

नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवः राष्ट्रपालो कुलपुत्रः तेन कालेन तेन समयेन शिल्पवन्तो अमात्यपुत्रो अभूषि ॥ अन्यः स तेन कालेन तेन समयेन [271[b]] रूपवन्तो अमात्यपुत्रो अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषः स भिक्षवः सुन्दरनन्दः स्थविरो तेन कालेन तेन समयेन रूपवन्तो अमात्यपुत्रो अभूषि ॥ अन्यः स तेन कालेन तेन समयेन प्रज्ञावन्तो अमात्यपुत्रो अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष स भिक्षवो शारिपुत्रो स्थविरः तेन कालेन तेन समयेन प्रज्ञावन्तो अमात्यपुत्रो अभूषि ॥ अन्यः स तेन कालेन तेन समयेन अंजनस्य काशिराज्ञो पुण्यवन्तो नाम काशिराजपुत्रो अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स भिक्षवः तेन कालेन तेन समयेन अंजनस्य काशिराज्ञो पुण्यवन्तो नाम राजपुत्रो अभूषि ॥ तदापि अहं पुण्यानां वर्णवादी । एतरहिं पि अहं पुण्यानां वर्णवादी ॥

समाप्तं पुण्यवन्तजातकं ॥

अपि च भिक्षवः न एतरहिं एवाहं पुण्यानां वर्णवादी । अन्यदापि अहं पुण्यानां वर्णवादी ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥ भूतपूर्वं भिक्षवो अतीतमध्वानं मिथिलायां राजा विजितावी नाम राज्यं कारयति कृतपुण्यो महेशाख्यो सुसंगृहीतपरिजनो दानसंविभागशीलो ॥ तस्य न किंचिदपरित्यक्तं श्रमणेहि ब्राह्मणेहि कृपणेहि वनीपकेहि । यस्य हस्तिना अर्थो तस्य हस्तिं देति । यस्याश्वेनार्थो तस्याश्वं देति । यस्य रथेनार्थो तस्य रथं देति । यस्य यादृशेहि यानेहि अर्थो तस्य तादृशानि यानानि देति । यस्य नारीहि अर्थो तस्य सर्वालंकारविभूषितां नारिं देति । यस्य दासीहि अर्थो तस्य

1[3]. C esho bhikshavo râ° B °râshṭhrapâ° C °putro tena kâ ° lpavanta amâ°. — 2. C anyo sa tena kâ ° yena rupa° BC °shi nai°. — 3[2]. C °hetor e°. — 3[3]. C esha sa bhikshavo su°. — 5[1] . C anyas sa te°.

6[1]. C °hetor esha°. — 6[2]. C °kshavaḥ ânandasthaviro tena kâ° B °çâliputro stha° C °jñâvanta amâ°. — 7. C anyo sa tena ° nâma râjapu°. — 9. C esha so bhi° BC °aṁjakasya° C °ṇyavanto râja ° bhûshi | naitad evaṁ drashṭavyaṁ | tat kasya hetor ahaṁ so bhikshavo tena kâlena tena samayena aṁjakasya kâçirâjño puṇyavanto nâma râjaputro abhûshi | tadâpi°. — 10[2]. C etarasi pi a°.

12. C ‖ iti çrîmahâvastuavadâne puṇyavanto nâma jâtakaṁ samâptaṁ ‖ . — 13[1]. C athâpi ca bhikshavo naita ° haṁ na puṇyâ° B °rṇṇavâdi ‖ . — 14[1]. C bhikshu â°. — 14[2]. B °gavân ‖ . — 14[4]. B °kshavo bhû° C °kshavo ati°. — 15. C atîtamadhvâne mi° BC °çîlo ta°.

17[1]. C ° çravaṇehi brâ°. — 18[1]. C yasyâ 'çvanârthe tasya açvaṁ°. — 19[1]. BC yasyâ yâdṛiçe ° rtho tâdṛiçâ°.

दासीयो देति । यस्य दासेहि अर्थी तस्य दासानि देति । यस्य वस्त्रेहि अर्थी तस्य वस्त्राणि देति । यस्य यादृशेहि भाजनेहि अर्थी तस्य तादृशानि भाजनानि देति । यस्य धेनुहि अर्थी तस्य धेनुयो देति । यस्य बलिवर्देहि अर्थी तस्य बलिवर्दं देति । यस्य हिरण्येनार्थी तस्य हिरण्यं देति । यस्य सुवर्णार्थी तस्य सुवर्णं देति । यस्य रूप्येण कार्यं तस्य रूप्यं देति । यस्य यस्य येन येनार्थी तस्य तस्य तं तं देति । न च स किंचिदपरित्यज्यं न चास्य अन्यथाभावो भवति ॥ अथ खलु ददन्तो परित्यजन्तो आत्तमनो भवति न च दत्त्वा पश्चादनुतप्यति । अथ खलु [272[a]] प्रीतिप्रामोद्यबहुलो भवति ॥

सो दानि अतिदानं ददाति कोशानि क्षीयन्तीति । गणकेहि च महापात्रेहि च कुमारामात्येहि च नैगमजानपदेहि च महाजनकायेन च संनिपतित्वान ततो राज्यतो विप्रवासितो समानो अनुहिमवन्ते महावनषण्डे ॥ तत्र गतो तत्र वनषण्डे आश्रमं मापेत्वा तृणकुटिपर्णकुटीनि कृत्वा वासं कल्पेसि ॥ तत्रापि आश्रमे प्रतिवसन्तो मूलानि च पत्राणि च पुष्पाणि च नानाप्रकाराणि च फलानि संहरित्वा प्रथमं ऋषीणि भोजेति पश्चादात्मनाहारं करोति सर्वकालं धर्मकामः ॥ अथ शक्रो देवानामिन्द्रो राज्ञो जिज्ञासनार्थं वनषण्डमुपसंक्रान्तो दिव्येन वर्णेन अन्तरीक्षे स्थिहित्वा वैदेहराजं दानातो विवेचेति ॥ महाराज न एतं दानं पण्डितेहि वर्णितं सर्वकालं दानं पण्डितेहि विगर्हितं ॥ यो दानं ददाति सो दृष्ट एव धर्मे दुःखितो भवति । मनुष्येषु चवित्वा नरकेषूपपद्यति । यथा महाराजो एतेन दानेन राज्यतो विप्रवासितो दृष्टधर्मेषु राज्यहीनो दुःखेन संयुक्तो परत्र पि एतेन दानप्रभावेन नरकेषूपपद्यिष्यति ॥ यदि मे महाराज मम न श्रद्दधासि यथा

1[1]. C °sehi tasya dâsâ°. — 1[2]. C ° arthas tasya vastrâ°. — 2. C °çehi bhâm̃janâni deti | B °tâdriçehi bhâjanâni deti | . — 4[1]. C yasya hiraṇyanârtho° B °tasya hiram̃ṇyam̃°. — 5[1]. BC yasya rûpeṇa°. — 5[2]. C yasya yasya yenârthena ta ° sya tam̃ deti | B °nârthe ta ° sya tam̃ tan deti | .

6[2]. B °tyajyanto â° C ° ântamanâ bhavanti na ca° BC ° datvâ paççâ°. — 9[1]. BC ° koçâni kshiyatîti | . — 9[2]. BC °kumârâmâtrehi ca nai° C °kâyehi ca sam̃ ° tvâna tato râjâto vi ° sito | so dâni râjyâto vipravâsito sa° BC °ntena mahâvanasha(C °kha)ṇḍe tatra°.

11. C ° gataḥ tatra vanakhaṇḍe âçrama mape° B °çrama mâpetvâ triṇakuṭivarṇṇa° C °triṇakuṭṭiparṇṇakuṭṭini kri°. — 12. C °me praviçato mû ° mam̃ rishini bhojayati | pa° B° âtmaâhâ°. — 14. C °ndro râjñâ ji ° rtham̃ vanakhaṇḍa ° to vicareti | .

16. C °ja naitam̃ dâ° B °etam̃ dânam̃ paṇḍatehi va° BC °vigahitam̃ ‖ . — 17. C ° dadâmi so° BC ° drishṭa evam̃ dha° C °ḥkhitâ bha°. — 18[1]. C °shu cyavi ° dyanti | . — 18[2]. BC °vâsito | drishṭa° C °kto paratreṇa etena pra° B ° dânena prabhâ° C °bhâve narake° B °shûpapadyam̃tishyati | . — 20. B yadi me mahârâja mama çraddadhâsi | yathâ°.

इह दानं दत्त्वा परलोके नरकेषूपपद्यिष्यसि तमहं महाराजस्य प्रत्यक्षं उपदर्शयिष्यं यत्र दायकदानपतियो उपपद्यन्ति ॥ शक्रेण आदीप्तो संप्रज्वलितो सज्योतीभूतो महानरको निर्मितो । तत्र बहूनि प्राणसहस्राणि संपद्यमाना संदर्शिता भीष्मस्वरं क्रन्दमानाः ॥ सो दानि राज्ञो आह ॥ महाराज गच्छ एतान्नरके सत्त्वानुपपन्नां क्रन्दन्तां पृच्छाहि केन कर्मेण अत्र नरके उपपन्ना ति ॥ राजा तानि नैरयिकानि पृच्छति ॥ किं युष्माभिर्मनुष्यभूतेहि पापकर्म कृतं येन भीष्मस्वरं क्रन्दमाना एदृशानि नरके दुःखानि अनुभवथ ॥ ते दानि निर्मिता आहन्सुः ॥ महाराज वयं मनुष्यलोके दायकदानपतियो आसी अस्माभिः श्रमणब्राह्मणेषु कृपणवनीपकेषु च उदाराणि दानानि दिन्नानि विपुलानि विस्तीर्णानि । ते वयं तस्य प्रभावेन मनुष्येषु चवित्वा इह नरकेषूपपन्ना ॥ राजा आह ॥ न मार्ष एवं एतं यथा यूयं जल्पथ । न हेतु न प्रत्ययो यं दायकदानपतिर्दानं दत्त्वा नरकेषूपपद्येय ॥ अथ खलु दायकदानपति दानं दत्त्वा दानप्रभावेन कायस्य भेदात्स्वर्गेषूपपद्यन्ति । ते तत्र [272$^{b}$] नानाप्रकाराणि दिव्यानि सुखानि अनुभवन्ति । ते देवेषु सुखानि दिव्यानि अनुभवित्वा आयुक्षया देवेषु चवित्वा मनुष्येषु आढ्येषु कुलेषूपपद्यन्ति ॥ अपि च कौशिक यदा ते च याचनका मम सकाशातो लब्धलाभा परिपूर्णसंकल्पा प्रतिगच्छन्ति तेन मम उदारो प्रीतिप्रामोद्यो भवति ते च प्रीता भवन्ति । अहं यदि नरकेषूपपद्यामि ततः उत्सहामि दानं दातुं ॥ एवं शक्रो देवानामिन्द्रो तं वैदेहराजं जिज्ञासित्वा संराधितो ॥ शोभना महाराज उदारा ते चेतना विज्ञा-

BC °datvâ paralo° C °lokeshûpapaditi ‖ tam ahaṁ° B °dyati ‖ tam ahaṁ° C °tyaksham upada° BC °shyaṁ | yatra° B °napatiyo°.

2. C °dîpta saṁ°. — 3. BC °bahuni prâ° ṇi saṁyacca° B °rçitâ ahṛisvarâ kra° C °rçitâ° ahîçvarâ kaṁdarpyamâno ‖ . — 4[1]. C °ni tasya tasya râ°. — 4[2]. BC °kamena atra narake upapannâ(C °nno) ti | . — 5. BC râjâni nai°.

6. C kim asmâbhi° hi pâpaṁ karma kṛitaṁ ahṛisvaraṁ kra° B °yena ahṛisvaraṁ kra°. — 7[2]. BC °nushyâlo° napatiyo âsî(C °sit |) asmâ° C °çravaṇabrâhmaṇeshû kṛipaṇavanîpake° B °nîyake° BC °rṇṇâni te va°. — 9. C °shu cyavi° shûpapannâḥ ‖ . — 10[2]. B na esha evaṁ° C naisha evaṁ°.

11[1]. C °hetu pra° kadânapatiḥ dânaṁ° BC °datvâ narake° dyeyaṁ ‖ . — 11[2]. C °kadânapatir dânaṁ° BC °datvâ dânapra° C °dyati | . — 13. C °kshayâya deveshu cyavi°. — 15. C °çika padâ yâcanakâ mama ṇakâsâto labdha° pûrṇṇaṁ kalpâṁ pratigacchanti | te deveshu° (13, *suit une répétition correcte jusqu'à* 15:) °kâ mama çakâçakâsâto labdhalâbhâ paripûrṇṇakalpaṁ pratigacchanti | tena ma° B °cchanti | tena ma° modyo bhavishyati te° C °modya bhavishyanti te° BC °tena prîto bha°.

16. C °dyâmi taḥ u°. — 17. B °çakreṇa de° BC °indreṇa taṁ° B °jaṁ vijñâ° C °tvâ mamrâ° BC °dhito ço°. — 18. BC çodhanaṁ(B °naṁ |) mahârâja(C °jo) u° B °cetanâ vijñâ°.

सनार्थं महाराजस्य इहागतो ॥ एवमुक्त्वा शक्रो देवानामिन्द्रो ततः वनषण्डातो न्तर्हितो त्रयस्त्रिंशभवने प्रत्यस्थासि ॥

तस्य दानिं तहिं राज्ये मिथिलायां यदुपादाय राजा विप्रवासितो तदुपादाय देवो न वर्षति दुर्भिक्षं संवृत्तं चौरेहि च प्रतिराजानेहि च उपद्रुतं ॥ तेहि दानि कुमारामात्येहि गणकमहामात्रेहि च नैगमजानपदेहि च तं वनषण्डं गत्वा तं वैदेहराजं अनुक्षमापेत्वा महता राजर्द्धीये महता राजानुभावेन पुनः मिथिलायां प्रतिष्ठापितो तदा सुभिक्षमासि ॥

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवो युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन मिथिलायां विजितावी नाम वैदेहराजा अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स भिक्षवः तेन कालेन तेन समयेन मिथिलायां विजितावी नाम वैदेहराजा अभूषि ॥ तदापि अहं पुण्यानां वर्णवादी एतरहिं पि अहं पुण्यानां वर्णवादी ॥

अभूषि राजा विजितावी वैदेहो मिथिलाधिपः ।
दिशासु विश्रुतो दाने मुक्तत्यागो अमत्सरी ॥
हस्त्यश्वरथयानं नारीयो च अलंकृता ।
जातरूपं हिरण्यं च न किंचिद्न परित्यजेत् ॥
प्रीतिप्रामोद्यबहुलो जनेय सौमनस्यतां ।
दत्त्वा आत्तमनो भोति दत्त्वा च नानुतप्यति ॥
श्रमणं ब्राह्मणं दृष्ट्वा कृपणमथ वनीपकं ।
तर्पितो अन्नपानेन वस्त्रशय्यासनेन च ॥
गणका महामात्रा च कुमारामात्या च नैगमा ।
जनकायो समागत्वा राज्यातो विप्रवासयेत् ॥

1. B evam uktvâ (*ou* °ptkâ) ça° C °m ukte ça ° ndro tato vanakhaṇḍâto ’ntarhito trayastriṁçadbhavane° B °rhito | traya° C ° pratyusthâsi | . — 3. C °dâni tahiṁ° B °yâṁ ya upâdâya râ ° sito upâdâya de° C °sito yadapâdâya de°. — 4. BC °kumâromâtye° C °tyehi gaṇakamahâmâtyehi ca naigamajanapa° C °vanakhaṇḍaṁ° B °nukshemâpe° C °punar mithi°.

8[2]. C khât khalu bhikshavaḥ yu ° m evaṁm asyâ°. — 10[1]. C ° hetor ahaṁ°. — 10[2]. C °kshavo tena kâ ° bhûshi na khalvetad evaṁ drashṭavyaṁ tadâ°.

11. C tadâpyahaṁ puṇyânâṁ varṇṇavâdî ‖ abhû°. — 13. C °thilâyâ adhipatiḥ di° B °paḥ di°. — 15. B °thayâna ca nâ° C °naṁ ca nâ ° kritâḥ | B °krito | .

16. C °rûpo hi° B °hiraṁṇyaṁ° BC °kiṁcid apari°. — 17. B °neyama sau°. — 18. B danto â° C °ttamanâ bhonti datvâ ca° B °datvâ ca°. — 19. C çravaṇaṁ brâ°. — 20. C tapito a°.

21. C gaṇyakâ ° râmâtya ca naigamâḥ | .

सो च विप्रवासितो सन्तो वनषण्डमुपागमे ।
आश्रमं [273a] मापयित्वान तत्र वासं प्रकल्पये ॥
तस्मिं च वनषण्डस्मिं संहरित्वा फलाफलं ।
सन्तर्पयित्वा ऋषयो पश्चाद् भुंजति आत्मना ॥
शक्रो दिव्येन वर्णेन राजानमुपसंक्रमे ।
अन्तरीक्षे स्थिहित्वान इदं वचनमब्रवीत् ॥
न पण्डिता प्रशंसन्ति दानं विगर्हितं सदा ।
एतेन अतिदानेन राज्यातो सि प्रवासितो ॥
दृष्टधर्मे सि दुःखितो राज्यहीनो सि क्षत्रिय ।
परलोकं गतो सन्तो नरकं गन्सि पार्थिव ॥
सचे मम न श्रद्दधासि यत्र गच्छति दायको ।
संदर्शयिष्यं तान्तुह्यं दायकानान्तु या गतिः ॥
सज्योतीभूतं ज्वलितं निरयं शक्रो च निर्मिणि ।
बहुप्राणसहस्राणि पच्चमानानि दर्शये ॥
स्वयं पृच्छ महाराज दह्यमानां इमां प्रजां ।
केन ते व्यसनं प्राप्ता दुःखां वेदथ वेदनां ॥
भीष्मस्वरा क्रन्दमाना दुःखां वेदथ वेदनां ।
एतमर्थं हि पृच्छाहि किं पापं अकरे पुरा ॥

ते कथयन्ति ॥

वयं दानपती आसि मनुष्येषु जनाधिप ।
बहु दानं ददित्वान अनुभोम इदं दुःखं ॥

1. C so vipra° B °pravasi° C °nakhaṇḍa°. — 2. C âçrama prâpayi° B °çrama mâpayi° C °lpayet | . — 3. BC tasmiṁ vana° C °nakhaṇḍesmiṁ siṁha°. — 4. C °çca bhuṁjati âtmanâḥ | B °janti â°.

7. BC °vigahitaṁ°. — 8. C °râjyato pirivâsito | B °to si nivâsito | . — 9. B °dharmo si duḥ° C °dharmo râjyato si duḥkhito si ca kshetriyo | B °triye | . — 10. BC °lokaṁ gatâ santo° C °kaṁ gaṁsi pâ° BC °rthivâṁ | .

11. B na ce mama° C na mayâ na çra° BC °cchasi dâ° C °yakaḥ | . — 12. C °rçayati ca tuhyaṁ dâyikâ° BC °ntu yo gatiḥ | . — 14. C °ṇi yacca°. — 15. C °hyamânâ iyaṁ prajâṁ | .

16. BC °prâptaṁ duḥ° C °khâṁ vedeti vedanâṁ | . — 17. *Omis dans* C. B abṛisvarâ krandamânâṁ duḥ°. — 18. C °rthaṁ pi pṛi ° karo purâḥ | . — 19. BC °nti va°. — 20. C va dânapatir âsi manu° BC °dhipaḥ | .

21. C ° dadatvâna anubhoma duḥkham idaṁ | .

राजा कथयति ॥

न एषो अस्ति प्रत्ययो न एतं स्थानं विद्यति ।
यत्र दानपति सन्तो च्युतो गच्छेय दुर्गतिं ॥
मनुष्येषु च्यविलान स्वर्गं गच्छन्ति दायका ।
तत्र अमानुषां ऋद्धिं अनुभोन्ति स्वयंकृतां ॥
कामं पि दुःखं नरकेषु . .
अनल्परूपमीदृशं . . . ।
. . . . . . . नरेन्द्र
दृष्ट्वा न तं याचनकं प्रभोमि ॥
कथं गिरां वियाहरन्तो दास्यं
संपूर्णसंकल्पमनोरथो स ।
मां प्राप्य प्रीतो कथं प्रतिक्रमे ति
सा मे रतिर्भवतु सहस्रनेत्र ॥
न तं भवे यं न ददेह दानं
अहरहं व पूरये तर्पये हं ।
परायणं अहं स कल्पवृक्षो
. . . . पर्णफलोपपेतो ॥
न मे मनो कुप्यति याचितस्य
दत्त्वा न सोचामि नानुतप्यामि ।
न तं उपश्रुतं यन्न प्रयच्छे
यं च श्रुतं चिप्रमुपानयामि ॥
. . . . . . . . . . . .

1. BC °ti naisho°. — 2. BC naisho sti paryâyo° B °yo naitam̃° C °yo sthâna vi°. — 3. B °pati santo°. — 4. BC °cchati dâ°. — 5. C °nushim̃ ṛi°.

6. BC °keshu analparûpam î(C °lpam̃ ca rûpam̃)driçam̃ | sanamudre lokena(B °dre râkaraṇam̃) narendram̃ drishṭvâ°. — 8. BC drishṭvâ ca tam̃ yâ ° kam̃ prabho | . — 10. BC °râm̃ vyâharantam̃ dâsyâ sam̃pû° B °pûrṇṇam̃ sam̃ka ° rathâm̃ sa mâm̃° C °rathâm̃ | sa mâm̃°.

12. BC °pratikramanti sâ(C °so) me ra° C °netro na tam̃°. — 14. C ° bhaveyam̃ yan na dade° BC °nam̃ aharaha iva pûraye | tarpaye ham̃ | parâ°.

16. BC parâyaṇa aham̃ sam̃kalpavṛiddho vâ tṛiṇapalla(C °llava)phalo pi vâ na me°. — 18. B °pyati | yâci° BC °datvâ na socâmi na tapyâ(B °pyo)mi | (C °mi). — 20. C tam̃ tam upa° B tan tam̃ upa° BC °paçruṇiya yan na° C °prayacchaye yam̃° BC °pram upanayâ° B °yâmi eva°.

एकक्षणे सर्वमनोरथा मे
पूर्णा मह्यं संजितो च स तत्त्वं ।
सप्ताहं पर्यंके सुखोपविष्टो
स्थितः मुनि शैल इवाप्रकंप्यो ॥
सप्तमे दिवसे नाथो निर्गतो व्याहरे गिरां ।
लोकधातुसहस्राणि विज्ञपेन्तो महामुनिः ॥
सुखो विपाको पुण्यानां अभिप्रायश्च ऋध्यति
क्षिप्रं च परमां शान्तिं निर्वृत्तिं चाधिगच्छति ॥

समाप्तं विजिताविस्य वैदेहराज्ञो जातकं ॥

एवं मया श्रुतमेकस्मिं समये भगवतो शिष्यो आयुष्मानानन्दो मगधेषु चारिकां [273b] चरमाणो महता भिक्षुसंघेन सार्धं पंचहि भिक्षुशतेहि येन मगधानां राजगृहं नगरं तदवसारि तदनुप्राप्तः तत्रैव विहरति वेणुवने कलन्दकनिवापे ॥ तेन खलु पुनः समयेन आयुष्मतो आनन्दस्य त्रिंश सार्धविहारिका शिक्षां प्रत्याख्याय दौर्बल्यमाविष्कृत्वा हीनायावर्तन्ति कामेहि ॥ अश्रोषी आयुष्मां महाकाश्यपो आयुष्मतो आनन्दस्य त्रिंश सार्धविहारिका शिक्षां प्रत्याख्याय दौर्बल्यमाविष्कृत्वा हीनायावर्तप्रवृत्ता कामेहि ॥ अथ खल्वायुष्मान्महाकाश्यपो येनायुष्मानानन्दस्तेनोपसंक्रमित्वा आयुष्मता आनन्देन सार्धं संमोदनीयां कथां संमोदयित्वा सारायणीयां कथां वीतिसारयित्वा एकान्ते निषीदि । एकान्तनिषण्णो आयुष्मां महाकाश्यपो आनन्दमेतदवोचत् ॥ पृच्छेम वयमायुष्मन्तमानन्दं किंचिदेव प्रदेशं

1. B evaksha° C °pûrṇṇo vayaṁ sâji° B °rṇṇâ vayasâji° BC °sa tathâ saptâ°. — 3. BC °khopravishṭo° B °ni maula ivâ° C °sthito muni maura icâprakaṁpyo | . — 5. B °se nâthe nirga°.

6. B °dhâtûsaha °jñapyanto°. — 7. BC °pâkapuṇyâ ° çca rishyati | . — 9. C || iti çrî-mahâvastuavadâne vijitâvi vaideharâjno jâtakaṁ samâptaṁ || . — 10. B °çrutaṁm eka° M °kasmin samaye° B °samaya bha° M °bhagavân râjagṛihaṁ nagaraṁ tad avasâri tad anuprâptaḥ || tatraiva vihaṁrati || bhagavato çishyâ âyushmânando ° ṇo mahatâ bhikshusatebi yena ° prâpto tatra evaṁ viharati sma || tatra veṇu° B °ti | veṇuvane kalakani° M °kalaṇdakani°.

12. B °yena âshma° M °triṁçat sârddhaṁvihârikâ çishyâṁ pra° BM °khyâya çikshâdau° M °lyam âmishkṛi° BM °hinâyaṁ va° B °rttanti | kâmehi a°. — 14. B °shi | âyushmantaṁ ma° M açroshid âyushmân ma ° shmanto ânanda° B °shmantaṁ ânanda° M °triṁçat sârddhaṁvi ° khyâya daurbyalaṃ â° BM °hinâ(B °nâya)varttapravṛitti kâmehi || .

16. M °po âyushmân ânando nopa ° dayitvâ çâlâpaṇiyâṁ kathâṁ vîthiçâra° B °dayitvâ sarâpaṇiyâṁ kathâṁ vitiçâra° BM °shidi e°.— 18. BM °sharṇṇo â° M °yushmân mahâ°. — 19. M °cid evaṁ pra° BC °sacet me âyu° B °karonti pra°.

सचेत्सो आयुष्मानानन्दो वकाशं करोति प्रश्नव्याकरणाये ॥ एवमुक्त आयुष्मानानन्दो आयुष्मन्तं महाकाश्यपं एतद्वोचत् ॥ पृच्छायुष्मं काश्यप यदाकांक्षसि श्रुत्वा प्रवेदयिष्यामि ॥

एवमुक्ते आयुष्मान्महाकाश्यपः आयुष्मन्तमानन्दमेतद्वोचत् ॥ सचेदूमन्यसि आयुष्मनानन्द कति अर्थवशां संपश्यमानेन तथागतेनार्हता सम्यक्संबुद्धेन श्रावकाणां गणभोजनं प्रतिक्षिप्तं त्रिकभोजनं च अनुज्ञातं ॥ एवमुक्ते आयुष्मानानन्दो आयुष्मन्तं महाकाश्यपमेतद्वोचत् ॥ दूरतो खलु वयं आयुष्मन्महाकाश्यप आगच्छेम आयुष्मन्तो येन महाकाश्यप एतमर्थं परिपृच्छनाय ॥ साधु पुनरायुष्मतो एव महाकाश्यपस्य एषो अर्थो प्रतिभायतु ॥ एवमुक्ते आयुष्मान्महाकाश्यपो आयुष्मन्तमानन्दमेतद्वोचत् ॥ द्वे आयुष्मनानन्द अर्थवशां संपश्यमानेन तथागतेनार्हता सम्यक्संबुद्धेन श्रावकाणां गणभोजनं च प्रतिक्षिप्तं त्रिकभोजनं च अनुज्ञातं ॥ कतमे द्वे । यावदेव कुलानां च रक्षाये गुप्तीये फासुविहाराये पापानां च पक्षपरिच्छेदाये मा पापा आमिषेण गणं बन्धित्वा संघे कलहभण्डनविग्रहविवादं अधिकरणं कौकृत्यं उत्पादेन्सुः ॥ इमे खल्वायुष्मनानन्द द्वे अर्थवशां संपश्यमानेन तथागतेनार्हता सम्यक्संबुद्धेन श्रावकाणां गणभोजनं च प्रतिक्षिप्तं त्रिकभोज[274a]नं च अनुज्ञातं ॥ सो त्वं आयुष्मनानन्द इमाये पर्षाये नवाये दहराये तरुणाये इन्द्रियेष्वगुप्तद्वाराये भोजने अमात्रज्ञाताये पूर्वरात्रापररात्रं जागरिकायोगमननुयुक्ताये अगौरवाये सब्रह्मचारिषु स्थविरेषु नवकेषु मध्यमेषु कुलेषु चारिकां चरसि शस्यघातं विय मन्ये करोन्तो नायं कुमारको मात्रमाज्ञासि ॥ एवमुक्ते आयुष्मानानन्दो आयुष्मन्तं महाकाश्यपमेतद्वोचत् ॥ अपि हि मे आ-

1. M °kte ànandar àyushmantam̃ e ° cat sace° (l. 4). — 2. B °yushmâm̃ kâçya°. — 4[1]. B °paḥ âyushmantam̃m̃ â°. — 4[2]. BM °ced anyasi° B °yushmân â° BM °nando kati° M °thâgatânâ° B °tâ sam̃mya° M °çrâvakânâ gaṇa° BM °ptam̃ tika(M °ko)bho° M °jñâtam̃ ca | .

7. B °yam̃ âyushmân ma° M °yam̃ âyushmà kâçyapa àyushmantam̃ yena° B °shmantam̃ yena ° çyapam̃ e° M °çyapam̃ yeta ° pṛicchatâye | . — 8. BM °shmanto evam̃ ma°. — 10. BM °âyushmân ânanda(M °ndo) a° M °rthavaçâ sam̃ ° B °tà sam̃mya° M °tribhojanam̃ cânu°.

12[1]. B °dve yâ°. — 12[2]. B yàcad e° M yàvad evam̃ ku° BM °lânâm̃ ca lakshâye gupti(M °pti)ye cchâsu° BM °mâ pâpâ ami° M °ghe karabha° B °ṇḍalavigra° M °grahavishâdam̃° BM °detsuḥ ‖ . — 14. BM °yushmân â° M °rthavasâ sam̃ ° thâgatârha° B °rhatâ sam̃mya° M °kânâm̃ gaṇabhojanam̃ ca pravikshi° B °trikabhojanam̃ a°.

16. BM so tam̃ àyushmân â° M °rshâye(?)tâye da ° ṇâye dri(?)driyeshva° B °ndriyeshu gu° M °athamàtra° B °trajñatâ° BM °yogam anu° M °madhyeme° B °carasi saçyaghâ° M° ghâṭam̃ vi ° roto nà°. — 20. BM °ndo âyushmantam̃ mahâ° M °si vi paritâni jâ° BM ° ni ‖ atha° M °ca punar me â° BM °yushman ma° M °çyapaḥ ku ° ritavya manyàsi | .

युष्मन्महाकाश्यप शिरसि पि पलितानि जातानि अथ च मे पुनः आयुष्मान्महाकाश्यपो कुमारवादेन समुदाचरितव्यं मन्यति ॥ द्वितीयकं तृतीयकं पि आयुष्मां महाकाश्यपो आयुष्मन्तं आनन्दमेतदवोचत् ॥ तथा त्वमायुष्मनानन्द इमाये परिषाये इन्द्रियेष्वगुप्तद्वाराये भोजने अमात्रज्ञाताये पूर्वरात्रापररात्रं जागरिकायोगमननुयुक्ताये अगौरवाये सब्रह्मचारीहि स्थविरेहि नवकेहि मध्यमेहि कुलेहि चारिकां चरसि शस्यघातं विय मन्ये करोन्तो न चाहं कुमारको मात्रमाज्ञासीत् ॥ द्वितीयकं तृतीयकं पि आयुष्मानानन्दो आयुष्मन्तं महाकाश्यपमेतदवोचत् ॥ अपि हि मे आयुष्मन्महाकाश्यप शिरसि पलितानि जातानि अथ च पुनर्मे महाकाश्यपो यावत्तृतीयकं पि कुमारकवादेन समुदाचरितव्यं मन्यति ॥

तेन खलु पुनः समयेन स्थूलनन्दा भिक्षुणी आयुष्मतः आनन्दस्य अनतिदूरे स्थिता अभूषि ॥ अथ खलु स्थूलनन्दा भिक्षुणी आयुष्मन्तं महाकाश्यपमेतदवोचत् ॥ किं पुनरार्यमहाकाश्यपो अन्यतीर्थिकपूर्वो समानो आर्यमानन्दं वैदेहमुनिं भगवतो उपस्थायकं भगवतः सन्तिकावचरं भगवतो संमुखं धर्माणां प्रतिग्रहेतारं यावत्तृतीयकं पि कुमारवादेन समुदाचरितव्यं मन्यति ॥ एवमुक्ते आयुष्मान्महाकाश्यपो आयुष्मन्तं आनन्दमेतदवोचत् ॥ सा हि नूनायं आयुष्मनानन्द भगिनी अस्मरमाणरूपा भाषति । किं पुनः आर्यो महाकाश्यपो अन्यतीर्थिकपूर्वो समानो आर्यानन्दं वैदेहकमुनिं भगवतो उपस्थायकं भगवतो सन्तिकावचरं भगवतो संमुखं धर्माणां प्रतिग्रहेतारं यावत्तृतीयकं पि कुमारकवादेन समुदाचरितव्यं मन्यति ॥ एवमु[274b]क्ते आयुष्मानानन्दो आयुष्मन्तं महाकाश्यपमेतदवोचत् ॥ क्षम आयुष्मन्त महाकाश्यप बालो मातृग्रामो अव्यक्तो अकुशलो अविचक्षणो ॥ एवं यावत्तृतीयं पि आयुष्मान्महाकाश्यपो आयुष्मन्तमानन्दमेतदुवाच ॥ सा हि नूनायमा-

2. B dvitîyakatṛi°. — 3. BM °yushmân â° B °mâye indri° M °jâgarikâyo° BM °gam anuyu°hmacârihi(M °ribhi) sthavirâya nava(M °vame)ke° kâm̃ carati sasya° M°ghâṭam̃ viya manyam̃ karo° ham̃ kumâro mâtrajñâmâsit | B °kumârakâ mâtram ajñâsit |.

7. B dvitîyatṛi° M °pi âyushmânando â° çyapam̃m e°. — 8. BM °yushmân ma° M °çiram̃si paritâni jâ° B °jâtâni ‖ atha °M °ni ‖ ava punar me âyushmân mahâ° BM °manyeti ‖. — 10. B °sthûlâna° BM °bhikshûṇi M °shmato â° nabhidûte sthi°.

11. BM °bhikshûṇi°. — 12. B °punan ârya° M °çyapa anya° nim̃ bhagavato santikâm̃va° rmâṇâ pra° BM °hetvâram̃° M °yâvattṛiti° B °vyam̃ anyeti ‖ M °manyeti ‖. — 14. M °m ukto â°. — 15. BM °nûnam̃ yam̃ âyushmân â° ramâṇâm̃(B °nâm̃) rûpâm̃ bhâ°.

16. M °punar âryyama° BM °pûrve sa° M °ryânam̃ndam̃ vaidehamu° grahetvâ nam̃ yâ° B °hetvâram̃ yâ° kam̃ pi âyakam̃ kumâreka° M °rakâvâdena°. — 19¹. M °nandar âyu°. — 19². M °yushmam̃ ma° mâtugrâ° BM °çalo akshatrajño e°. — 20. M °yâvatṛitîyakam̃ pi° çyapaḥ â°.

21. BM sâ hi nu(M °nû)nam̃ yam âyushmân â° ramânarû°.

युष्मनानन्द भगिनी अस्मरमाणरूपा एवमाह । किं पुनरार्यो महाकाश्यपो आर्यानन्दं वैदेहमुनिं भगवतो उपस्थायकं भगवतो सन्तिकावचरं भगवतो संमुखं धर्माणां प्रतिग्रहितारं संमुखा येव यावत्तृतीयं पि कुमारकवादेन समुदाचरितव्यं मन्यति ॥ तृतीयकं पि आयुष्मानानन्दो आयुष्मन्तं महाकाश्यपमेतदुवाच ॥ क्षम आयुष्मन्महाकाश्यप बालो मातृग्रामो अव्यक्तो अकुशलो अचेतज्ञो ॥

एवमुक्ते आयुष्मान्महाकाश्यपो आयुष्मन्तमानन्दमेतदवोचत् ॥ न खलु पुनरहमायुष्मनानन्द अभिजानामि पूर्वं प्रव्रज्यायां प्रव्रजितो इति वहिर्धा अन्यं शास्तारं व्यवदिशितुमन्यत्रैव तेन भगवता तथागतेनार्हता सम्यक्संबुद्धेन । मह्यं खल्वायुष्मनानन्द पूर्वं प्रव्रज्यायामप्रव्रजितस्य एतदभूषि । संबाधो पुनरयं गृहावासो रजसामावासो अभ्यवकाशं प्रव्रज्या । तं न लभ्यं अगारमध्यावसन्तेन एकान्तसंलिखितमेकान्तमनवद्यं परिशुद्धं एकान्तपर्यवदातं ब्रह्मचर्यं चरितुं । यन्नूनाहं अगारस्यानगारियं प्रव्रजेयं ॥ स खल्वहमायुष्मं आनन्द अलूखं गृहावासं प्रहाय अशीतिं हिरण्यसुवर्णस्य शकटवाहानवहाय पञ्च च दासशतानि पंच च दासीशतानि पंच च पशुशतानि पंच च ग्रामक्षेत्रशतानि एकूनं च हलसहस्रं भद्रां कापिलेयां सुवर्णसीरकां अवहाय एकं कर्पासिकं पटपिलोतिकमादाय ये लोके अरहंतो तेषामुद्दिश्य अनुप्रव्रजेहं ॥ तेन खलु आयुष्मनानन्द समयेन न कोचिदन्यो लोके अर्हन्तो अभूषि अन्यत्रैव. तेन भगवता सम्यक्संबुद्धेन ॥ स चाहमायुष्मनानन्द तथा प्रव्रजितो समानो संवत्सरपरमाये रात्रीये अद्राक्षीद् भगवन्तमन्तराय राजगृहस्य-बहुपुत्रके चेतिये । दृष्ट्वा च पुनर्मे अद्वयसंज्ञा उदपासि सम्यक्संबुद्धं पश्येयं भगवन्तमेव पश्येयं स[275a]र्वज्ञं च पश्येयं भगवन्तमेव पश्येयं सर्वदर्शिं च पश्येयं भगवन्तमेव पश्येयं अपरिशेषज्ञानदर्शनं च पश्येयं भगवन्तमेव पश्येयं ॥

1. B °vaidoha ° kham̃ dhamâṇâm̃° M °khâye yâva° B °ritavya manyanti | . — 4[1]. M °nandar âyushmam̃tam̃ ma° B °ntam̃ kâçya°. — 4[2]. M °kâçya bâro mâtṛigrâmar avya° B °bâlâ mâtṛi ° çalo akshatrajño | M °lo akshayajño ‖ .

6[2]. BM °yushmân âna° B °jânâni pû° M °stâra vyam̃vadiçatu° B °nyatram̃ ca tena bha° nâhatâ sa ° ddhenâ ma°. — 8. M °yushmân ânanda pûrvapravrajyem apravraji°. — 9. M sam̃bodho° B °sâmâvâse a°. — 10. M °ntena ekântam̃ sam̃ ° dyam̃ ekântapari° BM °ddham̃ | e°.

11. M °syânagârariyam̃ pravrajyeyam̃ | . — 12. B °yushmam âna° M °yushmân ânanda alukham̃ gṛihavâsa pra° B °ya açitim̃ hi ° çakaṭâ vâhana vahâya pa° M °çakaṭavâhana vahâ pam̃ca va dâsa° B °traçatâni | ekûna ca ha° M °ni | ekona vam̃hala ° bhadram̃ kâ° rṇṇasam̃vikâ? ava ° B °rṇṇasamikâ ava° karshâçikam paṭa° M °rpâçikam̃° BM°ya ‖ ye° M °arhanto teshâm udiçya anupravṛijyeham̃ ‖ B °vrajyeham̃ ‖ .

16. BM °yushmân â° B °yena koci° M °yena na kvaci° BM °shi | a°. — 17. BM °yushmân â° M °jitah samâ° BM °no samvatsa° B° ntarâ ca râja° BM °ke cetiye | . — 19. B °udu-

स खल्वहमायुष्मनानन्द येन भगवांस्तेनोपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते अस्थासि एकान्ते स्थितो हमायुष्मनानन्द भगवन्तमेतदवोचत् ॥ शास्ता मे भगवां श्रावको ऽहमस्मि सुगते ॥ एवमुक्ते आयुष्मनानन्द भगवां मम एतदुवाच ॥ एवमेव काश्यप अहं काश्यप शास्ता त्वं च मे श्रावको । यो हि कोचित्काश्यप एवं सर्वचेतोसमन्वागतं श्रावकं सभित्वासम्यक्संबुद्धो एव समानो सम्यक्संबुद्धो ति प्रतिजानेय असर्वज्ञो येव समानो सर्वज्ञो ति प्रतिजानेय असर्वदर्शावी येव समानो सर्वदर्शावीति परिशेषज्ञानदर्शनो येव समानो अपरिशेषज्ञानदर्शनो ति प्रतिजानेय सप्तधा वास्य मूर्धा भवेया ॥ अहं खलु पुनः काश्यप सम्यक्संबुद्धो इति येव समानो सम्यक्संबुद्धो ति प्रतिजानामि सर्वज्ञो येव समानो सर्वज्ञो ति प्रतिजानामि सर्वदर्शावी येव समानो सर्वदर्शावीति प्रतिजानामि अपरिशेषज्ञानदर्शनो येव समानो अपरिशेषज्ञानदर्शनो ति प्रतिजानामि ॥ अभिज्ञाय अहं काश्यप श्रावकाणां धर्मं देशयामि न अनभिज्ञाय । सनिदानं अहं काश्यप श्रावकाणां धर्मं देशयामि न अनिदानं । सप्रातिहार्यं अहं काश्यप श्रावकाणां धर्मं देशयामि न अप्रातिहार्यं ॥ तस्य मे काश्यप अभिज्ञाय श्रावकाणां धर्मं देशयतो न अनभिज्ञाय सनिदानं श्रावकाणां धर्मं देशयतो न अनिदानं सप्रातिहार्यं श्रावकाणां धर्मं देशयतो नाप्रातिहार्यं करणीयो ओवादो करणीया अनुशासनीति वदेमि ॥ तस्मादिह ते काश्यप शिषितव्यं ॥ किं त्वहं प्रातिमोक्ष-

pâ° BM °ddhaṁ paçyeyaṁ bhagavatam eva(M °vaṁ) paçye ° ntam eva(M °vaṁ ca) pa ° darçî ca pa ° ntam eva(M °vaṁ ca) paçye° M °riçyesha°.

1. M °ham ânanda âyushmân â° B °yushmân â° M °gavânstenopasaṁkramitva bhagavato pâ ° si ekâṁtasthitaḥ aham â° BM °yushmân â° M °nandam eta°. — 3¹. B °vakaḥ 'ham asmiṁ su° C °ko ham a ° gataḥ ‖ . — 3². B °yushmân â°. — 4¹. M evaṁm evaṁ kâ° B °m evaṁ kâçyapo a° BM °ko yo°. — 4². M °hi kvaci° B °çyapam evaṁ° M °ceto si sa° B °tosamaṁnvâ° M °tvâsamyaksaṁbuddham eva° BM °buddheti prajâ° M °neya ‖ atha sarvajño yeva sarvajñeti° BM °pratijânâni ya (B °nomi yaṁ) asarvadarçivî ye ca samâ° M °rvadarçivî ti pratijânâmi | ye ca pariçeshaṁjñânadarçanâye ca samâno apariçeshajñânadarçano ti prajânâmi | a° (l. 11) B °rçâvîti apariçeshajñânadarçanâ ti pra ° dhâ câsma mûrddhnâ bha°.

8. B °pa samyaksaṁbodhi iti | ye ca samâ ° mi sarvajño ye ca samânâ sarva ° darçâvî ye ca samâ ° rçano yeva samâ ° prajânâmi | . — 11. M °dharma de° B °mi | na° M °mi nâbhi° B °ya sa°. — 12. M °dharma de° B °mi | na° M °anidâninaṁ B °naṁ sa°. — 13. B °prâhâryaṁ a° M °dharma de° B °mi | na° M °hârya B °ryaṁ ta°. — 14. BM °pa abhijñâye çrâ° M °dharma de° BM °jñâya sannidâ ° kâṇâṁ dhamaṁ(M °dharma) deçayato (M °toḥ |) ani° B °naṁ saṁprâ° BM °to na prâti° B °do araṇiyo anu° M °çâsatîti°.

17. M ki ca haṁ° B °prâtimomokshasamvara° M °kshasamvavṛinto vi ° mpannaṁ anumâ° B °anumâtreshvevadye° M °treshvabandheshu° BM °kshishyan ti çikshâ° M °ddheṇa pa° B °jivâ ‖ .

संवरसंवृत्तो विहरिष्यं आचारगोचरसम्पन्नो अणुमात्रेष्वावद्येषु भयदर्शावी समादाय शिक्षिष्यं ति शिक्षापदेषु कायकर्मवाचाकर्ममनोकर्मेण समन्वागतः परिशुद्धेन परिशुद्धाजीवो ॥ एवं ते काश्यप शिक्षितव्यं ॥ तस्मादिह ते काश्यप एवं शिक्षितव्यं ॥ किं त्वहं षट्सु इन्द्रियेषु गुप्तद्वारो विहरिष्यामीति आरक्षास्मृति निध्यापनस्मृतिः समव[275b]स्थाविहारी आदीनवदर्शावी निःशरणः प्राज्ञो अरक्षेन चेतसा समन्वागतः । सो चक्षुषा रूपं दृष्ट्वा न च निमित्तग्राही भविष्यन्न चानुव्यंजनग्राही । यतो अधिकरणं च मे चक्षुरिन्द्रियेण असंवृतस्य विहरन्तस्य अभिध्या दौर्मनस्यमनेके पापकाः अकुशला धर्माः चित्तं अनुप्रावेन्सुः तेषां संवराय प्रतिपदिष्यामि रक्षिष्यामि चक्षुरिन्द्रियेण संवरमापदिष्यामि इति ॥ एवन्ते काश्यप शिक्षितव्यं ॥ श्रोत्रेण शब्दां श्रुत्वा घ्राणेन गन्धां घ्रायित्वा जिह्वया रसां स्वादयित्वा कायेन प्रष्टव्यां स्पृशित्वा मनसा धर्मा विज्ञाय न च निमित्तग्राही विहरिष्यामि न चानुव्यंजनग्राही विहरिष्यामि । यतो अधिकरणं च मे भवेन्द्रियेण असंवृतस्य विहरतो अभिध्या दौर्मनस्यं अनेके पापकाः अकुशला धर्मा चित्तमनुप्रावेन्सुः तेषां संवराय प्रतिपदिष्यामीति रक्षिष्यामि मनिन्द्रियं मनिन्द्रियेण संवरमापद्यिष्यामीति ॥ एवन्ते काश्यप शिक्षितव्यं ॥ तस्मादिह काश्यप एवं शिक्षितव्यं ॥ किन्ति मे कायगता स्मृतिः सुखसहगता सततसमितं कायं न जहिष्यामीति ॥ एवं ते काश्यप शिक्षितव्यं ॥ तस्मादिह ते काश्यप एवं शिक्षितव्यं ॥ किन्ति अहं ये केचित्कुशला धर्मा पर्यापुणिष्यन्ति सर्वन्तं आत्मदमथशमथपरिनिर्वाणार्थं ति । एवं ते काश्यप शिक्षितव्यं ॥ तस्मादिह ते काश्यप एवं शिक्षितव्यं । किन्ति मे

3[1]. B °kâçya çi° M °tavyaḥ | B °vyaṁ ta°. — 3[2]. B °ha to kà°. — 4. BM kiṁ nvahaṁ° B °dvâre vi° M °shyâmi iti â° BM °dhyâpakasmṛitiḥ° M °samavasyâvi° dinavaṁ da° BM °ḥçaranaḥ(M °ṇa) prâjño ârakshe(M °ksha)ṇa ce° nvâgataḥ(M °to) so ca°.

6. B °ttagràhi bha° M °vishyaṁ | na cânuvyaṁjanaṁgrâbi ya° B °hî ya°. — 7. B °to abhikara° M °cakshveṁndriyena asaṁ° BM °vṛittasya vi° M °ntasya avidyâ daurmanasyâneke pâpakâç cittaṁ° BM °anuprâ(M °pra)vetsuḥ ‖ teshâṁ samvarâ° M °cakshvadriyena saṁ° B °ṇa samvaram âpayishyâ° M °mi dati | . — 10. B çrotena ça ° kâyenaṁ prashṭa° M °kâyena praspṛishṭa° BM °manasâṁ dharmâṁ(M °rmaṁ) vijñâ° M °ttagrâhi viharishyâmi | na vânu°.

12. BM °bhavendriyâṇâṁ saṁ(M °sa)hatasya vihato abhi° M °pâpakâ aku° nuprevetsuḥ | te° B °vetsuḥ te° BM °shâṁ samvarâye pratipa(B °padyi)shyâmîti ramishyâmîti (B °shyâmi manindriyaṁ) mani(B °nî)ndriyena saṁva(M °na sava)ram â°. — 15[2]. B °vyaṁ ki°.

16[1]. M kiṁti me° B kintu me° M °kâmaga°. — 17[1]. M °çyapa çi°. — 17[2]. M kiṁnti° rmâ paryayishya° B °ryâpraṇi° M °tmadamathaparinirmâṇâ° B °ti e°. — 19[1]. BM °kâçya çi°. — 19[2]. M °çyapa çi°. — 19[3]. M ki me caturhi parishyâhi° B °shyati ‖ a° M °hrî yâpaprâpyaṁ° sthitâni | B °tâni e°.

चतुहि परिषाहि भविष्यति अधिमात्रं प्रेम्नं च गौरवं च ह्री चापत्रप्यं च भावना च प्रत्युपस्थिता ति ॥ एवन्ते काश्यप शिक्षितव्यं ॥ तस्मादिह ते काश्यप शिक्षितव्यं ॥ किन्त्वहं पंचसु उपादानस्कन्धेषु समुदयास्तंगमान्पश्यी विहरिष्यं । इति रूपं इति रूपसमुदयो इति रूपस्यास्तंगमो इति वेदना इति वेदनासमुदयो इति वेदनास्तंगमो इति संज्ञा इति संज्ञासमुदयो इति संज्ञास्तंगमो इति संस्कारा इति संस्कारसमुदयो इति संस्काराणामस्तंगमो इति विज्ञानं इति विज्ञानसमुदयो इति विज्ञानास्तंगमो इति ॥ एवन्ते काश्यप शिक्षितव्यं ॥ स खल्वहमायुष्मन्नानन्द भगवता इमिना ओवादेन ओवादितो अष्टाहमेवाभूषि शैक्षो सकर[276ª]-णीयो नवमे येवाज्ञामारागये ॥

तस्य मे आयुष्मनानन्द भगवां इमिना ओवादेन ओवादित्वा उत्थायासनातो प्रक्रामि ॥ स खल्वहमायुष्मनानन्द भगवन्तं गच्छन्तं पृष्ठिमेन पृष्ठिमं समनुबद्धो हं ॥ तस्य मे आयुष्मन्नानन्द भगवन्तं पृष्ठिमेन पृष्ठिमं समनुबद्धस्य एतदभूषि । अहो भगवां पुनर्मार्गादपक्रम्यान्यतरं वृक्षमूलं निश्राय तिष्ठे । प्रज्ञापयेयं अहं भगवतो कर्पासिकपटपिलोतिकसंघाटीं ॥ तस्य मे आयुष्मन्नानन्द भगवानिदमेवरूपं चेतसो परिवितर्कमाज्ञाय मार्गादपक्रम्यान्यतरं वृक्षमूलं निश्राय अधिष्ठासि ॥ प्रज्ञापयेदहमायुष्मनानन्द भगवतो कर्पासानां पटपिलोतिकसंघाटीं निषीदे भगवां प्रज्ञप्त एवासने ॥ निषद्य खल्वायुष्मन् आनन्द भगवां एतदुवाच ॥ सखिला

3[1]. BM kinvahaṁ° M °upâdanaska ° mupâdâyastaṁ° B °mudayâdastaṁ° M °shyaṁti°. — 3[2]. M iti rûpaṁ samu° B °paṁ i rûpasa ° danâ iti | vedanâsamu ° jñâ iti saṁjñâ iti saṁjñâ samudayo iti saṁstaṁga° M °râ iti saṁskârâsamudayo iti saṁskârâm astaṁgamo iti vijñânasamudayo iti vijñânâstasamudayo iti ‖.

7[1]. M evaṁ te kha°. — 7[2]. M °yushmân ânanda itinâ o° B °shi ‖ çai° M °shi | çikshâ karaṇîya na ca me° B °yo na ca me° BM °ye âjñâ°. — 10. B °yushmân â° M °yushmânanda bha ° tthâyâsanâmne pra°.

11. B °lvayam â° BM °yushmân â ° ntam prishṭime ° bandhe(M °ndho) haṁ ‖. — 12. B °yushmânn â° M °yushmân âna° BM °gavato(B °nto) prishṭimena prishṭhi(B °shṭi)-maṁ° B °bandhasya° M °bandha santad a°. — 13[1]. M °punah mârgâ° B °r mâgâd a° M °laṁ viçrâyati | ti° BM °shṭhe pra°. — 13[2]. B prajñepayeyaṁ | a° BM °rpâsikaṭâpilâtikasaṁ° M °ghâṭi | B °ṭiṁ nishi° (l. 16). — 14. M °me | âyushmâṁn â ° jñâya mâjñâd apa ° laṁ tiçrâya a°. — 16. M aprajñâ ° yushmân â ° rpâçânâ paṭapiloṭikasaṁghâti nishidet | bha° B °shida bha° BM °sane ni°.

17[1]. B °shadya | kha° M ° dya ‖ atha kha° BM °yushmân â°. — 17[2]. BM °khod ayaṁ (M °yai) kâçyapa karpâ(B °parkâ)çânâṁ paṭâ(M °ta)piloti(M °tika)saṁ° M °ghâṭi la° (l. 4) B °ghâṭi mṛidukâdayaṁ kâçyapa karpâsânâṁ paṭâpiloṭikasaṁghâti masinâdayaṁ kâçyapa karpâsânâṁ paṭâpilotikasaṁghâṭi sukhamâdâyaṁ kâçyapa karpâsânâṁ paṭapilotikasaṁghâṭi tanukâdayaṁ kâçyapa karpâsânâṁ paṭapilotikasaṁghâṭi° BM °lahu(M °ghu)kâdayaṁ(M °ya)

चारिकामनुबन्धेन्सु चरन्ते लोकनायके ॥
न तत्र क्षुधा पिपासा वा नापि च हानि वर्णिता ।
चारिकां चरमाणस्य शिखिस्य लोकनायके ॥
न तत्र शीतमुष्णं वा दंशा वा मशका पि वा ।
चारिकां चरमाणस्य शिखिस्य लोकनायके ॥
सो चारिकां चरित्वान विनयित्वा बहुं जनां ।
संबुद्धो परिनिर्वाये ऋषी क्षीणपुनर्भवो ॥

अथ खल्वायुष्मां शारिपुत्रो उत्थायासनातो एकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठापयित्वा येन भगवांस्तेनाञ्जलिं प्रणामयित्वा भगवन्तमेतदवोचत् ॥ भगवानपि भगवतो शिखिस्य समशीलो समप्रज्ञो बलेहि वैशारद्येहि बुद्धधर्मेहि । भगवतो पि एदृशा येव चारिका भविष्यति यथापि भगवतो शिखिस्य ॥ भगवां चारिकां चरे बहुजनहिताय बहुजनसुखाय लोकानुकंपाये महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च ॥

ततो करित्वा एकांसं प्रणामेत्वान अंजलिं ।
चारिकान्तत्र याचेसि शारिपुत्रो तथागतं ॥
एतस्य दानि समयो यं दानि भगवां पि हि ।
चारिकां प्रक्रमे शास्ता अनुकंपाय प्राणिनां ॥
याचिता भावितधर्मा शरीरान्तिमचारिणो [291a] ।
प्रकरेयु अवकाशं अनुकंपाय प्राणिनां ॥
इतो हमर्धमासेन करित्वान उपोषधं ।

1. M càcârikâm̃ caramànasya çikhisya lo° B °dhetsu ca°. — 2. M °pipâçâ shâ nâpi câhâ ° rṇṇitâḥ ‖ . — 3. M °mânasya çi°. — 4. BM °çîta ushṇam̃ vâ dam̃ço vâ ma°. — 5. M °mânasya çi°.

6. M sâ câ° B °tvâna nivekotṛi bahû jani sam̃° M °vinekotri ba°. — 7. M °ṛishi kshî° rbhavet ‖ B °rbhavâ ‖ . — 8. M °çâliputra utthâ° BM °ttarâm̃ sa° M °kshiṇa jânumam̃ḍalam̃° yena bhagavân tenâ°. — 10. M °jño carehi vai°.

11. M °pi yedṛiçâ° BM °ye ca cârikâm̃ bhavishyati | ya° B °sya bha°. — 12. M sâdhu bhagavân câ° BM °re | bahujanahi° M °pâya mahato janakasyâ°. — 14. M tataḥ ka° BM °kâm̃ça praṇetvâna(M °nam̃) am̃°. — 15. M cârikâm̃ tam̃tra yâvesi çâliputras tathâ° BM °gatâm̃ ‖ .

16. M °sya dânim̃ sa° B °samaye yam̃° M °vâm̃ hi pi câ°. — 17. M cârikâ prakrame | çâ° B °meṇâstâ anukam̃pâye prâ°. — 18. B °vitâmau çariyantimacâriṇo ye ka° M °vitâmaḥ çariro câm̃tima°. — 19. BM ye(M me) kareya ekâçam̃ anu°. — 20. BM °tvâna posha°.

चारिकां प्रक्रमिष्यामि अनुकंपाय प्राणिनां ॥
ततो च अर्धमासेन तं कृत्वान उपोषधं ।
चारिकां प्रक्रमे शास्ता अनुकंपाय प्राणिनां ॥
यं सो ग्रामं वा निगमं वा उपसंक्रमति गौतमः ।
तहिं तहिं समन्तजा प्रत्युपेन्ति चतुर्दिशं ॥
यं सो ग्रामं वा निगमं वा उपसंक्रमति गौतमः ।
स्थानस्य पुष्पिता वृक्षा संप्रवान्ति चतुर्दिशं ॥
यस्य यस्यैव वृक्षस्य मूले तिष्ठति गौतमो ।
सो सो मुंचति पुष्पाणि ओनमित्वा द्रुमोत्तमो ॥
यस्य यस्यैव वृक्षस्य मूले तिष्ठति गौतमो ।
सो सो मुंचति फलानि प्रतिपूर्णानि सर्वशो ॥
मानुषका च ये वृक्षा पुष्पाणि च फलानि च ।
चारिकांतानि दृश्येन्सु चरन्ते लोकनायके ॥
अमानुषा च ये वृक्षा पुष्पाणि च फलानि च ।
चारिकां तानि दृश्येन्सु चरन्ते लोकनायके ॥
ततो यं पृथिवी कम्पे ससमुद्रा सपर्वता ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
मन्दारवाणि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
महामन्दारवां पुष्पां देवास्संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
कर्कारवाणि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥

2. M °tam̃ ca kṛi° BM °tvâna po°. — 3. M °prakramishyâmi anukam̃pâya prâṇinâm̃ | tato ca arddhamâsena nam̃ na kṛitvâna poshadham̃ | cârikâm̃ prakrame° B °me ṇâsto a°. — 4. B °gauttamam̃ | . — 5. B tarhim̃ tahim̃ samanûjâ° M °pratyanti°.

6. B °gauttamaḥ | M °gauttamam̃ | . — 7. M sthânesya pu ° kshâ yam̃ pra° BM °çam̃ yasya°. — 8. B °kshasya pure ti° M °tishṭham̃ti gauttame | B °gauttamo | . — 9. M °ṇi ana°. — 10. BM °gauttamo | .

11. M °phalâṇi paripû°. — 12. BM mânuksha(M °shya)kâ° M °pushpaṇi° B °lâni ca cá°. — 13. BM driçyetsu(M °tsuḥ) carante lo°. — 14. M amânushyâ ca ye°. — 15. BM °driçyetsu(M °tsuḥ) ca°.

16. B °mudrasapa° M °mudraparvatâḥ || . — 17. M cârikâm̃ tâni driçyetsu cara°. — 19. M °caranto lo°. — 20. M °ndârapushpâṇi devâḥ sam̃pra°.

21. B °ke | mahâkarkâ° (*p. suiv. l. 1*). — 23. M °kâm̃ caramânasya°.

महाकर्कारवां पुष्पां देवाः संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
रोचमानानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
महारोचमानानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां प्रपिन्नस्य चरन्ते लोकनायके ॥
मंजूषकाणि पुष्पाणि देवास्संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
महामंजूषपुष्पाणि देवा संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
भीष्माणि च पुष्पाणि देवास्संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
महाभीष्माणि च पुष्पाणि देवास्संप्रकिरे तदा ।
चारिकाञ्चरमाणस्य चरन्ते लोकनायके ॥
समन्तगंधानि पुष्पाणि देवास्संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
महासमन्तगंधानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
परिजातानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
सुवर्णमयानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते [२९१ᵇ] लोकनायके ॥
रूप्यमयानि पुष्पाणि देवाः संप्रकिरे तदा ।

1. M mahâkarâravâm̃ pu°. — 2. M °kâm̃ varamânasya°. — 4. M cârinâm̃ caramâṇasya°. — 5. M °camânâ pushpâm̃ de°.

6. M °kâm̃ caramânasya°. — 7. M mam̃jusha ° devâḥ sam̃pra°. — 8. BM °kâm̃ caramânasya°. — 9. M °mam̃jusha ° devâḥ sam̃°. — 10. M °kâm̃ caramânasya° BM °caram̃te lo°.

11. M bhîshmâṇi pu ° devâḥ sam̃pra°. — 12. BM °mânasya°. — 13. M °shomâṇi pu ° devâḥ sam̃pra ° tadâḥ | . — 14. M cârikâm̃ caramânasya°. — 15. M °devâḥ sam̃pra°.

16. M °mânasya°. — 17. M °ntagam̃dhapushpâ°. — 18. M °mânasya varante°. — 19. B °jâtrâni°. — 20. M cârim̃kâm̃°.

22. BM °mânasya°.

चारिकां चरमाणस्य चरन्ते लोकनायके ॥
रत्नमयानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
चन्दनस्य च चूर्णानि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
अगुरुस्य च चूर्णानि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
केशरस्य च चूर्णानि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
तमालपत्रचूर्णानि देवास्संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
दिव्या च रत्नचूर्णानि देवास्संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
तूर्यकोटिसहस्राणि संप्रवाद्येन्सु अम्बरे ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
अन्तरीक्षस्मिं भेरीयो संप्रवाद्येन्सु अघट्टिता ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
चैलक्षेपाणि करेन्सु अन्तरीक्षे स्थिता मरू ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
नागराजा सुपर्णा च अभिक्रान्ता च मानुषाः ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
इमे पि बहवो यक्षा वर्णवन्तो यशस्विनः ।
चारिकामनुबन्धेन्सु चरन्ते लोकनायके ॥
इमे पि बहवो देवाः वर्णवन्तो यशस्विनः ।

1. M °mânasya°. — 3. M °mânasya°. — 5. M °mânasya°.

6. B agaru° M °sya va nûrṇṇâ°. — 7. BM °mânasya°. — 8. M °ca varṇṇâni°. — 9. M °mânasya°. — 10. B °rṇṇâ de° M °devâḥ saṁpra°.

11. M °mânasya°. — 12. M divyâ ratanacû° B °tnapûrṇṇâ° M °devâ saṁpra°. — 13. M °mânasya°. — 14. BM °dyetsu a°. — 15. M °mânasya°.

16. M antîkshe ca bhe° B °rîkshesmiṁ bhe° BM °dyetsu a°. — 17. M °mânasya rante°. — 18. M vairakshapâm akaretsuḥ antarikshe° B °retsu a° maru | M °maruḥ | . — 19. M °mânasya°. — 20. B °suvarṇṇasya atikrântâ ca manu° M °suvarṇṇasya atikrâṁtaç ca mâ°.

21. M °mânashṭa cara lo°. — 23. M cârikâṁ caramânasya ca° B °nubaṁdhetsu ca°.

चारिकामनुबन्धेन्सु चरन्ते लोकनायके ॥
त्रिसाहस्रा विभू देवा वर्णवन्तो यशस्विनः ।
चारिकामनुबन्धेन्सु चरन्ते लोकनायके ॥
षडाशीति सहस्राणि ब्राह्मणानां समागता ।
चारिकामनुबन्धेन्सु चरन्ते लोकनायके ॥
षडाशीति सहस्राणि गृहपतिनां समागता ।
चारिकामनुबन्धेन्सु चरन्ते लोकनायके ॥
न तत्र क्षुधा पिपासा नापि च हानि वर्णिता ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
न तत्र शीतमुष्णं वा दंशा वा मसकानि वा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
सो चारिकां चरित्वान विनेत्वा च बहुं जनां ।
उपागमे लोकनाथो शाक्यानां कपिलाह्वयं ॥

अथ भगवां न्यग्रोधारामे विहरति महता भिक्षुसंघेन सार्धं अष्टादशभिर्भिक्षुशतेहि ॥ अश्रोषी राजा शुद्धोदनो भगवान् कोशलेषु चारिकां चरमाणो महता भिक्षुसंघेन सार्धमष्टादशभिर्भिक्षुशते[292ª]हि येन कोशलानां नगरं तदनुसारे तदनुप्राप्तो तत्रैव विहरति न्यग्रोधारामे ॥ ते दानि सर्वे कपिलवास्तव्याः शाक्या शाक्यियिन्यश्च भगवतो दर्शनकामाः स्वकस्वकानि युग्ययानानि योजयन्ति । भगवतो दर्शनाय गमिष्यामः ॥ अश्रोषीत्खलु राजा शुद्धोदनो कपिलवास्तव्याः शाक्या शाक्यियिन्यश्च स्वकस्वकानि युग्ययानानि योजापयन्ति । न्यग्रोधारामं

1. B °ndhetsu ca° M °ndhetsuḥ ca°. — 2. M °hasro vi° B °srâbhibhû° M °devâḥ va°. — 3. M °kâm anuvante lo° B °ndhetsu ca° M °yakeḥ | . — 4. M °nâm̃ camâgatâḥ | . — 5. B °nubam̃dhetsu ca° M °nubam̃dhetsuḥ ca°.

6. M °patinâm̃ samâgatâḥ | . — 7. B °bandhetsu ca° M °badhetsuḥ ca°. — 8. M °pâçâ nâpi hâryyanta varṇṇato | B °nâpi hâyante varṇṇato | . — 9. M °mânasya°. — 10. M °çitam̃ usmam̃ vâ darçanâ maçakâni ca.

11. M °mânasya rante°. — 12. B °viksheptâ ca bahujanâm̃ | M °vitetâm̃ ca bahum̃ jânâm̃ | . — 13. M °nâm̃ çâkyamahvayam̃ ‖ . — 14. B °sârddham̃m ashṭada° M °sârddham ashṭâdaçehi bhikshusam̃ghehi B °tehi açro°. — 15. M °shît | râ° BM °koçareshu° M °gheṇa sârddha ashṭâ° B °rddham ashṭada ° tehi | ye° BM °sâre | tad anuprâpto(M°ptaḥ) tatrai ° ti ‖ kapilavastusmim̃ nyagro° B °râme te dâ°.

17. B °sarvam̃ kapi° M °sarva kapilavâstavyâ çâ ° kyayinâçra bha° B °rçane kâyâḥ svakâni yu° M °mâḥ svakâni yu°. — 19. M °stavyâ çâkyâ çâkyayim̃nyaç ca° B °çca | sva° M °nâni yâjâpa° B °nâni niyoyâpayanti | . — 20. B °maḥ | bha°.



गमिष्यामः भगवन्तं दर्शनाय ॥ तेन दानि कपिलवस्तुस्मिं घोषणा कारापिता ॥ न केनचित्प्रथमं भगवतो उपसंक्रमितव्यं । सर्वेहि मया सार्धं न्यग्रोधारामं गन्तव्यं भगवन्तं दर्शनाय ॥

अथ खलु राजा शुद्धोदनो सार्धं स्वकेनान्तःपुरेण यशोधराप्रमुखेन सार्धं कुमारामात्येहि च सार्धं शाक्येहि सपरिवारेहि सार्धं धनुग्रहरथाश्वारोहेहि सार्धं वणिजसार्थवाहेहि सार्धं श्रेष्ठिप्रमुखेहि निगमेहि महता राजानुभावेन महता राजर्द्धीये कपिलवस्तुतो नगरातो निर्यासि भगवन्तं दर्शनाय ॥ राजा शुद्धोदनो कपिलवस्तुतो चतुर्घोटेन अश्वरथेन निर्धावति शाक्यमण्डलपरिवृतो न्यग्रोधारामं भगवन्तं दर्शनाय । भिक्षुसंघो च कपिलवस्तुनगरं पिण्डाय प्रविशति । राज्ञा शुद्धोदनेन भिक्षुसंघो दृष्टो ॥ सो दानि अमात्यानां पृच्छति ॥ भो भणे अमात्या किं इमानेदृशा परिव्राजका ॥ अमात्या आहंसुः ॥ देव कुमारस्य एषो परिवारो ॥ सो दानि तां कृशशरीरां भिक्षू ऋषिप्रव्रजितां उरुबिल्वाकाश्यपनदीकाश्यपगयाकाश्यपशारिपुत्रमौद्गल्यायना च सपरिवारा तपतपितशरीरां मुण्डा पात्रपाणीं दृष्ट्वा परिदीनमुखवर्णो संवृत्तो ॥ मम पुत्रो यदि न प्रव्रजिष्यति राजा भविष्यति चक्रवर्ती चातुर्द्वीपो विजितावी धार्मिको धर्मराजा सप्तरत्नसमन्वागतो राजसहस्रपरिवृतो मेदिनीमध्यावसिष्यत् । इममेदृशं परिवारं निवर्तेथ अहं न तं इच्छामि द्रष्टुं ॥ ते दानि भिक्षू अमात्येहि वुच्चन्ति ॥ राजा वो न द्रष्टुकामो निवर्तेथ ॥ ते दानि निवर्तित्वा न्यग्रोधारामं गताः ॥ न भो भगवन् राजा शुद्धोदनो इच्छति द्रष्टुं । अस्माकं च दृष्ट्वा प्रतिनिवर्तितो ॥ भगवानाह ॥ इमहिं [292b] एव सर्वस्य भिक्षुसंघस्य आहारं भविष्यति ॥ उरुबिल्वाकाश्यपो भगवन्त-

1. M °pitâḥ na°. — 2. B °cin pratha°. — 4. B °svakenântapureṇa° M °ṇa yaçàdharâpramukhena sârddhaṁ kumâ° tyehi ca sârddha çâkyehi ca saparivârehi sârddhaṁ dhenu° BM °grahârathâ° B °rohehi sârddhaṁ çre° M °sârddha çre° B °çreshṭipramu° M °khehi naigame° B °mehi mahato râjânubhâvena mahatâ râjârddhiyena | kapi° M °jariddhîye° bhagavanâṁ da°.

7. BM °stuto câtu° M °rddhâvanti | câ°. — 9[1]. B °saṁghâ ca° M °saṁghe ca °piḍâya°. — 10[2]. M °imâm edṛi° BM °çâ pravrajyâ ‖.

11[1]. M °âhatsuḥ. — 12. B °kṛiçaçarîrânâṁ bhi° M °bhikshum ṛishi° B °tâṁ | uru° M °tâṁ | uluvilvâkâçyapaçâlipu° BM °mauṅgalyâ° B °rivârâḥ ta° M °vârâ tapatappitaça° B °tapatapyitaça° M °dînamukhyâvarṇṇasaṁ° B °varṇṇâ saṁvṛitto ma°. — 14. BM °jishyati | râjâ° M °nvâgataḥ râjasa° B °to râjâsa° M °vṛitaḥ me° BM °dhyâvasishyan |.

16. M °dṛiçyaṁ parivâraṁ tivattetha rathaṁ ta naṁ i° B °rttetha ‖ rathaṁ na°. — 17[1]. BM °bhikshu a° M °vuccati | B °vuccati |. — 18[1]. M °nivarttetvâ° B °râmagataḥ ‖. — 18[2]. M °icchami dra°. — 19[1]. M °dṛishṭavâ pra° BM °rtitto ‖. — 19[3]. M imehi e°. — 20. BM âyushmân uru°.

मामन्त्रयति ॥ गच्छामि भगवन् राजानं शुद्धोदनं निवर्तेमि ॥ भगवान्नाधिवासेति ॥ नदीकाश्यपो पि गयाकाश्यपो पि उपसेनो पि सर्वे ते महर्द्धिका भिक्षू भगवन्तं याचेन्ति ॥ गच्छाम भगवन् राजानं शुद्धोदनं प्रसादेमः यथा भगवन्तमुपसंक्रमेय ॥ भगवान्तेषां पि नाधिवासेति ॥

अथ खल्वायुष्मतो महामौद्गल्यायनस्य एतदभूषि ॥ कं भगवानाकांक्षति भिक्षुं यो राजानं शुद्धोदनमभिप्रसादेया ॥ अद्राक्षीत् महामौद्गल्यायनो दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेन भगवतो चित्तं कालोदायिस्मिं भिक्षुस्मिं प्रतिष्ठितं । कालोदायी भिक्षु राजानं शुद्धोदनमभिप्रसादयिष्यति ॥ दृष्ट्वा च पुनः येनायुष्मां कालोदायी तेनोपसंक्रमित्वा आयुष्मतो कालोदायिस्य एतदुवाच ॥ लाभा ते आयुष्मं उदायि सुलब्धा लाभा यस्य ते शास्ता आकांक्षति उदायी भिक्षु राजानं शुद्धोदनं अभिप्रसादयिष्यति । अस्ति अन्ये स्थविरस्थविरा भिक्षू याचन्ते न लभन्ति । त्वं गच्छ आयुष्मन् उदायि राजानं शुद्धोदनं अभिप्रसादेहि ॥ एवमुक्ते आयुष्मां कालोदायी आयुष्मन्तं महामौद्गल्यायनमेतदुवाच ॥ दुरासदा आयुष्मं महामौद्गल्यायन राजानः क्षत्रिया मूर्धाभिषिक्ता जनपदस्थामवीर्यप्राप्ता ॥ सय्यथापि नामायुष्मं महामौद्गल्यायन समिद्धो महाग्निस्कन्धो पुरुषस्य दुरासदो भवति उपसंक्रमणाय एवमेवायुष्मं महामौद्गल्यायन राजानो क्षत्रिया मूर्धाभिषिक्ता जनपदस्थामवीर्यप्राप्ताः दुरासदा उपसंक्रमणाय ॥ सय्यथापि नामायुष्मं महामौद्गल्यायन कुञ्जरो षष्टिहायनो दुरासदो भवति उपसंक्रमितुं एवमेवायुष्मं महामौद्गल्यायन क्षत्रिया मूर्धाभिषिक्ता जनपदस्थामवीर्यप्राप्ताः दुरासदा उपसंक्रमणाय ॥ सय्यथापि नामायुष्मं महामौद्गल्यायन सिंहो मृगराजो दाठी बली केशरी मृगाधि-

1[1]. M °gava râjâ° B °rttemi bha°. — 1[2]. BM °gavâ nâdhi°. — 2. BM nadikâçyapo âha ‖ ga° M °rddhiko bhikshur bhagava° BM °centi gacchâ°. — 3. B °demaḥ | ya° M °meyaḥ. — 4. M °teshâm api tâdhi°. — 5[1]. BM °mauṅgalyâ° M °nasyaita°. — 5[2]. B kiṁ bha° M kittaga° B °ti | bhikshû yo° M °bhikshu yo° B °deyâ a°.

6. B °kshit ‖ ma° M °kshin mahâ° BM °mauṅgalyâ° B °kena | bhagavatâ ci° M °gavatâ cintaṁ kâ°. — 8[1]. M °dâyi bhikshuḥ râjânaṁ abhi°. — 8[2]. M °puna yenâyushmân kâlodâyi te° B °dâyîn teno°. — 9. B lâbhâ te yushmaṁ° M °âyushmân udâyi sulabdhalâbhâ ya° B °kshati | udâyî bhi° M °ti udâyi bhi°.

11. M °bhikshur yâcanti na labhante B °nti tvaṁ°. — 12[1]. BM °yushmân u° M °dâyi râ°. — 12[2]. M °yushmâ kâ° BM °mauṅgalyâ°. — 13. M °yushmantaṁ ma° BM °mauṅgalyâ° M °jâno kshetri° B °naḥ kshetri° M °prâptâḥ ‖. — 14. B °mâyushmantaṁ ma° BM °yana imasya ma° M °mahân agniskaṁdho° BM °râsadâ bha° M °kramanâya° BM °vam evâsmiṁ ma° M °yanaḥ râjâno kshetri° shikto ja°.

17. *Omis par* M. B °nâmâyushmaṁ mahâmauṁgalyâyana kuñjaro shabâ° tuṁ | e° mauṅgalyâyanaḥ ksha° kramanâya ‖. — 20. BM °nâmâyushmaṁ mahâmauṅgalyâyana siṁho mahârâjo(M °jâ) dâtî ba° M °dhipati durâsadâ bhavatî purushasyo° B °ti | pu°

पतिर्दुरासदो भवति पुरुषस्योपसंक्रमणाय एवमेवायुष्मं महामौद्गल्यायन राजानः क्षत्रिया मूर्धाभिषिक्ता जनपदस्थामवीर्यप्राप्ताः पुरुषसिंहा दुरास[293ª]दा भवन्ति उपसंक्रमणाय ॥ सय्यथापि नामायुष्मं महामौद्गल्यायन शार्दूलो ओलीनकायो गुरुदर्शनो दुरासदो भवति पुरुषस्य उपसंक्रमणाय एवमेवायुष्मन्महामौद्गल्यायन क्षत्रिया राजानो मूर्धाभिषिक्ता जनपदस्थामवीर्यप्राप्ताः पुरुषशार्दूला दुरासदा भवन्ति उपसंक्रमणाय ॥ अथ खलु भगवानायुष्मन्तं कालोदायिं गाथाय अध्यभाषे ॥

शृणु मम उदायिभद्रा परमकुशलप्रसादानां त्वमग्रो ।
शाक्यकुलनन्दिजननं राजवरं लघु प्रसादेहि ॥
न हि अन्यो कोचि भिक्षु समर्थो राज्ञो प्रसादयितुं चित्तं ।
नान्यत्र त्वया उदायि सभागचरितेन भगवतो ॥
भूतपूर्वं उदायि अतीतमध्वानमभू भूमिपती ।
नामेन सत्ववर्धनो विघुष्टशब्दो धरणिपालो ॥
धार्मिको धर्मराजा संपूजितः प्राणकोटिनयुतेहि ।
धर्मेण इमां वसुमतिं समुद्रपर्यंतां अनुशासे ॥
तस्य च अभूषि राज्ञो पुत्रो दर्शावी पूर्वबुद्धानां ।
नामेन मतिसारो गुणगणपरिचारितमती च ॥
कामेषु दोषदर्शी अनर्थिको सर्वकामभोगेषु ।
ओरुप्तकुशलमूलो गृहे न रमति विवेकरतो ॥

ṇayâ ‖ e° M °ṇâya | sayyathâpi nâmâyushmam̃ mahâmaudgalyâyana kum̃jaro shashṭluhâyano durâsadâ bhavati upasam̃kramitum̃ | evam̃m evâ° BM °mauṅgalyâ° M °jâno ksha ° prâptâ puru ° durâsadâ upasam̃kramaṇâya | evam evâyushmanta mahâmaudgalyâyanaḥ kshatriyà mûrddhnâbhishiktâ janapadasthâmavîryyaprâptâ purushasim̃ho durâsadâ bhavanti | .

3. B °nâmâyushmâm̃ mahâmauṅgalyâyana çârdûrâ oriṇakâyo° M °nâmâyushman mahâmauṅgalyâyano çârdûlo orinakâyo gurudarçamâ durâsado° B °rçanâ durâsado ° sya bhavati upasam̃kramaṇâya | evam anye câyu° M °ṇâya | evam̃m evâ° BM °mauṅgalyâ° M °triya mú ° shikto ja°.

6. M °gâthâ adhya°. — 7. B °dâyim̃ bha° BM °dakânâm̃ tvam evâgro çà°. — 8. B çâkulanandija° BM °laghum̃ prasâdehi na°. — 9. M °anye kvacid bhikshu° B °nyo kvacid bhikshu° M °râjñâ pra ° tum̃ citram̃ B °tum̃ | cittam̃ nâ°. — 10. B nânyayitu u° M °tra u° BM °carito bha(M °bhaga)vati ‖ .

11. M °dâyî atî ° abhûshi bhûmi° B °nam̃ abhûshi bhûmipatir nâme°. — 12. B °dharaṇipâlo dhâ° M °dharaṇîpâro. — 13. M °râjo sam̃pûjito prâ° B °jâ | sam̃ ° koṭina° BM °hi dha°. — 14. BM °rmehi i°. — 15. BM °pûrva(B °rve) buddhânâm̃ nâ°.

16. B °mena sati° M °timâro gu° B °câritamati ca kâ° M °tîva kâ°. — 17. BM °rçi | a° M °narthako° BM °shu o°. — 18. M orûptakuçalo gri°.

तं अवच सत्यवर्धनो पुत्र भुंजाहि प्रणीतकामगुणं ।
वैश्रवणभवनसदृशे अमरभवनसन्निभे वेश्मे ॥
तं अवच मतिसारो दशांगुलिं अंजलिं प्रणामयित्वा ।
नैतानि धरणिपाल धनानि पण्डितस्य भाव्यानि ॥
अबुधजनसमर्थितानि सरागवशानि हि तानि विद्यन्ति ।
. . . . . . . . . . . . . . . . . . . . . .
किं कारणं अनन्धो अन्धस्य वशेन उत्पथं गृह्णे ।
वुह्यंतस्य वेलगतो कथं स्पृहेया अत्राणस्य ॥
बद्धस्य कथं मुक्तो वचनेन काराध्वमभिक्रमेय ।
विषमस्थस्य समागमं कथं स्पृहेया नरो विज्ञो ॥
प्रतिभासि मे नरपति अन्धो वुह्यन्तो चिरनष्टो च ।
वुह्यसि कामोघेन अहं च कामां जुगुप्सामि ॥
तस्य च बलवन्तस्य पितुनो आज्ञाये स मतिसारो ।
प्रव्रजे जहित्व राज्यं कुमारो कामां च अनपेक्षो ॥
उरगो वा जीर्णत्वचं पङ्कखेटपिण्डमिव त्यजे राज्यं ।
सागरान्तमहिं सर्वां सो कामेषु दोषदर्शावी ॥
अतिक्रम्य कामधातुं मतिसारो ब्रह्मविहारमाचरे ।
. . . . . . . कुमारो ब्रह्मत्वगमनाये ॥
प्रव्रजितस्मिं कुमारे अनुव्रतो स्य पुरोहितकुमारो ।
नामेन सोमदत्तो अनुप्रव्रजेसि मतिसारं ॥

1. BM tam ava° B °putrañ bhuñjati pra° M °putrañ bhuñje praṇitakâmâ guṇa B °kâmâ guṇañ vai°. — 2. B °ṇabhavane sadṛçe ca a° M °çena a°. — 3. M °guliñ pra°. — 4. B vaità° M nañ tà° BM °dharaṇipâ° B °sya bhavanti | M °sya bhavati | . — 5. BM °janasamantâ(M °ntâti) sarâgavaça(M °vasa) hi tàni vijñe(M °jñape)nti || kiñ°.

7. M °ṇañ anondho agasya vasena u° BM °gṛihne vu°. — 8. B °yâ | attâṇasya ba° M °yâ | antànasya. — 9. BM bandhasya° M °vacanasya kàrañhvañ | a° B °kàrâhvañ | a° ya vi°. — 10. M visbamasya ° thañ naro spṛihe na vijña B °spṛihe naro vijña pra°.

11. M °si mo na ° yuhyo cira° B °vuhyañ(*ou* jyañ) cira°. — 12. B °moghe ca a° M °moye ca kâmâñ cugupsyasi | . — 13. M tasya ca pakhantasya pi° BM °tuno râjñasya matisàro pra°. — 14. M °vrajahitvañ râ° B °hitvañ râ ° ksho u°. — 15. B urogâ ca jîrṇṇo tva° M °go ca ji° BM °tyaje jahitva(M °tvañ) ràjyañ sâ°.

16. B °mahiñ sarvo sau kà° M sâgarântâ mahi sarvâñ 'sau kâ ° darçi B °darçi | . — 17. BM °krame kâ° M °dhâtu mati° B °ro brâhmañ vihâro àcaye | ku° M °m âcaye | ku°. — 18. B °ro brâhma° M °ro brâhmatvañ ga° BM °nâye pra°. — 19. B °vrajito smiñ° M °jitatasmiñ kumâro anuvratasya purohitasya ku° BM °ro nâ°. — 20. BM °mena saumada° B °je sye matisâro pra° M °je | so matisâro.

प्रव्रजितस्मिं कु[293b]मारे पिता अकासि स तस्मिं अप्रसादं ।
गत्वान सोमदत्तो प्रसादयेसि धरणीपालं ॥
तत्किं मन्यसि उदायि मतिसारो अन्यः तेन कालेन ।
तेन समयेनहमेव अनर्थिको कामभोगेहि ॥
तत्किं मन्यसे उदायि अन्यो सो सत्यवर्धनो आसि ।
अयमेव सो नरपतिः शुद्धोदनो सो तदा आसि ॥
तत्किं मन्यसे उदायि अन्यो सो अनुव्रतो सोमदत्तो ।
तुवमेव सो अभूषि प्रसादये सत्यमहं नाम ॥
तस्मादिदानीं उदायि राजं शुद्धोदनं प्रसादेहि ।
भेष्यति महासमुदयो प्रसन्ने तस्मिं महीपाले ॥
भेष्यति अनन्तफलस्य उपचयः मरुमानुषाणां कुलपुत्र ।
राजवरप्रसादेन नरवरं त्वरितं प्रसादेहि ॥
संप्रति शाक्याधिपती अभिमानहतो वितर्कमथितो च ।
तिष्ठति विषमसमती गिरितटपतितो यथ नागो ॥
ओरोहरेषु कलकलो पुरुषो यथ राक्षसेन परिक्षिप्तो ।
नैवात्मानं न प्रजा जानति परमेव भूमिपतिः ॥
ऐश्वर्यहानिमनुस्मरन्तो ऐश्वर्यं च विचिन्तेन्तो ।
मम कासि अप्रसादं गत्वा त्वं लघु प्रसादेहि ॥

अथ खलु राजा शुद्धोदनो कपिलवस्तुस्य नगरद्वारातो प्रतिनिवर्तित्वा सर्वेण

1. M prajitasmiṁ kumâro pi° BM °açâsi ‖ sa° B °apramâdaṁ ga°. — 2. M °dayasi ° pâraṁ B °pâlaṁ ki°. — 3. BM kim anyasi | udâyi(M °yi) ma° M °anyo sa te° BM °lena te°. — 4. BM °samayena aha° B °m eva abhûshi a° M °m evâbhûshi | a° — 5. B °anyâ so ° âsi a°.

7. B kiṁ ma° M kim asya udâsi anyo so 'nu° B °dâyi anu° BM °tto tra°. — 8. B tvam eva° M tvam evaṁ mo abhûshi | pra° BM °nâma ta°. — 9. B tasmât kâcittaṁ u° M tasmât kâci idâî râjaṁ° BM °dehi bhe°. — 10. M °mudrayo prasâde ta° B °prasâde tasmin samudayo tasmiṁ ma° BM °le bhe°.

11. BM °ti | a° B °ntapâlam upacayaḥ ma° M °ntapâram upacayo marumanushyâṇâṁ° BM °putraṁ râ°. — 12. BM râjâ vara° B °sâdane° BM °hi saṁ°. — 13. B °kyâdhiti ‖ a° M °dhipatehi a° BM °mânaheto vi ° va ti°. — 14. BM °shṭhati(B °ti |) vishamamati gi ° go o°. — 15. M °lavato pu° B °yathâ râ° M °yathâ râkshese ° kshiptâḥ B °kshiptâ nai°.

16. BM °naṁ prajânâti param evaṁ bhû° M °pati B °patiḥ. — 17. BM aiçvaryâhâṇim anusmare ai° M °ryyaṁ ca deyaḥ vicintyanto B °ntento ma°. — 18. BM °kâçi aprasâ(M °pramo)daṁ gatvâ lahuṁ(M °ghuṁ) prasâdehi ‖ . — 19. M °çâkiyamaṁṇḍalena sârddha svakâyaṁ darça°.

शाकियमण्डलेन सार्धं स्वकायां दर्शनशालायां प्रत्यस्थासि ॥ तत्र राजा शुद्धोदनो शाक्या शाक्यायिन्यश्च आमन्त्रेसि ॥ महन्तातो पि ऐश्वर्याधिपत्या प्रभ्रंशित्वा कुमारो प्रव्रजितो । यदि न कुमारो प्रव्रजितो अभविष्य सो राजा भवे चक्रवर्ती चातुर्द्वीपो विजितावी धार्मिको धर्मराजा सप्तरत्नसमन्वागतो तस्य इमानि सप्त रत्नानि भवेन्सुः । तद्यथा । चक्ररत्नं हस्तिरत्नं अश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नं एवं सप्तरत्नं । पूरं चास्य पुत्रसहस्रं भवेत् शूराणां वीराणां वरांगरूपिणां परसैन्यप्रमर्दकानां । सो इमानि चत्वारि महाद्वीपा सागरगिरिपर्यन्ता अखिलानकण्टकां अदण्डेनाशस्त्रेण अनुत्पीडेन धर्मेण वाभिनिर्जित्वा अध्यावसिष्य राजान सहस्रेषु च परिवृतो भवेय तेषामस्माकं इतोतं चक्रवर्तिराज्यं अभविष्यत्ते वयं कुमारेण प्रव्रजितेन महन्तातो ऐश्वर्याधिपत्यातो भ्रंशिता: ॥

अथ खल्वायुष्मानुदायी न्यग्रोधा[294$^{a}$]रामातो वैहायसमभ्युद्गम्य राज्ञो शुद्धोदनस्य शाकियमण्डलपरिवृतस्य पुरतो तालमात्रं वैहायसमन्तरीक्षे अस्थासि ॥ अद्राक्षीद्राजा शुद्धोदनः आयुष्मन्तं उदायिं तालमात्रं वैहायसमन्तरीक्षे तिष्ठन्तं दृष्ट्वा च पुनः हृष्टो तुष्टो सौमनस्यजातो उत्थायासनातो एकांसमुत्तरासङ्गं कृत्वा येनायुष्मां उदायि तेनांजलिं प्रणामेत्वा आयुष्मन्तमुदायिं गाथाये अध्यभाषे ॥

कुतस्त्वमागच्छसि रक्तचीवर
केन त्वमर्थेन इहानुप्राप्तो ।
किं वाच आकांक्षसि त्वं उदायि
सुदुर्लभं सिद्धव्रतान दर्शनं ॥

1. BM °no çâkya çâ° M °yinyasya â° BM °mantresi ma°. — 2. B mahâmtato pi° M mahânto pi ° tyâ pâtayitvâ° B °tyâ pâtramsitvâ ku° M °jitaḥ B °to ya°. — 3. B °vishyam | so° M °vishyam so° B °kravartti câ° M °imâni sapta ratanâni bhavetsuḥ B °tnâni bhavetsuḥ ||. — 5². M °saptamam ratnam B °ptaratnam pu°.

6. B puri câsya° B °bhavet | çûrâṇâm varâṇâm° M °bhavet | çû ° rûpinâm pa ° pramârda° BM °kânâm so°. — 7. B imâm catvâ° M °dvipânâm sâgaramgiriparyantânâm akhilâm akaṇṭhakâm ada° BM °tpîḍadha° M °rmeṇa vâ abhijinitvâ° B °dhyâvaçishyam râjâ° M °sishyam | râjâ ° veyo teshâmm asmâ° B °stoptam cakra° BM °vishyan te vayam kumâ-(B °mâro)ṇa pra° M °mahatâto ai ° dhipatâto bhram°.

11. M °danasya kiyamaṇḍalasya pari°. — 13. B °kshid rârâ çu° M °dano âyushmantam udrâyi tâmla° B °udâyi tâla° M °rîksham tishṭhamtam dṛi° B °shṭhatam dṛi ° naḥ dṛishṭo° M °syajâtâ utthâ ° ekâmçam u° BM °ttarâmsaṅgam° M °yi netâmja ° tvâ âyushman udâyîm gâ°.

16. M kuto tvam â ° civarantena tvam a ° prâptaḥ B °pto kim°. — 18. B kim vâ tvam âkâmkshisi tvam° M kivânuprâptaḥ âkâmkshisi tvam udâyi su° B °dullabhâ siddha ° M °durllabhâ siddhadvratân darçanam ||.

लाभस्ते राष्ट्राधिपते शिरीमतो
यस्य तव पुत्र नराणमुत्तमः ।
तेजेन ओभासति सर्वलोकं
सहस्ररश्मीव उदेत्व मेदिनीं ॥

एवं दानि स्थविरेण उदायिना तालमात्रं वैहायसमन्तरीक्षे स्थितेन बहूनि बुद्धमाहात्म्यानि परिकीर्तितानि तानि च राजा शुद्धोदनो श्रुत्वा प्रीतो संवृत्तो ॥ सो दानि शाक्या शाक्यायिन्यश्च आमन्त्रयति ॥ सय्यथापि नाम वासिष्ठाहो सूर्यस्य अभ्युदेन्तस्य एतं पूर्वंगममेतन्निमित्तं यदिदं अरुणो उदायी नो सर्वसंशयच्छेत्ता सुगतस्य श्रावको ॥

बुद्धस्य पुत्रो परमार्थदर्शी
उपागतो शाक्यकुलं तदन्तः ।
प्रसादये सत्यमहं इत्येवं

. . . . . . . . . . . . .

आशाय कृष्यते क्षेत्रं बीजमाशाय वप्यते ।
आशाय वाणिजा यान्ति समुद्रं धनहारका ।
यो यस्य आशाय तिष्ठामि सा मे आशा समृध्यतु ॥
पुनर्पुनः क्षिप्र वपन्ति बीजं
पुनर्पुनः वर्षति देवराजः ।
पुनर्पुनः वर्धति बीजग्रामं
पुनर्पुनर्लाभं लभन्ति कर्षिका ॥

1. M râbhâstu râ° B lâbhastu râshṭhrâdhi° BM °to | ya° M °narâṇâm̃ uttanam̃ je° B °maḥ te°. — 3. M jeta na te bhâ° B °jena te bhâ° M °loke saha° B °kam̃ sarasra° M °raçmi iva udayati me° B °udeti me° BM °dinî | . — 5. M °ntarikshe ° hâtmâni pari° BM °tto so°.

7[1]. B °ni çâkyo çâ° M °ni çâkyo çâkyayi°. — 7[2]. B °nâma sarvâçishṭâ sû ° bhyuddenta° M °bhyuddanâttasya enam̃ pû ° m etam̃ pûrvatimittam̃ yam idam̃° B °n nirmittam̃ yad idam̃ âryodâyi° M °dam̃ âryya udâyino ° çayakshettâram̃ su ° vakye bu° B °vako bu°. — 10. BM °rthadarçino upâ(B °pa)gamo çâkyakulo tadanta(M °taratta)ra pra°.

12. B praçâdaye çâkyamahânty evam̃ | â° M °ye çâkyamarubhâvam̃ â°. — 14. BM °tram̃ vija(B °jam̃)m âçâya vâpyate ‖ . — 15. M âsâya vâṇijâ yâni sa° B °dhanahâyakâ | M °nabhârakâ.

16. M ye yasya âsâya tishṭhâmi | sâ me âsâ sa° M *transpose ici les lignes 1-4, p. 109, avant la ligne 17, puis répète la ligne 1, p. 109.* — 17. M °rpunar kshipra° BM °vayanti vijam̃(M °jam̃ |) puna° M °râjam̃ | . — 19. M °mam̃ | pu ° naḥ lâbham̃ labham̃ni ka°.

पुनःपुनर्याचनका उपेन्ति
पुनर्पुनः सत्पुरुषा ददन्ति ।
पुनर्पुनः सत्पुरुषा पि दत्त्वा
पुनःपुनर्स्वर्गमुपेन्ति स्थानं ॥
दुर्लभो पुरुषाजन्यो न सो सर्वत्र जायते ।
यत्र सो जायते वीरः तं कुलं सुखमेधति ॥
वीरो हि वै सप्त युगां पुनाति
यस्मिं कुले जायति भूरिप्रज्ञो ।
पितेव शाक्या नयति देवदेवो
त्वयापि जातो मुनि सत्यनामः ॥
शुद्धोदनो नाम पिता जिनस्य
बुद्धस्य माया किल नाम माता ।
या बोधिसत्वं परिहार्य कुक्षिणा
कायस्य भेदात्स्वर्गेषु मोदति ॥
सा मोदति कामगुणेहि पञ्चहि
इष्टेहि कान्तेहि बुद्धस्य माता ।
अतिरिव ...... पुण्यकामा
परिवारिता अप्सरसां गणेहि ॥
पुत्रस्य बुद्धस्य असह्यतायिनो
अंगीरसस्याप्रतिमस्य तायिनो ।
प्रीतः पिता हर्षित एष शाक्य
[294b] धर्मेण त्वं गौतम आर्यको सि ॥

राजा आह ॥

यस्यान्तिके प्रव्रजितो सि भिक्षु
अज्ञाय सो चरति ब्रह्मचर्यं ।

1. B °r yâcakâ u° M punarpu°. *Dans la répétition de ce vers* M *lit :* punarpunaḥ yâ ° upeti. — 3. BM °rushehi datvâ(M °tvâ |) punaḥ° M °naṁ | pu°. — 5. M durllabho°.

6. M °viro taṁ° BM °m evati ‖. — 7. M °purâti yasmiṁ° B °jâyate bhûriprajño pi° M °prajñâḥ pi°. — 9. M pite çâkya na ° vadevâḥ tvayâ hi yâto ° nâmo | .

13. BM °rihârya(M °hâya) nâpi so kukshi°. — 15. M so mo°.

17. BM °riva pu ° psarasaṁ ga°. — 19. BM putresmiṁ bu° M °aṁgâra° BM °rasasya pra°.

21. BM pituḥ pitâ(B °to) me tvaṁ si(M °mi)tum esha ° rmeṇa gauttama° M °komi ‖. — 24. M °vrajite si° BM °so brahmacaryaṁ so°.

न सो भीतो नापि भयं उपेति
एको पि सो रमति वृक्षमूले ॥

उदायी आह ॥

यस्यान्तिके प्रव्रजितो सि राज
अज्ञाय सो चरति ब्रह्मचर्यं ।
न सो भीतो नापि भयं उपेति
एको पि सो रमति वृक्षमूले ॥
एकं चरन्तं मुनिमप्रमत्तं
निन्दाप्रशंसासु अवेपमानं ।
सिंहो व शब्देषु असन्त्रसन्तं
वातं व जालस्मिं असज्जमानं ।
नेतारं अन्येषु अनन्यनेयं
भीरं जिनं द्राक्ष्य वयं वदेसि ॥
यं वेदयसि अनोमप्रज्ञं
मह्यं पुत्रं तस्य पिता ति ब्रूमि ।
पुत्रस्य तस्य मह्य पुत्रो भोति
भुक्त्वान भिक्षु हर पिण्डपात्रं ॥
एष्याम वयं अपि दर्शनाय
बुद्धं अनन्तवरं वितीर्णकांक्षं ।
लोके उदपासि स सत्वसारो
पुत्रं मह्यं यथा वदेसि भिक्षु ॥
भुक्त्वान भोजनं यावदर्थं
शुचिं प्रणीतं रसस्वादुपेतं ।

1. BM so bhî ° peti | e°. — 4. BM °râjâ çra°.

6. M na çobhito° B °bhayam u°. — 8. BM ekam varaṁ muni° M °ttaṁ | niṁdâpraçaṁçâsu aveyamânaṁ B °çaṁso aveyamâna siṁ°. — 10. BM °ho ca ça° B °asantasantaṁ° M °asantasantaṁ | vâtaṁ ca jâlosmiṁ asajyamânaṁ B °jâlesmiṁ°.

12. BM °yaṁ (M °yaṁ | yaṁ) bhirudinaṁ ° demi | . — 14. M °prajña mahyaṁ | pitâ ni me brumi B °hyaṁ pitâ ni krumi | .

16. BM °tahiṁ ma° B °bhuktvâ bhi° BM °bhuttkâ hi bhi° M °kshu hana pi°. — 18. M yasyâma° B esyâma° BM °vayaṁ pi° M °raṁ vivaraṁ vistîrṇnakâṁkshâ | B °raṁ vistîrṇnakâṁkshâṁ lo°. — 20. B °si satvasâro | pu° M °si satvamâra putro ma° BM °bhikshuḥ.

22. M guptvâ ca so bho° B bhuptkâ ca bho ° rthaṁ | çu° M °çucipra° B °rasaṁ svâdupetaṁ so° M °svâdrupetaṁ | .

सो प्रक्रमे पिण्डपात्रं गृहेत्वा
उपसंक्रमे येन जिनो अनेयो ॥
सो तं प्रदेशं उपसंक्रमित्वा
उपनामये पिण्डपात्रं जिनस्य ।
वन्दित्व पादां अवचि तथागतं
यास्यन्ति ते ज्ञातयो दर्शनाय ॥
एदृशां गुणां श्रुणित्व भूमिपालो
त्रिखुत्तंमुदानयति सुलब्धा लाभा ।
मह्यं अनन्ता यं त्रिसाहस्राय
लोकधातूये जिने जीवमाने
भविष्यति संभमो नायकेन ॥
संपुष्पिता द्रुमलता कुसुमावकीर्णा
आसेविता च द्विजसंघनिनादितेन ।
एवं पि मह्यं हृदयं प्रीतिसंकुसुमितं
श्रुत्वान पुत्रं मम सर्वगुणोपपेतं ॥

अथ खलु राजा शुद्धोदनः अन्यतरं राजामात्यमामन्त्रयति ॥ भो भणे अमात्य सर्वार्थसिद्धो कुमारो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धित्वा प्रवृत्तप्रवरधर्मचक्रो कपिलवस्तूपवनेषु अनुप्राप्तो । ततः पुत्रस्य सर्वार्थसिद्धस्य कुमारस्याभ्युद्गमनं करिष्यामि ॥ ततो कपिलवस्तुनगरे घोषणां कारापेहि । सर्वेहि शाक्येहि ब्राह्मणगृहपतिकेहि सर्वेहि च गान्धर्विकेहि सर्वेहि च श्रेणीहि सर्वेहि च शिल्पायतनेहि मया सार्धं सर्वार्थसिद्धस्य प्रत्युद्गमनं कर्तव्यं ॥ साधु महाराजेति ॥ सो राजामात्यो शुद्धोदनस्य प्रतिश्रुत्वा क्षिप्रमेव कपिलवस्तुनगरे चत्वरशृंगाटकअन्तरापण-

1. M so pakra° B °upanâmaye yena jane a° M °upanâmaye pimḍa° (l. 4). — 3. M °ye pimḍapâ° B °trami | ji° BM° sya va°. — 5. B °nditvâ pâ° BM °tam | paçyanti ° nâya imedri°.

7. BM imedri ° nitvâ bhûtipâlâ | trikhuttam (M°lo trishkrityam) u ° ti lâbhâ sulabdhâ- (M °bdha) ma°. — 9. BM mahyam anantâya. tri ° ya loke dhâtûya jîva° B °shyati | sam ° kena sam°.

12. BM °kusumitâ(B·°tâva) kîrnna âsevanti dvi ° ditâni ||. — 14. BM edriçam pi° B °mitam | çru° BM °tvâ putram sarvaguṇopetam ||.

16[1]. M °dano a°. — 16[2]. B ho bha° M ho bhaṇe astatya ° ksambodhi sambu ° lavastupavameshu anuprâptaḥ ta°. — 18. M tato pu ° nam karttavyam | . — 19[1]. M sâdhu mahârâjeti kârayati B °nâm kârayeti | . — 19[2]. M °grihapatehi so râjâ° (21[2]) B °ca gandharvi ° vyam sa°.

21[1]. B sâdhû ma°. — 21[2]. B °lavastum nagaram catva° M °lavastum mahânagaram catvaram çrimgâṭakam antarâyeṇa mu° B °ntarâyaṇamu°.

मुखेषु घोषणां कारयति ॥ भगवन्तो सर्वार्थसिद्धकुमारो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धित्वा कपिलवस्तूपवनेषु अनुप्राप्तो । [295a] ततो सर्वभवन्तेहि राज्ञा शुद्धोदनेन सार्धं भगवतो प्रत्युद्गमनाय गन्तव्यं ॥

शाक्यानां वंशगतो भेष्यति यो स्य त्राणं
सिद्धाभिप्रायो तृषभावविरक्तचित्तो ।
क्षीणाश्रवो विगतरागो समंतचक्षुः
द्रक्ष्यामथ द्वादशवर्षैं अनन्तप्रज्ञं ॥
आनंदभेरिरवं श्रुत्वा शाक्यराष्ट्रे
संगीतिं देवगणवादितं लुम्बिनीये ।
येन प्रतिज्ञा कृता बुद्धो भविष्यं लोके
सो एष्यति भूतवचनो विगतान्धकारो ॥
प्रक्रान्तो सप्तपदं यो इह लुंबिनीये
बोध्यङ्गसप्तरतनानि अबुध्ये येन ।
यो सिंहनादं नदते अहं लोके ज्येष्ठो
सो एष्यति परवादं प्रभंजमानो ॥
येनेदं अपकृतं गर्भशय्यं अशेषं
उच्छोषितो च से पुनः भवहेतुः सर्वं ।
उच्छोषिता तृषलता च दुःखस्य मूलं
सो एष्यति बंधप्रमोक्षं करोन्तो लोके ॥

ते दानि कपिलवस्तुतो शाक्या शाक्यायिन्यश्च तं घोषं श्रुत्वा क्षिप्रमेव राजकुलद्वारे

1. M bhavanto sarvâ° B °ttarâyà sammya° M °lavastuupava ° prâptaḥ. — 2. M tato sarve bhavante° BM °hi | râjâ çu° M °na sârddha bha°. — 4. BM çâkyânâm̃(M °vâm̃) çabdo gato bheshyati | jagasya trâṇam̃(M °sya ṛiṇâm̃) si ° yo tribhavâna vi(M °vân vi)ra ° tto kshi°.

6. B °kshuḥ dakshâm̃ atha° M °kshuḥ ukshâm atha° BM °rshehi anantaprajñâm ânam̃da°. — 8. BM °bherirava çrutvâ çâkyârâshṭram̃ sam̃gìti devatayava(M °yaca)hatam̃ lu° B °nîye ye°. — 10 M °kṛito bhavishyam̃ | lokeço bhavishyati bhû° B °vishyam̃ lo° BM °kâro yo pra°.

12. B °nto | sapta padâni yaḥ i° M °padâni | yo i° BM °ratnâni anubudhya(B °dhyo) tena yo°. — 14. BM °sim̃hanadìte aham̃° B °jyeshṭo so° BM °mâno ye°.

16. BM °dam̃ prakṛitâ garbbhaçayanam̃ navase(M °sa)ham̃ uposhitam̃ | (B °shishito) me punaḥ bha(M °nar bha)va° B °sarvam̃ u° M °sarvam uccho°. — 18. B ucchvopitvâ trishṇâlatâ jâlinî duḥ° M °shitvâ trishṇâlatâ jâlini duḥ° BM °ti bandhanapra ° karoti lo°. — 20. M °stuto mahânagarâto çâkyaçâkyayi° BM °dvâre sam̃nipatite sva(M °te | so) ku° B °hitapramukhâyâ brâhma° BM °çreshṭipramukhâ vaṇi° M °ggrâso sarve° B °kapirâvâ° M °vâstasyâ ga°.

सन्निपतिता सकुमारामात्या भटबलाग्रा पुरोहितप्रमुखा ब्राह्मणाः श्रेष्ठिप्रमुखो वणिग्ग्रामो सर्वे च ये कपिलवास्तव्या गन्धर्विका । तद्यथा चक्रिकवैतालिकनटनर्तकऋल्लमल्लपाणिस्वरिका शोभिका लंघका कुम्भतूणिका वेलम्बका द्विस्वलभाणका पंचवटुका गायनका भाण्डविका हास्यकारका भेरीशंखमृदंगपटहिका तूणवपणववेणुवल्लकीएकदर्शीवीणावाद्या च बहुवाद्यका च सर्वे राजकुलद्वारे सन्निपतेन्सुः । सर्वे च कपिलवास्तव्या श्रेणियो । तद्यथा सौवर्णिका हैरण्यिका प्रावारिका शंखिका दन्तकारका मणिकारका प्रस्तारिका गन्धिका कोशाविका तैलिका घृतकुण्डिका गौलिका वारिका कर्पासिका दध्यिका पूपिका खण्डकारका मोदककारका कण्डुका समितकारका सक्तुकारका फलवाणिजा मूलवाणिजा चूर्णकुट्टगन्धतैलिका आग्नीवनीया आविद्धका गुडपाचकाः खण्डपाचकाः शुण्ठिकाः सीधुकारकाः शर्करवाणिजा । एते चान्ये च बहुव्यवहारिका सर्वे राजकुले सन्निपतेन्सुः । सर्वे च कपिलवास्तव्या शिल्पायतना । तद्यथा लोहकारका ताम्रकुट्टा सुवर्णकारका तड्डुकारका प्रध्वोपका रोषिणो त्रपुकारका शीशपिट्टकारा जन्तुकारका मालाकारा पुरिमकारका कुम्भकारा चर्मकारा ऊर्ण[295b]वायका वरूथतन्त्रवायका देवतातन्त्रवाया चैलधोवका रजका शुचिका तन्त्रवाया चित्रकारका वर्धकिरूपकारकाः कालपात्रिकाः पेललकाः पुस्तकारकाः पुस्तकर्मकारका नापिता कल्पिका छेदका लेपका स्थपतिसूत्रधारका उभ्रकोष्ठकारका कूपखनका मृत्तिकावाहका काष्ठवाणिजा तृणवाणिजा स्तंबवाणिजा वंशवाणिजा नाविका औलुम्बिका सुवर्णधोवका मौष्टिका । एते चान्ये च उच्चावचा जनता हीनोत्कृष्ट-

2. B °thâ ca kritra te tali° M °ca kriḍate tarikanaṭa ° pâṇitvaritvariçobhi° BM °mbhatuṇikâ velam̃ba(M °veláçu)kâḥ dvistri(M °dvitṛi)lâ ° ṭukâ çâya° BM °dam̃gapaṭa(B °ṭâhi)kâ tûṇapaṇavavîṇa(M °vakînâ)vallakiekadarçivînâ ete vâdye ca ba ° dyakânâm̃ sarve râ° B °nnipatitetsuḥ | sa° M °nnipatetsuḥ sa°.

6[1]. M °lavâstuvâ çreṇiyo ‖ B °lavastuvyâ çreshṭiyâ ‖. — 6[2]. M °sauvarhikâ hai ° prastârakâ gandhikâ nâvi° B °ndhikâ koṇâvikâ tai° M °gaurikâ vâ° BM °rpâsika dadhyi° B °modakâna° M °moḍakârakâ kam̃drukâ samitakârakâ çaktu° B °gulapâcakâḥ kha° M °ṇḍapâcakâḥ çum̃ṭhipâcakâḥ sim̃dhurakârakâ ça° B °sidhûkârakâḥ ça° M °rkkaravâṇijâḥ.

11. B °patetsuḥ ‖. — 12[1]. M °yatanâḥ |. — 12[2]. M °lohakârakâ mâmra° BM °ddhu(M °ddhura)kârakâ prabdhopa(M °pradhvopra)kâ roshiṇo tra(M °ḍa)kârakâ çîtapittitâ jantu(M °ttikâ jam̃tu)kârakâ mâlâkârâ(M °lâkârakâ) purimakârakâ kumbha(M °rakâm̃ kum̃bha)kârâ(M °rakâ) carmakârâ turṇṇa(M °râm̃ tuḍa)vâyakâ varûṭâvetra vâ° M °cairadhovakâ raja° B °cailadhocakâ raja ° kârapatri° M °citrakârakâ vaddhakirûpakârakâḥ kâlapatri ° rmakârakâ nâvikâ kalpikâ cchedakârakâ sthapatisûrakârakâ oḍḍâ goshṭapûrakâ° B °sthapatisukârakâ occhragoshṭapûrakâ° B °ttikâvâhakâ kâshṭavâṇijâ tṛi° M °tṛiṇavâṇijâ vam̃çavâṇijâ stam̃bavâṇijâ nâvikâ âluvikâ su° B °vikâ âluvikâ su° M °dhovikâ maushṭikâḥ. — 19. BM °uccavacâ° M °kuledvâ° BM °patetsuh ‖.

मध्यमा सर्वे राजकुलद्वारे सन्निपतेन्सुः ॥ एवं दानि राजा शुद्धोदनो इमेन च जनकायेन अन्तःपुरेण सार्धं कुमारामात्येहि परिवृतो धनुकरथिकहस्त्यारोहेहि सार्धं चतुर्घोटरथमभिरुहित्वा श्रेष्ठिप्रमुखो निगमो सार्थवाहप्रमुखो वाणिजग्रामो पुरोहितप्रमुखा ब्राह्मणा अष्टादश श्रेणीयो पुरस्कृतो परिवृतो महता राजऋद्धीये महता राजानुभावेन महतो जनकायस्य हक्कारहिक्कारभेरीमृदंगपटहशंखसंनिनादेन कपिलवस्तुतो नगरातो निर्यात्वा येन न्यग्रोधारामस्तेन प्रस्थितो भगवतो दर्शनाय ॥ भगवतो दानि एवं भवति ॥ अभिमानिनो शाक्याः यदि सानं स्वके आसने निषण्णको प्रतिसंमोदयिष्यामि अथ सानं भविष्यति चित्तस्यान्यथात्वं कथं हि नाम यो कुमारो चक्रवर्तिराज्यमपहाय प्रव्रजितो अनुत्तरां सम्यक्संबोधिमभिसंबुधित्वा धर्ममधिगतो धर्मस्वामी आत्मानं प्रतिजानाति सो पितरं च वृद्धतरकां च गुरुस्थानीयां च न प्रत्युत्थिहति । नास्ति च सो सत्वो वा सत्वकायो वा यस्य तथागते प्रत्युपस्थिहन्ते न सप्तधा मूर्धं स्फलेया । यन्नूनाहं पौरुषमात्रं वैहायसमन्तरीक्षे दीर्घं चंक्रमं चंक्रमेयं ॥

अथ खलु भगवां पितु राज्ञो शुद्धोदनस्य शाकियमण्डलस्य च मानातिमानं ज्ञात्वा आगमनं विदित्वा पौरुषमात्रं वैहायसमन्तरीक्षे दीर्घं चंक्रमं चंक्रमति अस्पृशन्तो पादतलेहि भूमियं ॥ अथ खलु राजा शुद्धोदनो दूरतो एवं न्यग्रोधारामे भगवन्तं पश्यति पौरुषमात्रं वैहायसमन्तरीक्षे दीर्घं चंक्रमं चंक्रमन्तं अस्पृशन्तं पादतलेहि भूमियं दृष्ट्वा च पुनः आश्चर्याद्भुतसंहृष्टरोमकूपजातो आश्चर्यं यादृशं कुमारेण ध[२९६a]र्मो अभिगमितो यथा सर्वलोके द्विपदानमुत्तमो ॥ अथ खलु राजा शुद्धोदनो शाक्यो शाकियानामामन्त्रयति ॥ पश्यथ भवन्तो येन कुमारेण संकल्पो

1. M °kumâromâtye ° dhanukârâpṛithakârâhe° B °dhanukârathikâthikârohe° M °ghoṭâçca abhi° B °ghoṭâçva abhi ° çreshṭipramukho ni° M °shṭiprakho ni ° hapramukho vaṇi° BM °hitapramukho brâ° B °râjariddhî° M °ṛiddhiye° BM °vena mahatâ janakâyasya hakkâ(B °kvâ)rapikkâ(B °kvâ)rabhe° B °grodhârâmes te°.

7[2]. B âbhimâ° M °çâkyâ yadi° B °mi | atha° M °athâ sâtaṁ bhavishya ci ° rttitâjyaṁ apahâ° B °bhisaṁbodhitvâ dharmam abhiga° M °sambuddhitvâ dharma adhi ° guruṇâṁ gurusthâniyaṁ ca na° BM °pratyusthihati ||.

11. B °tvako yo vâ° M °tyusthi ° mûrddhâ sphâleyâ || B °rddhuaṁ sphâlayâ ||. — 12. B °rikshaṁ di° M °rghaṁ caṁkraṁmaṁ°. — 14. B °lasya ca nâmâtinâmaṁ jñâ° M °dirgha cakraṁmati | aspṛiçante pâdatarehi° B °ti | aspṛi°.

16. M °dharâma bha° B °çyati | puru° M °dirgha caṁkramaṁ caṁkramaṁti | aspṛi° B °maṁ caṁkramati | aspṛiçanto pâ° M °çante pâdatarehi bhûmiyaṁ ° punar âçcaryâ° BM °hṛishṭâromakû(M °ku)pajâ° M °to âryyaṁ yâdṛi ° reṇa amo abhigamito || ya°. — 19. BM °no çâkyâ çâki° B °ti pa°. — 20. B °bhagava° M °lpo vicintyo prâ° BM °rthayatô dra° M °shtuṁ sarvajño sarvajño sarvadha° B °bhijñâta saṁrkalpaṁ° BM °ddhârthasa° B °rvasaṁsiddhapâtraṁ dri° M °siddhasaṁ°.

चिन्तितो प्रार्थयता द्रष्टुं सर्वज्ञं सर्वधर्मेष्वभिज्ञातसंकल्पं सर्वसिद्धं नरेन्द्रं सो पश्यतु सिद्धार्थं सर्वसिद्धिसंप्राप्तं ॥

दृष्ट्वान पुत्रं परिपूर्णकायं
सुलक्षितं लक्षविचित्रितांगं ।
पञ्चममासे यथ एव चन्द्रो
परिवृतो लक्षणतारकेहि ॥
दृष्ट्वा सुरूपं असमानकायं
तमायताक्षं श्रिरिय ज्वलमानं ।
. . . . . . . . . . . . .

अथ खलु राजा शुद्धोदनो यावत्तकं यानस्य भूमि तावत्तकं यानेन यात्वा यानातो प्रत्योरुह्य स्वअन्तःपुरेण सार्धं शाकियमण्डलेन च पद्सा येन न्यग्रोधारामं प्रविष्टो येन भगवांस्तेनोपसंक्रमित्वा मूर्ध्ना भगवतः पादौ वन्दित्वा गाथामध्यभाषि ॥

इमं तृतीयं तव भूरिप्रज्ञ
पादान्ते वन्दामि समन्तचक्षुः ।
यं च ते नैमित्तिका व्याकरेन्सुः
यं जम्बुच्छाया न जहे इमं च ॥

अथ खलु भगवां न्यग्रोधारामे तालमात्रं वैहायसमन्तरीक्षे स्थित्वा विविधविचित्राणि यमकप्रातिहार्याणि करोति । हेष्ठिमं कायं प्रज्वलति उपरिमातो कायातो शीतस्य वारिस्य पंच धाराशताति स्रवन्ति । उपरिमे काये प्रज्वलिते हेष्ठिमातो कायातो शीतस्य वारिस्य पंच धाराशतानि स्रवन्ति ॥ अथ खलु भगवानृषभ-

3. BM °kâyam̃ | su° M °kâyam̃ | sulakshaṇasurakshitavici° B °tam̃ lakshaṇavi° BM °tâm̃ga pa°. — 5. BM pañcamâtre(M °tra) yathaiva candro° BM °vṛitalaksha°.

7. BM °pam̃ prasamânakâmam̃ ta° M °çiriyam̃ jvaramânam̃ ‖ B °mânam̃ ‖ atha°. — 10. M °no yâvatakam̃ yânasya bhûmi tâvantakam̃ yâne° B °yâtvâ yâmâto pratyuru° M °pratyâru° BM °hya sa antaḥ° B °rddham̃ sâkiyamaṇḍa° M °padavyâyena ca nya° B °sâ yeca nya° M °rddhnâ bhagavato pâdau çirasâ vandi ° thâm adhyebhâshati ‖ .

14. BM °bhûmiprajña vâdîn te(B °n te |) vandâ ° kshuḥ yam̃°.

16. BM yam̃ ca naimittikâ vyâkaretsu(B °tsuḥ |) yac ca jambucchâyâ na jahetsur i-(M °tsuḥ i)mam̃ ca tṛitîyam̃(M °yâm̃) ‖ . — 18. M °dhârâmam̃ tâ ° ryâni karo° B °roti he°. — 19. B °heshṭimam̃° M °jvarati uparimâtro kâyâ°. — 20. BM uparimam̃ kâyam̃ pra° B °heshṭimâ° M °çatâniçatâni çra°

21. M °gavâna ṛishabham̃ varṇṇariddhiye a ° tvâ caratkakudavarṇṇa° B °kubhava°

वर्णमृद्धिये अभिनिर्मिणित्वा चलत्ककुभं वर्णरूपसमुपेतो पुरस्तिमायां दिशायां अन्तरहितो पश्चिमायां दिशायां प्रादुर्भवति । पश्चिमायां दिशायां अन्तरहितः पुरस्तिमायां दिशायां प्रादुर्भवति । उत्तरस्यां दिशायां अन्तरहितो दक्षिणायां दिशायां प्रादुर्भवति । दक्षिणायां दिशायामन्तर्हितो उत्तरायां दिशायां प्रादुर्भवति ॥ एवं दानि महाप्रातिहार्यं विस्तरेण कर्तव्यं ॥ तत्र दानि बहूनि प्राणिकोटीशतसहस्राणि भगवतो एदृशं ऋद्धिप्रातिहार्यन्दृष्ट्वा प्रमुदिता प्रीतिसौमनस्यजाता संवृत्ता आश्चर्याद्भुतप्राप्ता हक्कारसहस्राणि प्रवर्तैन्ति ॥ महाप्रजापतीय दानि गौतमीय यदा भगवानभिनिष्क्रान्तो तस्या रुन्नेन शोकेन च अक्षीणि पटलेहि व संछन्ना अन्धा संजाता । तहिं च न्यग्रोधारामे भगवतो विविधानि विचित्राणि यमकप्रातिहार्याणि करेन्तस्य हक्कारसहस्राणि वर्तन्ति महाप्रजापती गौतमी यशोधराये पृच्छति । किं एते हक्कारसहस्राणि कुर्वन्ति ॥ यशोधरा आह ॥ एषो भगवां वै[296b]हायसमन्तरीक्षे विविधानि विचित्राणि यमकप्रातिहार्याणि करोति नापि त्वं पश्यसि ॥ यशोधरा आह ॥ आगमेहि अहन्तथा करिष्यामि यथा त्वं पश्यसि ॥ ताये दानि यशोधराये यत्र भगवतो प्रातिहार्याणि करोन्तस्य कायातो पंच धाराशतानि स्रवन्ति ततः उदकांजलिं पूरेत्वा महाप्रजापतीये गौतमीय अक्षीणि आक्षालितानि तानि च पटलानि बुद्धानुभावेन भिन्नानि । तस्या दानि यथापौराणा शुद्धा विमला दृष्टि संजाता ॥

अथ खलु भगवां वैहायसमन्तरीक्षे विविधानि विचित्राणि यमकप्रातिहार्याणि कृत्वा बहूनि प्राणिसहस्राणि ऋद्धिप्रातिहार्याणि दर्शयित्वा आर्यधर्मेषु प्रतिष्ठापयित्वा प्रज्ञप्त एव आसने निषीदे ॥ अथ खलु राजा शुद्धोदनो शाक्या च भग-

M °purastimâyâm̃ diçâyâm̃ prâdurbhavati | paccimâyâm̃ diçâyâm̃ antarhito purastimâyâm̃ diçâyâm̃ prâdurbhavati || u°.

3. B uttarasyâyam̃ diçâyam antarahito uttarâ° (*ligne suiv.*) M °syâyâm̃ diçâm antarhito dakshiṇâyâm̃ diçam̃ prâ°. — 4. M dakshinâyâm̃ diçâyâm anta° B °ttarâyam̃ diçâyam̃ prâ°. — 5¹. M °hârya vi°. — 5². BM °bahuni prâ° M °koṭisahasrâṇi bha° B °vṛittoḥ â° M °vṛittâḥ B °ptâ hakvâra ° varttanti | M °varttanti.

7. B °jâpati | ya dâni° M °gauttamiyam̃ yadâ bha° B °syâ ulleneva ço° M °syâ unnenaiva ço° B °akshiṇî paṭalehi ca sam̃ccha° M °ṭalena ca sam̃cchantâ am̃dhâ sam̃jâtâḥ. — 9. B °trâni yama ° sya hakvâra° M °sya hakâra ° tî gauttamî | yaço°.

11¹. BM °hakvâra° M °kurvati. — 12. B °trâni yama°. — 13². BM mâgame°. — 14. M tâyam̃ dâ ° dharâye yatam̃ bha° B °dharâye yattam̃ bha ° hâryâ ka M °to pratihâ ° nti | tato u° B °nti | tataḥ° BM °lim̃ pure ° gauttamiye akshiṇî âcchâditâni°.

17. BM tasya dâ ° râṇâm̃ çuddhâ(B °ddho) vi°. — 18. BM °yamakaprâtihâryâṇi kṛitâni ba° B °srâṇi riddhiprâtihâryâṇi da° M °rçayitvâ aryyadha ° pta evâsa° BM °ne nishide ||. — 20. M °çâkyâç ca bhagavato pâdau ° sushṭum̃ ca pra ° detsuḥ B °detsuḥ |.

वतः पादौ शिरसा वन्दित्वा भगवन्तं साधु च सुष्ठु च प्रतिसंमोदेत्वा एकमन्ते निषीदेन्सुः । महाप्रजापती गौतमी च यशोधरा च सार्धं च अंतःपुरेण भगवतः पादौ शिरसा वन्दित्वा भगवन्तं प्रतिसम्मोदेत्वा एकमन्ते निषीदेन्सुः । अथ खलु राजा शुद्धोदनो वेगजातो भगवतो हिताहितं अपृच्छे ॥

तं देववर्णं सुकुमाररूपं
उद्यानभूमिं अनुचंक्रमन्तं ।
पिता पुत्रं प्रांजलिको उपागमे
इन्द्रं व देवा त्रिदशा व शक्रं ॥
इदं तृतीयं तव भूरिप्रज्ञ
पादान्ते वन्दामि समन्तचक्षुः ।
यं च ते नैमित्तिका व्याकरेन्सुः
जंबुच्छाया न विजहे द्रुमं च ॥
ते देववर्णा उभये समागता
बुद्धो च बुद्धस्य पिता च राजा ।
उपशोभति सालवने निषण्णो
चन्द्रो यथा अभ्रगणा प्रमुक्तो ॥
अथाप्रमेयस्य पितुरभूषि
चिरस्य दृष्ट्वान प्रियं मनापं ।
पुत्रं स्वकं प्राणसमं निषण्णं
हिताहितं पृच्छति वेगजातो ॥
पुरा तव कम्बलपादुका व
सुचित्रा सूक्ष्मास्तरसंस्थितासु ।

2. M °pati gau° B °gauttamî° M °rddham̃ cântaḥpureṇa bhagavato pâ° BM °shidetsuḥ | . — 3. BM °tam̃ ca pṛicche | (M °cchet). — 5. BM °ntam̃ pi°.

7. B °indro ca deva tṛiṇâ ca çakro° M °indro cam̃ de ° çâ ca çakraḥ. — 9. BM °yam̃ ca ta° M °bhûmîprajño pâ° BM °n te vanditvâ sa°.

11. BM pam̃cânye nai° M °mitikâ vyâkaretsuḥ jam̃° B °retsuḥ | jam̃° BM °jahe | i° B °m̃am̃ ca de°. — 13. M °tâ buddhaçca buddha° BM °jâ u°. — 15. BM °lavaṇe ni° M °sharṇṇo candro° B °atraga° M °mukta.

17. M atha pra° BM °dṛishṭvâtanîpri°. — 19. M °nisharṇṇam̃ hitâhitâhitam̃ pṛiccham̃ti ca ve° B °cchanti vegajâto pu°.

21. M puram̃ bhuvam̃ kam̃balapâḍukâ ca su° B puro tuvam̃ ka ° dukâ ca sucitrâ sukshomâstaram̃ sam̃° M °citrâ sukshemottasasam̃°.

अभिरुह्य तां चंक्रमसे च वीर
श्वेतस्मिं छत्त्रस्मिं धरीयमाने ॥
सो दानि ताम्रमृदुजालिनीहि
समन्तनेमीहि सहस्ररेहि ।
कुशकण्टकशर्करमाक्रमन्तो
कच्चित्ते पादौ न रुजन्ति वीर ॥

भगवानाह ॥

सर्वाभिभू सर्वविदू हमस्मि
सर्वेषु धर्मेषु अनोपलिप्तः ।
सर्वं जहे तृष्णक्षया विमुक्तो
न मादृशो संप्रजनेति वेदना ॥

राजा आह ॥

पुरा तव लोहितचन्दनेन
शशिस्य रक्तोपनिभेन काले ।
मनोज्ञगन्धेन सुशीतलेन
स्नपका विलिंपिन्सु ते स्नापयित्वा ॥
सो दानि ग्रीष्मासु खरासु रात्रिषु
वनाद्वनं ईर्यसि चंक्रमन्तो ।
ओदातशीतेन सु[297a]खेन वारिणा
को दानि ते स्नापयते किलन्तं ॥

भगवानाह ॥

शुद्धा नदी गौतम शीलतीर्था
अनाविला सद्भिः सदा प्रशस्ता ।

1. BM °hya tam̃ cam̃ ° ca vara ° cchatra dharîyamâna | (M °nâ). — 3. BM °tâmrehi mṛidu(B °dûhi)jâ° B °hasrârehi ku°. — 5. BM kuçakaṇṭhakaçakara akra° M °nto kvacicca e pâ° B °ccike pâ ° virâ ‖.

8. BM °bhû sarvavidu tam asmim̃ sarve ° ptaḥ sa°. — 10. B sarve ja° M °kto ne mâdṛiçim̃ upajâneti yevâ ‖ B °na mânasam̃ upajâneti ve°.

13. B puro tava rohitacandranena saçishya rakto° M °va rohita ° na çasisya raktoparibhedakâre B °le ma°. — 15. B °snayî a° M °snayakâ vilim̃yesu te° B °petsu te°.

17. B °vanâddhana irya° M °vanândhana irya°. — 19. BM tato tena çi° M °kilatam̃ ‖.

22. BM °gauttama çi° M °lâ sadbhis sadâ praçastâḥ.

यस्मिं ह्रदे देवगणेहि स्नातो
ओगाढगात्रो प्रतरामि पारं ॥
धर्मो ह्रदो गौतम शीलतीर्थो
अनाविलो सद्भिः सदा प्रशस्तो ।
यस्मिं ह्रदे देवगणेहि स्नातो
पृथिवीं प्रवाहेति स्वपुष्पगन्धां ॥

राजा आह ॥

यदा तुवं काशिकवस्त्रधारी
पद्मुत्पलचम्पकवासितानि ।
शुद्धानि वस्त्राणि निवासयित्वा
सो शोभसि शाकियमण्डलस्मिं
शक्रो व साहस्रगतान मध्ये ॥
सो दानि शाणानि च पट्टकानि च
रक्तानि वस्त्राणि द्रुमत्वचानि ।
धारेसि तं च अजुगुप्समानो
इदं पि ते आश्चरियं भदन्त ॥

भगवानाह ॥

न चीवरे शयने भोजने वा
अनुध्यापिता भोन्ति जिना नरेन्द्र ।
लब्ध्वा मनापं अथवापि अप्रियं
उपेक्षका भोन्ति जिना प्रजानका ॥

राजा आह ॥

पुरा तव आजन्यरथा विचित्रा
सुवर्णकंसरुचिरा महार्हा ।

1. BM °snâ(M °snâya)to anâtragâ°. — 3. BM °gauttama çi° M °lo sadbhi sadâ prasasto | . — 5. B °thivî pra° M °prithvî pravâhamti sapu° B °ti sapu°.

8. BM yadâ tvam kâ° B °dhâri pa° M °rî padumutparam cammpa° B °tpalam ca°. — 10. M °ndalosmim | çakro ca sahavratâni madhye B °smim | çakro va sahavratâna madhye || .

13. M °dâni sânâni ca mantakâni ra° B °ṇâni ca mattakâni ca ra° BM °tvacena dhâ°. 15. BM °tam ca | avi(M °abhi)ju ° idan te âçcarya bha°.

17. B °ha cîva°. — 18. B cîva° M cîvare çayana bho ° anadhyâ ° nti timâ narendrâ | . — 20. BM labdhâ ma°.

23. M °tava anajanya° B °rṇṇakâñcaru° M °rṇṇakâmçaru° BM °rhâ çve°.

श्वेतं च छत्त्रं मणिखड्गचामरं
ध्रुवं ग्रहेन्सु ते दिशं प्रयायतः ॥
पुरा तव वातजवो उदग्रो
हयोत्तमो कण्ठको शीघ्रवेगो ।
आजानेयो काञ्चनजालच्छन्नो
अभीक्ष्ण सो वहति येन कामं ॥
यो युग्ययानेहि तुवं उपेतो
रथेहि अश्वेहि च कुंजरेहि च ।
राष्ट्रेण राष्ट्रं अनुचंक्रमन्तो
कच्चिन्न श्रान्तो सि तदद्य ब्रूहि ॥

भगवानाह ॥

रथो मे ऋद्धिपादो स्वचित्तवाहनो
धृती च प्रज्ञा च स्मृती च सारथी ।
सम्यक्प्रधाणा चतुरो मे अश्वा
समं प्रयातो हं पदं सुसंस्कृतं ॥

राजा आह ॥

पुरा तुवं रूपियभाजनेषु
सुवर्णपात्रेषु च भुंजियान ।
शुचिं प्रणीतरसकं च भोजनं
राजानुभावेन उपस्थिहेन्सु ॥
सो दानि लोणं च अलोणकं च
लूखं अलूखं अरसं सरसं च ।

1. BM °cchatram̃ ma° M °khadgacâmaram̃ | dhruvam̃ sugrihna di° B °grahetsu di° M °yato | . — 3. M °haryotta° B °vego â°. — 5. M °bhîkshana so°.

7. M °nehi yena kâmam̃ | yo yugyayânehi bhûsham̃ upe ° rehi | . — 9. BM °kaçcin na çânto si° M °tahida bruhi || B °tad iha kruhi || .

12. B °me riddhi° M °ciptavâ° B °dhriti pra° M °sârathi || . — 14. M °myaksupradhâ ° çvâ pravam̃ pra° B °çvâ pamam̃ ° ham̃ pradamasam̃° M °padamasam̃°.

17. B puro tu° M °râ tava rûpiyabhâm̃ja° BM °rṇṇapatre° M °jiyâtâḥ | . — 19. BM °ṇitam̃ rasa° B °nam̃ | râ° M °hetsuḥ || B °hetsu so°.

21. M °ni lolam̃ ca aloṇakam̃ ca lukham ca alusham̃ ca asaram̃ ca sarasam̃ | B °kam̃ ca lûkham̃ ca alûkham̃ ca arasam̃ ca sarasam̃ pari°.

परिभुंजसि तं च जुगुप्समानो
इदं पि ते आश्चरियं भदन्त ॥

भगवानाह ॥

ये चापि बुद्धा पुरिमा अतीता
अनागता यो पि चहं अनेयो ।
लूखं अलूखं अरसं सरसं च
इमार्थिको लोकहिताय भुंजति ॥

राजा आह ॥

पुरा तुवं गोष्ठिकतूलिकासु
अजिनास्तृते चोमसुखोपधाने ।
सुवर्णपादे शयने महान्ते
त्वं मोदसे मुक्तपुष्पावकीर्णे ॥
सो दानि दुर्गाय खराय भूमिये
तृणानि पत्राणि च संस्तरित्वा ।
त्वं मोदसे . . . . . सत्वसारो
कश्चित्ते गात्राणि रुजन्ति धीर ॥

भगवानाह ॥

नाखद्धिधा शाक्य दुःखं स्वपन्ति
सर्वे च मे शोक[297b]ज्वरा प्रहीणा ।
सो हं सदा निर्ज्वरथो विशोको
जयाम्यहं सर्वभूतानुकम्पी ॥

1. B °bhuṁjási tvam atra ju° M °bhuṁjási tvaṁm atra sujugupsamânte idaṁ pi te âryya bha°. — 4. BM °gatá ye(M °tá cà)pi yo cahaṁ° B °neyo lû°.

6. M lukhaṁ alushaṁ asaraṁ sa° B °ca | idam arthi° M °ca imarthi°. — 9. M puro bhuvaṁ° B °goshika ° su ajânastṛi° M °su âjânastṛi°.

11. M °ne mahaṁ tvaṁ°. — 13. M °bhûmira tṛi ° saṁtaritvá B °tvá tvaṁ°. — 15. M saṁmodaye satva° B °se satva° M °ro kvacinte gà ° rudaṁti dhîraḥ ‖.

18. M °duḥkha svapati sarve° BM °me so jva° M °prahiṇá ‖. — 20. BM so haṁ açoko nirjvaratho viçoko(M °vikoço) ja ° kampi ‖.

राजा आह ॥

पुरा तुवं गौतम स्वके अगारे
अन्तःपुरे देवविमानकल्पे ।
प्रदीपखद्योतगणाभिकाशे
कूटागारे पिथितवातपाने ॥
विचित्रमाल्याभरणाथ नारियो
अलंकृता अप्सरसन्निकाशा ।
उपस्थिता किंकरणीया उत्सुका
मुखं उदीक्षन्ति किमार्य आह ॥

भगवानाह ॥

अद्यापि मे शाक्य स्वके विहारे
देवा च ब्रह्मा च प्रभास्वरा च ।
चित्तं प्येषां मह्य वशेन वर्तति
यहिं च इच्छामि तहिं थपेमि ॥

राजा आह ॥

भेरीमृदंगतुरियाभिगीतो
पाणिस्वराख्यानविदूहि तत्वं ।
स शोभसि शाकियमण्डलस्मिं
शक्रो व साहस्रगतान मध्ये ॥

भगवानाह ॥

सूत्रान्ते वैयाकरणाभिगीतो
विद्याविमुक्तिप्रतिबोधनो हं ।

2. M puro tu° BM °gauttama°. — 4. M °çe kuṭâgâre vîthitavâ° B °vâtayâne vici°.

6. M nârîyo° B °ṇârtha nâriyo | a° BM °kâçâ u°. — 8. M °yâ samutsakâ sukhaṁ° nti kiṁ âryya âha ‖.

11. BM °svakâ vihârâ divyâ ca bra°. — 13. BM °ttaṁ pi meva ma° M °hya vasena varttati° B °yahiṁ icchâ° M °thapetha ‖.

16. BM °gatûryâbhigîte pâ° M °khyâṇavidheyatatvaṁ | B °vidho ete tvaṁ |. — 18. BM so çobhati çâ° M °yamaṁṇḍa° BM °kro ca sâhasragatâ°.

21. M sutrânta vai âka° B sûtrânta vai âka° M °dhanâha | B °haṁ so°.

सोभाम्यहं भिक्षुसंघमध्ये
ब्रह्मा व साहस्रगतान मध्ये ॥

राजा आह ॥

पुरा तुवं भीम स्वके अगारे
अन्तःपुरे देवविमानकल्पे ।
रक्षन्ति ते वर्मधरा मनुष्या
सुसज्जिताः खड्गदृढा प्रहारिणो ॥
सो दानि एको विहरे अरण्ये
उलूकभेरण्डकसंनिनादे ।
अनेकव्यालाचरितासु रात्रिषु
क्वचित् न भीतो सि तद्द्य ब्रूहि ॥

(भगवानाह ॥)

सर्वे पि चे यक्षगणा समागता
चण्डा पि हस्ती गिरिदुर्गचारी ।
न मादृशे रोमहर्षं जनेयु
भयं प्रहायाभयमस्मि प्राप्तः ॥
एको चरामि मुनि अप्रमत्तो
निन्दाप्रशंसासु अवेपमानो ।
सिंहो व शब्देषु असन्त्रसन्तो
वातं व जालेषु असज्यमानं ।
नेतारमन्येषु अनन्यनेयं
भीरुं जिनं शाक्य कथं वदेसि ॥

1. B °hmâ sâha° M °hmâ saha°. — 4. BM °lpe ra°.

6. BM °te dharma° M °nushyaḥ sarvâmitâḥ khadgadṛi° B °shyâ sarvamitâḥ kha° riṇâ |. — 8. B °bhelaṇḍa° nâde a°. — 10. BM °vyâlânucari° M °kvacin na bhi° tad ivya bruhi | sarve° B °tad idya kruhi || sarve°.

13. BM °pi ca ya° M °samâvṛitâḥ caṇḍâ pi hasti gi° B °ṇḍâ pi hi hasti gi° BM °rgadhâri |. — 15. BM na mâ(M na tâ)dṛiçaṁ romaharshaṁ(M °rsha)' nujâneyâ bhayaṁ prahâya abhaya(M °ye)smiṁ prâptaḥ(M °pto) |.

17. BM eka caranto(M °nto a)nindâ° M °çaṁçâsu° BM °pamânaṁ |. — 19. B siṁhe ca çabde° M siṁhe va ça° BM °ntrasasantaṁ vâtaṁ ca jâ° sahyamânaṁ |.

21. M netâvam anye° BM °bhiruhi(M °rûha)ti saṁjâhya va°.

राजा आह ॥

पृथिवी च ते विजिता सर्वकल्या
पुत्राण ते पूरसहस्रमस्य ।
रत्नानि च सप्त परित्यजित्वा
श्रामण्यमेवाभिगतो सि वीरा ॥

भगवानाह ॥

पृथिवी च मे विजिता सर्वकल्या
पुत्राण मे पूरसहस्रमस्ति ।
रत्नानि च अष्ट इमानि सन्ति
एतादृशं रत्नमन्यं न अस्ति ॥
तं वीतरागं सुसमाहितेन्द्रियं
सम्यक्प्रमुक्तं अखिलं अनाश्रवं ।
पुत्रं पिता प्रांजलिको उपागमे
देशेहि मे मार्गं मनुष्यहिताये ॥
तमेनं ज्ञानेन फरित्व शास्ता
शुद्धोदनं पितरं एतदब्रवीत् ।
अभीक्ष्णं सो लोचय भिक्षुदर्शनं
मा प्रमाद्यि भेष्यति तुह्य धर्मो ॥
अथाप्रमेयस्य पितु अभूषि
संवर्णितं तायिनो भिक्षुदर्शनं ।
समनन्तरं सत्पुरुषो भजन्तो
अथोत्तरीधर्मचक्षुं विशो[298a]धये ॥
एतादृशो आसि तदा समागमो

2. BM °viditâ° B °rvakalyâ putrâṇa te purasaha° M °trâna te puraḥsaha° BM °sya ra°. — 4. M °virâḥ ‖.

7. B °vî te ca vi° M °vî ra te vi° BM °viditâ° B °rvakalyâ putrâ° M °trâna me purasa° B °me purasa°. — 9. M ratanâni ca° BM °santo e° M °tnam̃ anya nâsti | B °anyan nâsti |.

11. M °ndriya sa° B °yam̃ sam̃mya° M °khile a°. — 13. M °jalim̃ko u° BM °çehi mamâryam̃ ma° B °nushyâhitâ°. — 15. BM °phalitvâ çâ° B °danapi°.

17. M abhikshṇam̃ sâroti | bhi° B °abhikshṇe so rocayati bhi° M °pramâyipyati tusva dharma | B °dharmâ ‖. — 19. M °pitur abhûshi sam̃vahitam̃° B °shi samvarṇṇatam̃ tâ°.

21. M samanta° BM °rushâ bha° B °nto | a°. — 23. M °driçam̃ âsi sadâ° B °âsi sadâ sa° M °traç ca ha°.

पितुश्च पुत्रस्य च हर्षणीयो ।
तन्तादृशं सुगतमनुस्मरन्तो
निरामिषां को न लभेय प्रीतिं ॥

पितापुत्रसमागमो समाप्तो ॥

भिक्षू भगवन्तमाहंसुः ॥ पश्य भगवं कथं आयुष्मता उदायिना अयं राजा शुद्धोदनो अभिप्रसादितो ॥ भगवानाह ॥ न हि भिक्षवो एतरहिमेव एतेन उदायिना एषो राजा शुद्धोदनो अभिप्रसादितो अन्यदापि एष एतेन उदायिना राजा शुद्धोदनो अभिप्रसादितो ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवं ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवो अतीतमध्वानं नगरे वाराणसीये काशिजनपदे राजा ब्रह्मदत्तो नाम राज्यं कारयति कृतपुण्यो महेशाख्यो सुसंगृहीतपरिजनो दानसंविभागशीलो महाबलो महाकोशो महाबलवाहनो । तस्य तं नगरं वाराणसी काशिजनपदं ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णजनमनुष्यं च बहुजनमनुष्यं च सुखितमनुष्यं च प्रशान्तडिम्बडमरं सुनिगृहीततस्करं व्यवहारसंपन्नं ॥ तत्र सुपात्रो नाम काकराजा प्रतिवसति अशीतिसहस्रपरिवारो । तस्य दानि काकराज्ञो सुपार्श्वा नाम काकभार्या । तस्या काकीये राजभोजनेन दोहलको । सा तस्य सुपात्रस्य काकराज्ञो तं दोहलं आचिक्षति ॥ सो आह ॥ अहं आनापयिष्यं राजभोजनं भुंजाहीति ॥ सो दानि काकराजा अमात्यमाह ॥ सुपार्श्वाये राजभोजनेन अभिप्रायो आणापेहि काकानां यं राज्ञो ब्रह्मदत्तस्य महानसातो राजभोजनमाहरिष्यन्ति ॥ सो अमात्यो आह ॥ स्वामि आनयिष्यामि राजभोजनं पि ॥ सो दानि अमात्यो तेषां काकानामाणापेति । गच्छथ राज्ञो ब्रह्मदत्तस्य

2. BM °smarantâ ni° B °shâm̃ ko la°. — 4. M iti çrîmahâvastuavadâne pitâ ° mâptam̃ ‖. — 5[1]. BM bhikshu bha° M °m âhansuḥ ‖. — 5[2]. B °bhagavâm̃ ka° M °bhagava ka° bhiprâsâ°.

6[2]. M na bhi ° tarahim̃m esham̃ etena udâyinâ | esho° BM °pi esha etinâ u°. — 8[1]. BM bhikshu â° B °hatsuḥ ‖. — 8[2]. M °gavan ‖. — 9. M °kshavo B °vaḥ bhû°. — 10. M °hmadanto nâ°.

12. BM °vârâṇasi kâçi° M °sphiṭam ca kshemam̃ câkîrṇṇa ° ḍinvaḍama ° hîtataskarasam̃pannam̃ |. — 14. BM °vasati | açitikâ(B °kâka)saha ° vâro ta°. — 15. M °dâni kâka supâçvo nâma bhâryyo B °bhâryâ ta°.

16[1]. BM tasya kâkî° M °doharako B °lako sâ°. — 16[2]. B °doharam̃ â°. — 17[2]. M ayam̃ nâmâpayi°. — 18[1]. B °amâtyâm̃ âhansuḥ ‖ M °amâtyâ âhansuḥ ‖. — 18[2]. M supârçvoyam̃ râjabhojane ° yo âsâpâhi ° hânaso râjabhojanenam âharishyati ‖ B °shyati ‖. — 20[1]. M °mâtyâ â°.

21[1]. BM °nâm ânapeti ga°. — 21[2]. BM °tha | râjño bra°.

महानसातो राजभोजनमानेथ सुपात्रस्य काकराज्ञो भार्या परिभुंजिष्यति ॥ ते काका आहन्सुः ॥ राजकुलं इष्वस्त्रशिक्षितैः रक्षीयति । परिसमन्तेन राजकुलस्य पक्षी न शक्नोति अतिक्रमितुं ततो न शक्याम वयं राज्ञो ब्रह्मदत्तस्य महानसातो राजभोजनमानयितुं ॥ अपरे पि आणाप्यन्ति न च उत्सहन्ति । अशीतिहि काकसहस्रेहि न च कोचिदुत्सहति राज्ञो ब्रह्मदत्तस्य महानसातो राजभोजनमानेतुं मा तत्र गता कांडेन वा गुडिकाये वा हन्येम ॥ तस्य दानि काकराज्ञो अमात्य[298ᵇ]स्य एतदभूषि ॥ अहं सुपात्रस्य काकराज्ञो अशीतिनां काकसहस्राणां अमात्यो यदि च अहं न शक्नोमि एतं सुपात्रस्य काकराज्ञो आणत्तिकं कर्तुं न पुरुषकारकं भवति अस्माकं गच्छामि स्वकं राज्ञो सुपात्रस्य निवेदितुं ॥ महाराज अत्र स्वकं महानसातो राजभोजनं आनेमि यदि हन्यामि यष्टं भवतु एकशरीरेण न पुनः सुपात्रस्य काकराज्ञो भार्याये भोजनं नानेमि ॥ सो दानि तेषां राजपुरुषाणां इष्वस्त्रशिक्षितानां व्याक्षिप्तचित्तानां नाज्ञातो । ततः राज्ञो ब्रह्मदत्तस्य महानसातो नाणाप्रकारं राजभोजनं प्रत्यग्रं वर्णरसोपेतं तुण्डेनादायापगच्छति । दिवसे दिवसे पुनर्पुनः हरति ॥

तेहि तेहि सूपेहि राज्ञो ब्रह्मदत्तस्य निवेदितं ॥ यथ महानसे काको अपराध्यति राजभोजनमुच्छिष्टीकरोति विक्षालेति विध्वंसेति वयं कर्मे प्रसृता तेहि कर्मेहि उत्क्षिप्ता स्म निवारयितुं ॥ राज्ञा अमात्या आणत्ता ॥ एवं महानसं जालेन पिधापेथ यथ सो काको न महानसे शक्येय अपराध्यितुं ॥

मनसा देवानां वचसा पार्थिवानां
नचिरेणाढ्यानां कर्मणा दरिद्राणामिति ॥

1. M °âhaṁsuḥ | . — 2[1]. B °çikshite ra° M °çikshite rakshayati. — 2[2]. B °knoti | a° M °knoti abhikra°. — 4[1]. B °âṇeshyanti | na° M °âṇeshyaṁti na° B °hanti a°. — 4[2]. BM °hi na ca kvacid u° B °janam ânituṁ | mâ° M °janam ânayituṁ | yo tatra° B °tâ kaṁḍena vâ gusikâye vâ hanyema | M °tâ kaṁṭhena vâ guṭikâye va hanyema | .

6. M °tyasyaita°. — 7. B °knomi | e° M °knomi | etaṁ râjño su ° âṇantikaṁ ka° BM °vati | asmâ° M °svakaṁ râjño supâtraṁsya kâke niveditaṁ B °sya kâkaniveditaṁ | . — 9. BM °tra sekâ mahâna° B °di haṁnyâ° M °di haṁnyâmi ishṭaṁ° BM °vatu | e° M °bhâryyâye nânyesi || B °naṁ nânesi || .

11. B °kshitânâṁ vyâkiptaci° BM °nâṁ vâjñâtvâ ta°. — 12. M °graṁ varharaso ° ṇḍenâdâya ga°. — 14. M °naḥ hariti | . — 15[1]. M °tehi supe ° veditâṁ | . — 15[2]. BM °ko aparadhya° M °cchishṭrikaroti viṭṭâreti vi ḍhvaṁ ° prasûtâs tehi karmehi utkshiptâm ativâra° B °prasûtâ te ° ukshiptâmanivâra°.

17[1]. M râjâ a ° ṇantâ || . — 17[2]. B °petha so kâke na mahâ° M °petha || yathâ ° paridhyituṁ | B °paradhyituṁ | . — 19. M °reṇâdyânâṁ°.

राज्ञो ब्रह्मदत्तस्य वचनमात्रेण सर्वन्तं महानसं जालेन अपिहितं ॥ सो काको तत्र महानसे न शक्नोति ओपतितुं नापि शक्नोति अपराध्यितुं ॥ सो पि तर्केति कथं अहं अतो राजभोजनं हरिष्यन्ति ॥ तस्य काकस्य एतद्भूषि ॥ यन्नूनाहं एतं पन्थं रक्षेयं येन पथेन महानसातो राज्ञो भक्तं अल्लीपीयति ॥ यतः पन्थातो तं पश्यति राज्ञो अल्लीपीयन्तं ओदनं वा व्यञ्जनं वा मांसप्रकाराणि वा खज्जकं वा तिलकृतं वा अन्यं वा कंचिद्भक्ष्यं ततः तुण्डेनादाय गच्छति ॥ राज्ञा आणत्तं सर्वेषामेतेषां परिवेषकानां वर्षवराणां च भोजनभाजनानां पिधानानि देथ ॥ ते दानि परिवेषका तं भोजनं पिधानेहि अपिहित्वा महानसातो राज्ञो अल्लीयन्ति ॥ ततो सो काको न भूयो शक्नोति हर्तुं ॥ तस्य दानि काकस्य एतद्भूषि ॥ कथमहं शक्येयं काकराज्ञो भार्याये भूयो राजभोजनं हर्तुं ॥ सो दानि यं राजा ब्रह्मदत्तो चेटीनां हस्ते अर्पयन्तो देवीनां कवलानि प्रेषति ततः चेटीनां हस्तातो हरति ॥ राज्ञा ब्रह्मदत्तेन श्रुतं । अतः [$299^a$] देवीनां कवलेहि प्रवेशीयन्तेहि सो काको चेटीनां हस्तातो भोजनं हरति ॥ राज्ञा आणत्तं ॥ सर्वासां चेटीनां कवलानि प्रवेशयन्तानां अपिधानानि देथ ॥ तत्र च राज्ञो ब्रह्मदत्तस्य गुरुकं अमर्षं संजातं ॥ अहो यादृशो एषो काकः धृष्टो मुखरो प्रगल्भो च साहसिको च धनुहस्तेहि न शक्यति रक्षितुं अन्तन्दूरस्था ओपतति ॥ राज्ञा आणत्तं ॥ यो मे एतं काकं जीवन्तं गृहीत्वा अल्लीपेय तस्य विपुलं अभिच्छादनं ददेयं ॥ सर्वस्य परिवारस्य आणत्तं एवं राजा ब्रह्मदत्तो जल्पति ॥

1[1]. M °sarve taṁ ma ° lena àpihiti | . — 1[2]. B °opayituṁ nâ ° aparidhyituṁ | M °aparadhyituṁ. — 2. B °taketi° M °takehi kathaṁ ° rishyaṁ ti. — 3[1]. M °bhûmi | B °shi ya°. — 3[2]. M yaṁ nûnâhaṁ evaṁ patthâ raksheya ye° B °haṁ | etaṁ panthâ raksheya ye° M °ktaṁ astripiyati | . — 4. BM yataḥ panthâ(M yato yathâ)to taṁ paçyati râjño allîpiyati tataḥ panthâ(M °llîpiyati | tato paṁthâ)to taṁ paçya° B °ntaṁ | o° M °piyaṁtaṁ odanaṁ vyaṁjanaṁ vâ mânsaprakâçi vâ khajakaṁ ° nyaṁ vâ kaṁcid bhakshyaṁ | ta° B °nyaṁ vâ kecid bhajyaṁ vâ || ta°.

6. M °âṇantaṁ eteshâṁ sarveshâṁ pa° B °bhojananabhâ° M °bhojanabhâṁjanânâṁ vidhâ°. — 7. BM °bhojaṁ(B °janaṁ) pariveçakehi âpihitvâ°. — 9[1]. B °to saḥ kâ° M °kâkena bhûyo na ça°. — 9[2]. BM °shi ka°. — 9[3]. B °bhâryâyo bhû° M °ye bhûtâ râ°. — 10. B °ni yan râjâ° BM °ste apakrânto de° M °valâbhi pre° BM °shati | tato(M °taḥ) ce ° rati râ°.

12[2]. M ato de ° kavarehi pra° B °veniya°. — 13[1]. M °âṇantâṁ. — 13[2]. M °veçiyantâṁ api° B °veçiyantânâṁ apyidhâ ° dethaḥ || . — 14. BM °jño kâko bra° B °gurushaṁ a° M °marsha saṁ°. — 15. M °sho kâko dhûrto mu° B °sâhasriko° M °stehi purushehi na ça° B °çakyeti ra° M °tuṁ | anantaraṁ dṛi°.

16[1]. BM °ttaṁ yo°. — 16[2]. B °lliyeyan tasya° M °lliyeyaḥ tasya vipulaṁm abhicchâdanaṁ tasya dadeyaṁ° B °cchâdayaṁ tasya dadayeyaṁ sa°.

अपरा दानि चेटी राज्ञो ब्रह्मदत्तस्य अर्पयतो स्वकाये देवीये कवलं आदाय वस्त्रेहि अपिहित्वा गच्छति । सा दानि तेन काकेन दृष्टा । तस्य एतदभूषि । कथं अतो चेटीय हस्तातो भोजनं हरेयं । यन्नूनाहं अस्या चेटीये नासाग्रे लग्नेयं ततः सा चेटी त्रस्ता इमं भोजनं उज्झिष्यति ततो अहं यं तं भोजनं गृह्य गमिष्यामि ॥ सो दानि येनाभूद्दासी ओपतित्वा ताये चेटीये नासे लग्नो । तत्र नासे व्रणो खतो । चेटीये भीताये भोजनमुज्झित्वा सो काको उभयेहि हस्तेहि गृहीतो ॥ सा दानि चेटी काकमादाय नासाय रुधिरेण घरन्तेन राज्ञो ब्रह्मदत्तस्य उपसंक्रान्ता । अयं सो दुष्टकाकः गृहीतो ॥ सो दानि राजा ब्रह्मदत्तो तस्या चेटीये प्रीतो संवृत्तो । शोभनं ते कृतं यं त्वया एषो काको गृहीतो ॥ तेन दानि राज्ञा ब्रह्मदत्तेन ताये चेटीये विपुलो आच्छादो दिन्नो ॥ सो च काको परिभाषियति । न शोभनं यं त्वं राजकुलं पि धर्षयसि ॥ सो दानि काको राजानं ब्रह्मदत्तं गाथाये अध्यभाषे ॥

वाराणस्यां महाराज काकराजा निवासितो ।
अशीतिकाकसहस्रेहि सुपार्श्वो परिवारितो ॥
तस्य दोहलिनी भार्या सुपार्श्वा मांसमिच्छति ।
राज्ञो महानसे पक्कं प्रत्ययं राजभोजनं ॥
तस्याहं वचनं श्रुत्वा करन्तो अनुशासनीं ।
भर्तुरपचितिं कृत्वा नासाये अकरि व्रणं ॥

अथ खलु भिक्षवः राजा ब्रह्मदत्तो तस्य काकराजामात्यस्य प्रीतो संवृत्तो । इमस्य काकराजामात्यस्य तस्य काकराजस्य सकाशातो नैव ग्रामो न भोगो नापि

1. M apara dâ ° sya aparakâte sva° B °sya apakâte sva°. — 2[1]. BM °kâlena drishṭvà ta°. — 2[2]. M tasyaita°. — 3[1]. B °reyam̃ ya°. — 3[2]. BM yannû(M yam̃ nû)nâham̃ asya ca ye nàsâ ° gneyam̃ | tataḥ° B °ujhishya° M °ujhishyati tataḥ a° BM °ham̃ yato bhojanam̃ gṛi°. — 5[1]. B °ni yenâbuddhasyo o° M °ni yenâbudhasya o ° nâso la° BM °gno ta°. — 5[2]. M °vraṇo kshâṇo B °kshaṇo ce°.

6. M °bhojanam̃ âjhitvâ ‖ so° B °bhojanam ojhitvâ ‖ so° BM °stehi sâ dâ°. — 7. B °ṭì kâkâm̃m â° BM °nâçâya ru° B °krânto | M °krântâḥ ‖ . — 8[1]. M °so deva dusto kâko gṛi°. — 8[2]. BM °tasya ce° B °vṛitto ço°. — 9[1]. M sobhanam̃° BM °to te°. — 9[2]. M °râjño bra°. — 10. M °shiyanti | B °yati na ço°.

11[1]. M na sobhana yam̃° B °dharshayesi | . — 11[2]. B °ko râjñam̃ bra° M °ko râjam̃-bra°. — 13. BM °kâjarâjanivâsiko ‖ (M °site). — 14. B °suyâtro° M °suprâpto pa°. — 15. M °doharinì bhâryâ supârçve mâ°.

18. M bhartu apacitum̃ kṛi° B bhartum̃ apacintim̃ kṛitvâ nâçâye akari praṇam̃ | M °nâçâyeshu kari vraṇa ‖ . — 19. M °kshavo râjà brahmadanto tasya kâkasya râjâmâ° B °tto i°. — 20. M imam̃sya kâkarâjâ ° pi ca atya kvaci° BM °ttiḥ sva°.

च अन्या काचिद्वृत्तिः । स्वकेन तुण्डेन वृत्तिं पर्येषन्तो आत्मत्यागं तस्य काकराजस्य कार्यं करोति ॥ अथ भिक्षवो राजा ब्रह्मदत्तो अमात्यपार्षद्यां गाथाये अध्य[299b]भाषे ॥

एतादृशो अरहति राजभोगं हि भुंजितुं ।
यथायं काकराजस्य प्रह्व आमरणाद्विजो ॥

तस्य दानि काकस्य राज्ञा ब्रह्मदत्तेन दैवसिकं राजभोजनं अनुज्ञातं । राजभोजनस्य प्रत्यग्रस्य नानाप्रकारस्य पूरं भाजनं कृत्वा तस्य काकस्य अर्थाये एकान्ते क्षिप्यति अतः तं दैवसिकं स्वयं च भुंजेसि काकराजस्य च हरेसि ॥ परिवारस्य आणत्तं । न केनचिदेतस्य काकस्य राजकुलं गच्छन्तस्य वा आगतस्य वा किंचिद्व्याघातं उत्पादयितव्यं ॥

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवो युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन सुपार्श्वो नाम काकराजा अभूषि । न खल्वेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स काकराजो अभूषि ॥ या काकराजस्य भार्या सुपार्श्वा नाम सा एषा यशोधरा अभूषि ॥ यस्य काकराजस्य अशीतीनां काकसहस्राणाममात्यो अभूषि एष स कालोदायी स्थविरः ॥ यो भूद्राजा ब्रह्मदत्तः स एष राजा शुद्धोदनो अभूषि ॥ तदापि एषो एतेन प्रसादितो एतरहिं पि एष एतेन प्रसादितः ॥

काकजातकं समाप्तं ॥

भिक्षू भगवन्तमाहन्सुः ॥ पश्य भगवन् कथमियं महाप्रजापती भगवतो शोकेन अन्धा संजाता भगवन्तं चागम्य अनन्धा संजाता ॥ भगवानाह ॥ न भिक्षवो एतरहिमेव एषा महाप्रजापती मम शोकेन कारुण्येन च अन्धा संजाता मम एव

1. B °vṛittiyam̃ pa° M °ttim̃ sam̃parye°. — 2. M atha khalu bhi°. — 4. BM °ço aharati(B °ti |) râjabhogâm̃(M °gam̃ |) hi ° tum̃ ya°. — 5. BM °sya prâṇamâraṇâdvijo |.

6[1]. M °kâkarâjño bra° B °ttena devasi° M °anusâjñâtam̃ |. — 6[2]. M râjabhâjanasya pratyam̃gra° BM °prakâram̃tasya pûram̃ bhojanam̃° M °ekânte prakshipati ato tam̃ dai° harati |. — 8. M °âṇantam̃ B °ttam̃ na°. — 9. M °gacchantam̃sya vâ â° B °cchantam̃ tasya vâ agantasya vâ kiñcid vyâ° M °kim̃ vidyâghrâtam̃ u°.

11[2]. M °kshavaḥ yu° B °bhûshi na kha°. — 12[1]. M °vam̃ tam̃ devam̃ drashṭu tat ka°. — 13[1]. M °râjâ a°. — 13[2]. M so dâni kâka ° rçvâ nâma esho yaço° abhû yo°. — 14. M yasya kâkarâ ° çitinâm̃° BM °shi ‖ e° M °sthaviro B °raḥ yo°. — 15. M °hmadanto sa°.

16. M °him̃ pi esha etena prasâditar iti ‖. — 17. M iti çrîmahâvastuavadâne kâ°. — 18[1]. M bhikshur bhaga ° m âham̃suḥ ‖. — 18[2]. M °sam̃jâto ‖. — 19[2]. BM °him evam eshâ ° ruṇye(M °ṇe)na ca sam̃jâtâ(M °to) mama eva° M °jâto ‖.

चागम्य अनन्धा संजाता । अन्यदाप्येषा महाप्रजापती मम आगम्य अनन्धा संजाता ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवः अतीतमध्वाने हिमवन्तपार्श्वे चण्डगिरिर्नाम पर्वतो तस्य दानि पार्श्वे महन्तो वनखण्डो वृक्षसहस्रेहि पुष्पफलोपेतेहि संछन्नो पद्मिनीहि च आश्रमेहि च उपेतो ऋषिगणानुचीर्णो प्रान्तो प्रविविक्तो ॥ तत्र महान्तं हस्तियूथं प्रतिवसति षड्दन्तकुलं ॥ तहिं आजनियो हस्तिपोतो जातो षड्दन्तो इन्द्रगोपकशीर्षो सप्तांगसुप्रतिष्ठितो कुमुदवर्णो । सो यदा संवर्धितो तदा मातां गुरुगौरवेण प्रेमेन च परिचरति । तस्या पूर्वं भोजनं पानीयं च दत्त्वा पश्चादात्मना परिभुंजति कालेन च तां कालेन उद्धतशरीराया वन[300ª]लताया परिमार्जति स्नापयति ॥ एवं सो हस्तिपोतो सावहितं प्रसादेन प्रेमेन च गौरवेण च सर्वकालं जनेत्रिं परिचरति ॥ सो दानि कदाचित्तां मातुं स्नापयित्वा परिविषित्वा आसितां ज्ञात्वा गजगणेन सार्धं चरन्तो वाह्येन निर्गतो ॥ सो दानि मृगलुब्धकेहि मृगव्यं अटन्तेहि दृष्टो तेहि गत्वा काशिराज्ञो निवेदितं । देव अमुत्र वनखण्डे एदृशो गजपोतको प्रतिवसति प्रासादिको दर्शनीयो देवस्य योग्यो भवेय ॥

अथ खलु भिक्षवः काशिराजा तेषां लुब्धकानां श्रुत्वा सबलवाहनो तं वनखण्डमागमे ॥ तेन स हस्तिपोतो वनखण्डातो निगृह्य अपराहि करेणुहि परिवारितो वाराणसीं प्रवेशितो हस्तिशालायां च थावितो ॥ तस्य दानि राज्ञो

1. B °pyesho mahâ° M °pyeshâṁ mahâ°. — 2[1]. BM bhikshu â° M °haṁsuḥ ‖ . — 2[2]. B °dâbhi bha° M °gavân ‖ . — 2[4]. M etacahim evaṁ eshâ mahâprajâpati mama çokena kâruṇyena ca saṁjâto mama eva câgamya anaṁdhâ saṁjâta ‖ anyadâpyesha mihâprajâpatiḥ mama âgamya anandhâ saṁjâtâḥ ‖ bhikshu âhaṁsuḥ ‖ anyadâpi bhagavan‖ bhagavân âha ‖ anyadâpi bhikshavo bhû° B °kshavaḥ bhû°. — 4. M °ntapârçve caṁḍagiri nâma parvato ‖ tasya ° rçve mahaṁto vana° B °ni pârçve mahato vanakhaṇḍe vṛi° M °phalepe ° çramehi ye u° B °ṛishîga° BM °kto ta°.

6. M °ti ‖ shaddaṁtaku° B °laṁ ta°. — 7. M tehi â ° poto japto sha ° saptâge su° BM °pratishṭito ° rṇno so°. — 8. M °to ntadâ so tâṁ gu° B °dâ mâtâ gu° M °ṇa ca pre°. — 9. BM tasya pû ° ca datvâ pa ° bhuṁjanti kâ ° rîrâ yâva na (M °nna) lâbhâyâṁ pa ° rjati sthâpayati | .

11. B °stipâto sarvehito pra° M °stiposo sarvehitaṁ pra ° premanena ca gau° B °janestriṁ pa°. — 12. BM °cit taṁ mâ ° viçitvâ âsitaṁ jñâ° M °ṇena ca sâ° BM °hyeṇa ni°. — 13. B °vyaṁ aṇṭhakehi dṛishṭvâ te° M °vyaṁ akaṁṭhakehi dṛishṭâ te ° râjñâ ni°. — 14. M °amuka vana ° gajayoto pra° B °gajapâtako ° ti ‖ prâ° M °veyâ ‖ .

16. M °kshavo kâçi ° balo savâha° B °balo havâha ° khaṇḍa âgame te° M °khaṇḍa âgamantena so ha°. — 17. B °vanashaṇḍâ° M °vanakhaṁḍâto ° apare kareṇu° B °apare vareṇu° BM °veçitvâ hastiçâ ° ca dhâvito ta°.

भवति । भद्रको मे अयं याग्नो भविष्यतीति ॥ सो दानि सर्वसत्कारेहि सत्क्रियति स्वयं राजा तस्य भोजनं च पानीयं च ददाति । तस्य तं सर्वसत्कारं न प्रीणयति शोकेन तां मातरं अनुस्मरन्तस्य गम्भीरं च निश्वसति अश्रूणि च पातयति शुष्यति च मिलायति च ॥ सो दानि राजा प्रेम्नानुगतो अंजलिं प्रगृह्णित्वा तं गजपोतं पृच्छति ॥ सर्वसत्कारेहि ते गजोत्तम सत्करोमि अथ च पुनस्त्वं शुष्यसि च मिलायसि च परिहायसि च वर्णरूपतो न च ते पश्यामि उदग्रमात्तमनं प्रहृष्टमुखवर्णं । देहि मे वाचं आख्याहि केन ते उपकरणेन वैकल्यं उपस्थापयिष्यामि प्रियो च मे त्वं गजोत्तम मनापो च आख्याहि मे केन त्वं परिहायसि भोजनं च पानीयं च न प्रतीच्छसि ॥ सो दानि गजपोतो राज्ञा पृच्छीयमानो मानुषिकाये वाचाये आह ॥ देव न मे केनचिद्वैकल्यं उपकरणेन नैवमाहारेण मम कृत्यं मम माता तहिं वनखण्डे प्रतिवसति जीर्णा वृद्धा गतवया चक्षुर्विहीना दुर्बलकाया यदा विज्ञाप्राप्तो स्मि नाभिजानामि मातुपूर्वं अदत्वा भोजनं वा पानं वा स्वयं परिभुंजितुं । एष मे समादानों मम मरणं इहैव भविष्यति । न पुनरहं अदत्वा माताये स्वयं परिभुंजेयं भोजनं वा पानीयं वा ॥ सो दानि काशिराजा धार्मिको च सकृपो च परानुग्रहप्रवृत्तो च । तस्य एतदभूषि । आश्चर्यमिदं इमस्य हस्तिपोतस्य याव मातृज्ञो च धार्मिको च आजानेयो च यस्य अद्य एत्तकानि दिव[300b]सानि भोजनं अप्रतीच्छन्तस्य पानीयमपिबन्तस्य मातृशोकेन । एकात्येषु मनुष्येषु नैते गुणा सुलभरूपा ये इमस्य गजपोतस्य । नैतमस्माकं साधु न प्रतिरूपं यं वयं इमानेवरूपा कल्याणसत्वा विहेठाम ॥ सो दानि महामात्राणामाह ॥ मुंचथ एतं हस्तिपोतं गच्छतु वनखण्डं यतो स्माभि आनीतो मातृवर्तको मातरे

1[2]. M °hi satkriya°. — 2. B °ṇayati | çokena taṁ mâ° M °ṇayati keçena taṁ mâ° BM °çvasati açruṇi(M °ṇiya) ca pâ°. — 4. M °grihitvâ°. — 5. M °roti || atha° B °romi | atha° M °çushyati ca milâyati ca pari° B °shyasi ca pilâ° M °rṇṇarupâto° BM °çyâmi | u ° rṇṇaṁ de°.

7. M °caṁ âkhâhi kena te upaka ° me kenâ tvaṁ° B °me kena tva pa ° yasi || bho ° pàṇîyaṁ ca pra° M °yaṁ ca pra°. — 9. M °pṛicchimâno°. — 10. B °hiṁ vanashaṇḍe° M °hiṁ vanakhaṁḍe pra ° ti || jîrṇṇo vṛi° B °jîrṇṇo vṛi° M °vayâ cakshuḥvihîno du° B °pto smiṁ nâbhi° M °mi || mâtu pûrvaṁ° BM °adatvâ bho°.

13[1]. M evaṁ me samâdânaṁ mama mara ° haivaṁ bha°. — 13[2]. BM adatvâ mâ° M °pânaṁ vâ || . — 14. M °satkṛipo° B °kṛipâ ca pa° BM °tto ca ta°. — 15[1]. M °bhûshiḥ || B °shi â°. — 15[2]. M °yâvat pâtṛijño ca sârmi° BM °ko ca âyâne° M °yo ca asya adya° BM °praticcha° M °pâniyam epi pibentasya mâ° BM °kena e°.

17. M eshashyesha ma° BM °shyeshu caite°. — 18. B neta° M na eta° BM °imâm evarûpâ° M °ṇasatvâḥ vi°. — 19. BM °m âbhanṣuḥ || . — 20. M muṁcati hastipotaṁ râcchatu vanakhaṁḍa yato smâbhir ânito mâtavako mâtare sagapâcchatu mâm iha° BM °shyati | ta° B °rthako a° M °rthakam adharmeṇa samojyema || .

समागच्छतु मा इह अनाहारो मरिष्यति ततो वयं निरर्थका अधर्मेण संयुज्येम ॥ सो दानि राजाणत्तीये तस्यैव वनखण्डस्य समीपे नेत्वा मुक्तो ॥

सो दानि तं वनखण्डं गत्वा नैवाहारं करोति न पानीयं पिबति तां मातरं मार्गति ॥ तस्य दानि सा माता शोकेन रुदमाना च तं पुत्रकं अपश्यन्ती अन्धीभूता ॥ सो दानि गजपोतको तां मातरं अलभन्तो पर्वतशिखरमभिरुहित्वा कुंजररावां मुंचति । तस्य महान्तं कुंजररावं मुंचतो ताये मातरे तं स्वरं प्रत्यभिज्ञातं पुत्रस्य मे एषो स्वरो ति ताये पि महानिनादं मुक्तं ॥ ततः तेन मातुस्वरो प्रत्यभिज्ञातो ॥ सो दानि तस्या मातु मूले उपसंक्रमे ॥ तस्य सा माता उदकह्रदस्य मूले आसति अन्धा परिभ्रमन्ती पुत्रशब्दं श्रुत्वा रेणुगुण्ठितशरीरा ॥ सो दानि गजपोतको ततः ततो वनलतां सुकुमारां भंजित्वा तां मातरं परिमार्जेति रेणुं चास्या शरीरातो अपनेति । ततः च उदकह्रदातो शुण्डं उदकस्य पूरेत्वा हृष्टो तुष्टो आत्तमनो प्रीतिसौमनस्यजातो तां मातां स्नापेति ॥ सा दानि स्नाता च तानि च अक्षीणि धौतानि सर्वमलं अचितं अशुच्यपगतं विमला चास्या परिशुद्धा दृष्टी संवृत्ता ॥ सा दानि हस्तिनिका तं पुत्रकं पश्यित्वा प्रीतिसौमनस्यजाता पृच्छति । पुत्र कहिं सि गतो मम मेल्लित्वा अनाथाये दुर्बलचक्षुयेति ॥ सो तस्या माताये तां प्रकृतिं विस्तरेण आचिक्षति यथा गृहीतो यथा च ओसृष्टो ॥ सा तं पुत्रकं आह ॥ एवं पुत्र आनन्दतु काशिराजा सपरिवारो यथा अद्य तव दृष्ट्वा अहं नन्दामि ॥

स्यात्खलु भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन काशिराजा अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषो नन्दो मम

2. M °râjâ âṇa° B °nashaṇḍesya° M °nakhaṁḍesya samîpe nîtvâ°. — 3. BM °bati taṁ mâta° B °raṁ mâgati | . — 4. M °nâ caṁ taṁ pu ° paçyaṁti a°. — 5. M °ni râjapotako mâtaraṁ° B °kuṁjaravâràṁ muṁcati ta°.

6. BM °muṁcato tasya tâye mâ° M °ro ti | tâme pi° B °ninâda mu°. — 8[1]. BM °tasye mâ°. — 8[2]. M °mâtâr uda° B °bhramanti pu° M °bhramati pu°. — 9. M °ni râjapotako tato tataḥ shalanatâṁ sukumâlâṁ bhaṁ° BM °tvâ taṁ mâta° M °ṇuṁ câtra ça° B °câsya ça°.

11. M tataḥ udakahra° B °sya pure° M °âtamo prî° B °jâto tân mâtâṁ°. — 12. BM °akshî(M °kshi)ṇî dhotânî sarvam alaṁ(M °m ahâṁ) akshî | mucya ° câsya pa° M °dṛishṭi saṁvṛittâḥ. — 14. M °hasinikà ° jàto tâṁ mâtâṁ pṛi°. — 15[1]. M °kathaṁ vihato° B °hiṁ siṁhato ti mama me° M °durbale ca°. — 15[2]. BM °tasya mâtâye taṁ pra ° kshati | yathâ gṛi° M °oshûshṭo || .

16. B so taṁ° M so tâṁ putrakam âhansuḥ || . — 17. M °tra nanda°. — 19. M °kshavo yu ° d anyo sa tena kâle° BM °shi na°. — 20[1]. M °drashṭuṁ ta°. — 20[3]. B °ndo mama putrîyapu° M °pitṛiyatro bhâtâ°.

पिचियपुत्रो भ्राता सो काशिराजा अभूषि ॥ यो गजपोतको अहमेव त[301ᵃ]-द्रा अभूषि ॥ या गजपोतस्य माता अभूषि एषा सा महाप्रजापती गौतमी तद्रापि मम शोकेनान्धा संजाता मम एवागम्य अनन्धा संजाता । एतरहिं पि एषा महाप्रजापती गौतमी मम शोकेनान्धा संजाता मम येव चागम्य अनन्धा संजाता ॥

समाप्तं हस्तिनिकाजातकस्य परिकल्पं ॥

नीवरणं विजहित्वा शृणोथ एकाग्रमानसा सर्वे ।
यथ बोधिसत्वचर्या सुदुष्करा हर्षणीया च ॥
तिर्यग्योनिगतस्यापि गजस्य स्वमातरे सौहृद्मासि ।
किं पुनः मनुष्यभूतो गुरुं परिचरेय तं विप्रं ॥
कामं पि बोधिसत्वा सर्वजगति वत्सला प्रकृतिस्निग्धा ।
अतिवत्सला तु गुरुषु यथा श्रुतं कीर्तयिष्यामि ॥
हिमवन्तपादपार्श्वे चण्डोये चण्डपर्वते रम्ये ।
तापसकुलआश्रमेहि क्वचित्क्वचि कृताभ्यलंकारे ॥
किन्नरकुंजरवानरवराहशार्दूलव्याघ्रगणचीर्णे ।
रुरुमहिषसरभचरिते वृषभचमरिशम्बराकीर्णे ॥
मोरशुकजीवजीवकचकोरकरविंकशकुनमिथुनेहि ।
समन्तं हि तं वनवरं शोभति मधुरं रवन्तेहि ॥

2. BM yo gaja° B °shi esho sâ ° prajâpati tadâ° B °saṁjâto ma° M °ma eshâga ° jâtâḥ | . — 3. M °pi eyâ mahâ° B °çoke andhâ saṁjâtâ tâṁ mama ye° M °kena aṁdhâ saṁjâtâ mamaiva câ ° jâtâḥ. — 5. M iti çrîmahâvastuavadâne ha° BM °jâtasya° M °lpaṁ samâptaṁ ‖ .

6. M atha nî° B °gramanasâ° BM °rve ya°. — 7. BM yathâ bo ° tvacaryâṁ dushkarâṁ ha°. — 8. M nirya° B tiyagyo ° sya mâtrâ sau° M °sya mâtâ sau° BM °hṛidaṁ âsi | . — 9. M °punar manu° BM °guru pa° M °care taṁ° B °care taṁ citraṁ | . — 10. M °dhisatvaḥ sarva ° tsarâ pra° BM °gdhâ a°.

11. B °tsarâ tu khu | yathâ guruçru° M °lâ gurushu | yathâ guruçru° BM °shyâmi hi°. — 12. M hibhava° BM °rçve ca caṇḍore caṇḍa° B °ramyo tâ°. — 13. B °kulâçra° M °kulâ anehi kva° B °t kvacit kṛityalaṁkâraṁ | M °t kvacit kṛitâtyalaṁkâlaṁ | . — 14. BM kinnaraṁ kuṁ° M °jaraṁ vâ° BM °naraṁ va° M °rdûlaṁ vyâ ° cirṇṇaṁ B °cirṇṇa ruru°. — 15. M urumahi° BM °sarabhacaritaṁ vṛishabhacamarirurṇṇa(M °rṇa)kâkirṇṇaṁ | (M °rṇṇaṁ).

16. BM °çukajîvaṁjîvakacakorakaraviraça° M °kunaṁ mi° BM °hi sa°. — 17. BM samantehi taṁ° M °dhuraṁ ramante dvi ço° B °ntehi ço°.

शोभन्ति च क्वचित्क्वचित्पद्मसरा राजहंसपरिपूर्णा ।
कलहंससलीलगलिता गजयूथविलोलिताश्च परे ॥
क्वचिद्भ्रमरमधुकरिभिः चूर्णितकुसुमेहि पादपसमीपं ।
कृतसंस्तरा विचित्रा हरिणशकुनलीलिता स्थान्ति ॥
क्वचिद्वृद्धतापसेहि ध्यानरतिरतेहि निर्झरगतेहि ।
संशोभते वनवरं स्वाध्यायरतेहि च परेहि ॥
क्वचि दृष्टकुमारेहि दीर्घजटाअजिनवल्कलधरेहि ।
संशोभते वनवरं विचित्रफलमूलहस्तेहि ॥
तस्मिं प्रवणे भिरामे परिहरति जनेर्वी नेत्रप्रहीणां ।
जीर्णा दुर्बलगात्रां गजोत्तमो सर्वभावेन ॥
सो गजगणेन सार्धं रमन्तो अपनिर्गतो महद्दूरं ।
राजा च सह बलेन गजग्रहणकारणं प्राप्तो ॥
दृष्टान तं गजवरं राज्ञः सुतो पि हर्षितो अवचि ।
गजवरो लक्षणुपपेतो गजोत्तमो आर्थिन यूथे ॥
गजगणगतं गजेन्द्रं तं दृष्ट्वा वाहनं उदारं तं ।
संगृह्णि काशिराजा वनात्पुरवरं निवर्त्तित्वा ॥
सो नैव पिबति पानं न च भुंजति श्वसति च सो भीक्ष्णं ।
तं अवच मधुरगिरया स हस्तिरत्नं पृथिवीपालो ॥
नागवर मा कृशो भव प्रतीच्छ भक्तं पिबाहि पानीयं ।
अभिरामयिष्यामि इध पुरोत्तमे मा खु शोचिष्ठाः ॥

1. BM °bhanti | kvacit kvacit padmasa(M °dmama)rarâja° M °pûrṇṇaḥ B °pûrṇṇo ka°. — 2. M karahaṁ âsalilagaritâ gaja° B °salila ° thanilolitâç câpare | M °lolitaç câpare | . — 3. B °dhukarîbhiḥ ° pâdasamîpaṁ kṛi°. — 4. B kṛitaṁ sastarâ° M kṛitaṁ mastarâ° BM °citrahari ° kuna(M °ṇa)lillitâ sthâti(M °sthâni) | . — 5. BM kvacid vṛiddhatâ-(M °ddhasta)pa ° gatehi saṁ°.

6. BM °yarate(M °rase)hi parehi kva°. — 7. BM °cîd dṛishṭa ° dharehi saṁ°. — 9. BM °vaṇâbhi ° traparihîṇâṁ | . — 10. M jîrṇṇo durbalâṁ gâ ° ttamaṁ sa°.

11. M °sârddha ra° BM °nto upa° BM °raṁ râ°. — 12. M °jagaṇena kâ° B °graheṇa kâ°. — 13. BM °râjasuto harshi°. — 14. M gajavara la° BM °kshaṇopa° M °jotamaṁ pâ ° yûtho B °yûtho | . — 15. M °taṁ gajandraṁ° BM °vâhanam udâraṁ taṁ gṛi°.

16. BM gṛihni kâ° B ° vanât | puravare ni° M °vanât | punarvare ni° BM °tvâ so°. — 17. M °naivaṁ pi° BM °prâṇiyaṁ na ca bhuṁjati(M °ti |) tanati hi çva°. — 18. BM tam avaca madhurasiragi(M °sivani)rayâ ° thivîpâlâ(M °pâro). — 19. B nâmava ° pâṇiyaṁ a°. — 20. B °me | mâ ku socisthâ ga° M °çocitvâ || .

गजोत्तमो आ[301b]ह ॥

न खु शोचामि नरपते बन्धनमुपरोधनं क्षुधपिपासां ।
इतो च मे दुःखतरं नरेश्वर तेन शोचामि ॥

राजा आह ॥

किन्तव इतो गजवर दुःखतरं दुःखतरं पुनरन्यं ।
येन ते न प्रतिभाति पानीयमशनं च आख्याहि ॥

गजपोतको आह ॥

माता मम गतवया जीर्णा अतिवत्सला नयनहीना ।
सा मया विना मरिष्यति नरेश्वर तेन शोचामि ॥
तस्याहं बिसमृणालं पूर्वं उपानयामि अनयनाये ।
भुंजामि पश्चात्मना साद्य अनसना ति शोचामि ॥
ग्रीष्मे परिदग्धगात्रा शीतलवनच्छादितोदकं चैवं ।
उपनामेमि स्नपेमि च साद्य अनाथा ति शोचामि ॥
संप्रति वने अनयना परिभ्रमति रेणुगुण्ठितशरीरा ।
हा पुत्रेति च वदति तदद्य दुःखतरमासाद्य ॥
श्रुत्वा गजेन्द्रवचनं मनुजेन्द्रो सुमधुरं सुकरुणं च ।
अश्रुपरिपूर्णवदनो नरवरो वारणमध्यभाषित ॥
एकत्येषु मनुष्येषु सुदुर्लभा एदृशा गुणा सम्यक् ।
येन तव इमा गजवर हृदयस्मिं जायते पीडा ॥
मुंचथ लघु गजवरं चरतु वने गुरुजनं परिचरन्तो ।

2. BM °kshudhâm̃ pipâsâm̃(M °sân) i°. — 3. BM idam̃ ca° B °tena çvacâmi ‖ M °tena carâmi ‖. — 5. M kim̃ tuvo i° B kin tuvam̃ ite ga° BM °vara duḥ ° khataro punar a(B °naḥ a)nyam̃ ye°.

6. BM °nîyam̃ a(M °â)sanam̃°. — 7. M °pottako°. — 9. M so maye vi° B çâsaye tinâ mari° M °ra tem̃na ço°. — 10. BM °ham̃ biçamṛi ° pûrvam upetâmi ânayanâye- (M °nâya) bhum̃°.

12. BM °cchâyodakam̃ cai°. — 13. BM °memi snâpe° M °mi va sâ° B °câmi sam̃°. — 15. M °pupreti vadati ca vadati° BM °d adya naravara duḥ° M °khata- râm â°.

17. BM °pûrṇṇam̃ vadano naravâraṇa adhya° M °shito ‖. — 18. BM ekeshvama° M °dṛiçî gu° BM °ṇâ | (M °ṇâ) sam̃myak yena°. — 19. BM °ime ga ° dayasya janenti (M °netrî) pîḍâm̃ |.

भवतु जननी आश्वस्ता नंदतु सह पुत्ररतनेन ॥
सा गजवरस्य माता दुःखार्दितशोकशल्यसंशीर्णा ।
गगणमिव कालमेघो नादयति वनं परिचरन्ती ॥
भवतु जननी सवत्सा नन्दन्तु वनमृगा च वनदेवता ।
आख्याते नन्दतु मे अनयना माता रतनकेन ॥
दृष्टं लुब्धेहि दन्तहेतोः व्याघ्रेहि रुधिरमान्सार्थं ।
नीतं च राजधानिं गजोत्तमं काशिमाविचे ॥
वनदेवता भणन्ति गजोत्तमो प्रवरलक्षणसमंगी ।
तं गृह्ले काशिराजा वनात्पुरवरं निबन्धित्वा ॥
तं खु मरणं भविष्यति मह्यं अनाथाये नष्टनयनाये ।
सो पि च गजो मरिष्यति सुवत्सलो मह्यं शोकेन ॥
यो विचरे गिरिवरेषु वनेषु प्रवरेषु फुल्लशिखरेषु ।
स खु मरिष्यति नागो मम चोपवनं च शोचन्तो ॥
अथ तव न आतु गजवर जनेत्री त्वयि रोषिता न परिभ्रष्टा ।
प्रेमेन अनुचरित्य तथ तुह्य विमोचणं भवतु ॥
अथ त्वय न आतु वीर अदत्त्व तव जननिये प्रथमभक्तं ।
फलमूलभोजनं वा तथ तुह्य विमोचणं भवतु ॥
अथ गजवरो त्वरितो मातरमुपगम्य आलपति स्निग्धं ।
सुकुमारल[302ª]ताये च परिमार्जति रेणुपरिशुद्धां ॥

1. B °nî savastâ° M °nî sarvatâmrandatu sa°. — 2. B °javalasya° M °rditâ ço° BM °lyaçariro | . — 3. B °ti vanaṁ civamânî paricaranto | M °ti vanam ivâ mânî paricaranto. — 4. BM °nî vatsâ nandantu(M °ndaṁ bhu)vanaçakunakâ vanagajâ mṛi° M °devatâ ca ‖ B °devatâ ca â°. — 5. BM âkhyâtuṁ na° B °anayenâ° BM °ratnakena dṛi°.

6. BM dṛishṭaṁ(M °shṭaṁ |) lu ° ntakâraṇahetoḥ(B °toḥ |) vyâ° B °dhiramâtmârtha vi° M °nsârtha. — 7. BM vîtaṁ(M °tiṁ) ca râjadhâni ga ° maṁ(M °maṁ ‖) kâçi âvi(B °ci)-kshe va°. — 8. M °bharaṁti ‖ ga° B °nti | gajottamaṁ pra° M °samanvagî B °gî taṁ°. — 9. BM °gṛihya kâçirâjâ vanavare(M °nacale) ni°. — 10. M taṁ shu mara°.

11. B °shyati | su° BM °tsalo mama çokena putraçokena(M °traçokena |) yo°. — 12. B °vicara virivareshu vaheshu pravaneshu phûllaçikhaleshu na° M °rivareshu vahaseshu pravaneshu phullaçishareshu. — 13. BM na khu° B °ti | nâ° BM °go mama copa° M °naṁ çopavanaṁ ço°. — 14. BM atha tvayi na jâ° B °ra gajane° M °ra janane° BM °shṭâ pre°. — 15. BM °ritthe(M °rishṭaḥ) | tatha ° bhavatum atha°.

16. BM °tvayâ na jâ ° adatva mama(M °mamaṁ) jananiye(M °ye |) pra° B °ktaṁ pha°. — 17. M °vâ tathâ guhya° B °vâ te tha tu°. — 18. B °ro svarato mâ ° âlashati | snigdhaṁ su° M °âlavati°. — 19. BM °ye ca pramârja ° çuddhaṁ | .

बद्धो स्मि काशिराज्ञा पुरोत्तमे दारुणेहि पाशेहि ।
तव तु कृतेन अनयना मुक्तो पुन धर्मराजेन ॥
सा गजवरस्य घोषं श्रुत्वा स्पर्शं च तस्य उपलभ्य ।
प्रीतमनसा उदग्रा पुनः सनयना मजं लब्ध्वा ॥

हस्तिनिका आह ॥

एवं नन्दतु नन्दन्तो काशिराजा सबान्धवो ।
यथाहं अद्य नन्दामि पुत्रेण नयनेहि च ॥
एतं पुत्रं यथा पूर्वं शैलवने मृगान्विते ।
सपुत्रा अद्य नेत्रेहि पश्यति वरकुंजरं ॥
पूर्वजातिमभिज्ञाय संबुद्धो वदतां वरो ।
जातकमिदमाख्यासि शास्ता भिक्षुणमन्तिके ॥
अहं गजवरो आसि माता सा आसि हस्तिनी ।
तेनाद्याप्यस्या पुत्रो हं गाढस्नेहा च गौतमी ॥
एवं दीर्घस्मिं संसारे स्नेहद्वेषेण दुःखिता ।
स्नेहद्वेषप्रहाणार्थं धर्मं चरथ निर्ममा ॥

हस्तिनीजातकं समाप्तं ॥

त्रिभिः प्रातिहार्यैर्बुद्धा भगवन्तो सत्त्वां विनयन्ति । तद्यथा ऋद्धिप्रातिहार्येण अनुशासनीप्रातिहार्येण धर्मदेशनाप्रातिहार्येण ॥ भगवता इमेहि त्रिहि प्रातिहार्येहि

1. BM baddho smiṁ kâçirâjño(M °jâ) pu° M °ttame kâçirâjâ dâ°. — 2. BM °anayena mukto punaḥ dharma°. — 3. BM °bhya prî°. — 4. BM °tamanâ u° B °labdhâ ‖. — 5. M °stinîkâ°.

6. BM °tu nando(M °ndâ)to kâ° B °jâ subâ°. — 7. M °ndâsi pu°. — 8. BM ete putra yathâ(B °tha)pû° BM °çailâva° B °mṛigagandhâ su° M °mṛigondhakâ ‖. — 9. B suputrâdya ° hi yasyasi varaṁ kuṁ° M °hi yasyâsi va° B °jaraṁ pû°. — 10. M pûrvaṁ jâ ° jñâye sambuddho varatâm varaṁ ‖.

12. BM °varâ âsi mâ°. — 13. B °dyâpi putravagâ° M °dyâpi putra evâpi gâ° BM °snehe ca gauttamî |. — 14. BM °sâre saṁsaranto na prâṇinâṁ(B °nâṁ |) sne° B °haduḥkhena dveshena sne° M °sheṇa atiduḥ°. — 15. M °shaprâhâ° BM °rmamâ(B °mâ ‖) nimilaçaile ṛishisaṁghasevito na(M °vite ni)rvânti dhirâ vatibhûtashaṇḍe gharo(M °ṇḍe ye ca ghano)ttamaṁ cchindiya maṇḍa(M °maṁḍa)lâçayaṁ ‖.

16. M iti çrîmahâvastuavadâne hastiyâ°. — 17[1]. M atha tribhir prâti° B °hârye buddhâ° M °vantaṁ sa ° nayati ‖. — 17[2]. B °dhaṛma ° ryeṇa bha°. — 18. BM °gavato i° M °mehi trihi prâti° B °hûni ca prâ°.

न्यग्रोधारामे बहूनि प्राणिसहस्राणि आर्ये धर्मे विनीता ॥ अथ खलु राहुश्चासुरेन्द्रो वेमचित्री च असुरेन्द्रो मुचिलिन्दो च असुरेन्द्रो षष्ठीहि असुरनयुतेहि सार्धं प्रभूतं गन्धमाल्यमादाय बहूनि असुरसहस्राणि च बहूनि च असुरकन्यासहस्राणि सर्वालंकारभूषितानि आमुक्तमणिकुण्डलानि महता असुरानुभावेन महता असुरऋद्धीये येन कपिलवस्तुन्यग्रोधारामस्तेनोपसंक्रमित्वा न्यग्रोधारामस्य उपरि वैहायसमन्तरीक्षे स्थित्वा भगवतो पूजासत्कारमकरेन्सुः । सर्वगन्धेहि सर्वमाल्येहि सर्वनृत्येहि सर्वगीतेहि सर्ववादितेहि सर्वतूर्यताडावचरेहि भगवन्तं सत्कृत्वा गुरुकृत्वा मानयित्वा पूजयित्वा अपचयित्वा अनुत्तराये सम्यक्संबोधये चित्तमुत्पादेन्सुः । अहो पुनर्वयं पि भवेम अनागते अध्वाने तथागता अर्हन्तः सम्यक्संबुद्धा विद्याचरणसंपन्नाः सुगता लोकविदनुत्तरा पुरुषदम्यसारथयः शास्तारो देवमनुष्याणां यथायं भगवानेतर्हिं एवं द्वात्रिंशतीहि महा[302ᵇ]पुरुषलक्षणेहि समन्वागता भवेम अशीतिहि अनुव्यंजनेहि उपशोभितशरीरा अष्टादशहि आवेणिकेहि बुद्धधर्मेहि समन्वागता दशहि तथागतबलेहि बलवां चतुर्हि वैशारद्येहि विशारदा यथा भगवां एतरहिं एवञ्च अनुत्तरं धर्मचक्रं प्रवर्तेम यथापि भगवता एतरहि । एवं च मो देवमनुष्या श्रोतव्यं श्रद्धातव्यं मन्येन्सुः यथा व भगवतो एतरहि एवं च समग्रं श्रावकसंघं परिहरेम यथा भगवां एतरहिं । एवं तीर्णा तारयेम मुक्ता मोचेम आश्वस्ता आश्वासेम परिनिर्वृता परिनिर्वापेम । एवमेतं भवेय बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय महतो जनकायस्य अर्थाय हिताय सुखाय देवानां च मनुष्याणां च ॥ अथ खलु भगवान्तेषामसुराणामिदमेवंरूपं चेतोप्रणिधानं

1. M °hulaççâ ° tri vâsurendraḥ mucilinda vâsureṁdro sha° BM °dâya bahûni asurâya ca(M °râṇi) bahûni ca asuraka(B °kaṁ)nyâ° B °laṁkâlabhû° BM °ddhiye na kapilavastu-(M °staṁ) nyagrodhârâmas te(M °maṁ te)no° M °hâyasavanta ° retsuḥ B °retsuḥ | .

6. M °ttaroyo sa° B °ttarâye saṁmya° BM °detsuḥ | . — 9. BM °yaṁ pi bhaveya anâgate(M °tam) a° M °dhvânaṁ tathâgatâm arhantas samyaksaṁbuddho vidyâ° BM °nnâḥ (M °nno) sugato lo° M °ttaraḥ purushada ° çâstâ devânâṁ ca manushyâ° BM °ṇehi samanvâgatâ(M °to) bhavema | açi° M °rîro ashṭâdaçehi â° BM °dyehi viçârado yathâ (M °thâyaṁ) bhagavâṁ° M °ñ ca samagraṁ anuttaradha ° rtteyaṁ || ya° B °rtteyaṁ ya° M °vato etarahiṁ.

14. BM evaṁ ca so de° BM °çrotavyaṁ (B °vyaṁ çraddhâtavyaṁ) manyatsuḥ(B °tsuḥ |) yathâ ca bhagavato etarahi e(M °tarhim e)vaṁ ca so(M °sa) devamanushyâ çrotavyaṁ çraddhâtavyaṁ manyatsu(M °nyetsuḥ |) yathâ(B °thâ ca) bhagavataḥ e(M °tor e)tarahiṁ e(M °him e)vaṁ ca samagraṁ(B °gryaṁ) çrâ ° rema | ya° M °thâ ca bhagavân etarahim evaṁ ca ti° B °gavaṁ etarahiṁ evaṁ°.

16. BM °tîrṇno(M °rṇo) tâ ° mukto mocema âçvâsto âçvase(B °sa)ma parinirvṛitaḥ (M °to) parinirvâpeyam(M °rvâpadyaṁ) e°. — 17. BM evam etaṁ bhaveyaṁ bahujanahi° M °shyâṇâṁ || . — 19. M °vaṁrupaṁ udâraṁ ca praṇi° BM °smintaṁ prâdushka °

विदित्वा तस्याये वेलाये स्मितं प्रादुष्करे समनन्तरं प्रादुष्कृते च भगवतो मुखद्वारातो नानावर्णा अनेकवर्णा अर्चिषो निश्चरित्वा नीलपीतमाञ्जिष्ठा रक्तश्वेतावदाता कनकवर्णा सर्वं बुद्धक्षेत्रं ओभासयित्वा यावदकनिष्ठा देवनिकाया भगवन्तं त्रिखुत्तं प्रदक्षिणीकृत्वा भगवतो पुरतो अंतरहिता: ॥

अथ खल्वायुष्मानश्वकी येन भगवांस्तेनोपसंक्रमित्वा तेनांजलिं प्रणामयित्वा भगवन्तमेतदुवाच ॥ नाहेतुकं नाप्रत्ययं तथागता अर्हन्त: सम्यक्संबुद्धा: स्मितं प्रादुष्करोन्ति । को भगवं हेतु: क: प्रत्ययो स्मितस्य प्रादुष्करणाय ॥ अथ भगवानायुष्मता अश्वकिना पृष्टो तं [असुरा यावदकनिष्ठा देवनिकाया भगवन्तं त्रिखुत्तं प्रदक्षिणीकृत्वा भगवतो पुरत: अंतरहिता] असुराणां चेतोप्रणिधानं गाथाभि व्याकर्षि ॥

तत्रमकासि स्मितं द्विपदेन्द्रो
दानवचित्त विदित्वमुदारं ।
पृच्छति अश्वकि प्रांजलिं कृत्वा
दृष्ट स्मितं सुगतस्य मुखातो ॥
नेह अहेतुक लोकप्रदीपो
प्रादुकरोति स्मितं परमर्षि ।
ब्रूहि नरोत्तम हेतु स्मितस्य
यत्ते कृतं इह लोकहितेषी ॥
अद्य निःसंशयं बोधिमुदारा
केनचि संजनिता परिभाषां ।
यस्य तथागत आशय ज्ञा[303*]त्वा
प्रादुकरोति स्मितं रमणीयं ॥

ntara(M °re) prâdurkṛito(M °shkṛitâm̃) yam̃ bhagavato mu° M °rci niçca° B °ñjishṭâ rakta° M °ñjishṭaraktaçvetavadâ ° sarvabu° BM °tram̃ âbhâsam̃ obhâ° B °d akanishṭâ de° BM °kâyena bhagavantam̃ tṛittam̃(M °ntam̃ trishkṛityam̃) pra° M °purato antarhitâ ‖.

5. B °çvaki ye°.

6. B °ntaḥ sam̃mya° BM °prâduḥkaro(M °rom̃)ti |. — 7[1]. M °gavan hetuḥ° B °yo smim̃ta°. — 7[2]. BM °tam̃ asurâ akanishṭhâ(B °shṭâ) de° B °ntam̃ tṛikshu° M °trishkṛityam̃ pra ° purato am̃tarhitvâ a° B °hitvâ a° M °gâthâm̃ vyâkârshit |.

11. BM tatram ahâkâsi smitam̃ dvijendro(M °dvipem̃dro) tâna° M °citte viditvâm̃ u° BM °ram̃ pṛi°. — 13. BM °ti | a° B °dṛishṭasmim̃ su° M °dṛishṭe smi°. — 15. BM °prâdushkaroti | smṛi(M °ti smṛi)tim̃ paramaṛishi brû(B °kru)°.

17. B kruhi ° kṛitosmi valo° M °kṛitâsmi sarvalokahiteshi ‖. — 19. B °çaya bo° BM °dhim udâram̃(M °ra) kena citta sam̃janito parishâyam̃ ‖.

21. B °gatasya âça° BM °prâdushkaro°.

संशयितो पि अयं इह अद्य
दृष्ट स्मितं सुगतस्य मुखातो ।
ब्रूहि नरोत्तम मा चिरमस्तु
छिन्दहि संशयितान विशेषं ॥
यं अकरि स्मित लोकप्रदीपो
दानवपूजं विदित्वमुदारां ।
व्याकरणं भण आसुरकायं
यं व शुणित्व भवेय उदग्रो ॥

भगवानाह ॥

साधु ते अश्वकि पृच्छिता प्रश्ना
यस्य कृते स्मितं लोकहितस्य ।
तस्य ते वक्ष्यं फलं निखिलेन
एकमनो भणतो मे शृणोहि ॥
पूजा इह मे कृता असुरेहि
बोधिमनुत्तरं प्रार्थयमाना ।
ते विजहित्व तमासुरकायं
स्वर्गगता रमिष्यन्ति चिरं पि ॥
देवपुरायं चिरं निवसित्वा
पंचहि कामगुणेहि समंगी ।
मानुषलोकमिमं पुनरेत्वा
पूजयिष्यन्ति जिनां द्विपदेन्द्रां ॥
कल्पसहस्रशतानि बहूनि
कृत्व पुनः पुन पूज जिनेषु ।

1. B çamça° BM °yitâpayâmi(M °mî)ha ° drishtvâ smi ° khâto brû(B °kru)°. — 3. B krubi° M °ttamam̃ aci° B °ma maccira° BM °m asti cchi°. — 5. BM °pûjâ vi° M °ditvâm u°.

7. BM bhaṇa vyâkaraṇam̃ asu(M °suravyâkaraṇam̃ asu)ragaṇâ yam̃ ca çru° B °ṇitvâ bha° BM °dagrâ ‖. — 10. BM °te pricchati açvaki(M °kì) pri ° çnâ yam̃ me krita smi ° hitâya(M °ya ‖) ya°.

12. BM yasya° M °bhagato° B °ṇehî pû°. — 14. B °ha vyâkritâ | a° M °ha vyâkrito a° B °dhim uttamam̃ prâ° M °mânâḥ te°.

16. M °surakoyam̃°. — 18. B °ṇehi sâmam̃gî mâ° M °samanvagi mâ°.

22. M °tva punar punaḥ pûjati ji° B °naḥ punar pûja ji°.

काञ्चनसंनिभलक्षणधारी
सर्वे जिना भविष्यन्ति जितारी ॥
श्रुत्व च व्याकरणं असुराणां
तुष्ट उदग्रो सदेवकलोको ।
प्राणसहस्रशतानि बहूनि
प्रस्थित तत्र अनुत्तरयाने ॥

अथ खलु संवरो असुरेन्द्रो ताये वेलाये इमां गाथामध्यभाषि ॥

एदृशेहि मे मित्रेहि सदा भोतु समागमो ।
यं निशाम्य यमागम्य पूजेम द्विपदोत्तमं ॥

अथ खलु भगवांस्तानि षष्टी असुरनयुतानि अनुत्तराये सम्यक्संबोधीये व्याकरित्वा बहूनि च प्राणिसहस्राणि आर्यधर्मेषु प्रतिष्ठापयित्वा राजानं शुद्धोदनं च सपरिवारं च उद्योजये ॥ अथ खलु राजा शुद्धोदनो सपरिवारो उत्थायासनातो भगवतः पादौ शिरसा वन्दित्वा प्रक्रमे । तथा सर्वो जनकायो ॥

अथ खलु राजा शुद्धोदनो तस्यैव रात्रिये अत्ययेन प्रभूतं खादनीयं भोजनीयं प्रतिजागरित्वा कपिलवस्तुनगरं सिक्तसंमृष्टं कृत्वा अपगतरजं अपगतपाषाणशर्करकठल्लं मुक्तपुष्पावकीर्णं गन्धघटिकाधूपितधूपनं चित्रपरिक्षिप्तं विततवितानं ओसक्तपट्टदामकलापं । यावच्च कपिलवस्तुं यावच्च न्यग्रोधारामं नटनर्तकर्ल्लमल्लपाणिस्वरिकां कुम्भतूणिकशोभिकां द्विस्तलवेलम्बकां देशेदेशेषु स्थापयित्वा महता राजानुभावेन महता राजर्द्धीयेन भगवतो नगरं प्रवेशितं करोति ॥ अथ खलु राजा शुद्धोदनो भगवन्तं [303b] सश्रावकसंघं पुरस्कृत्वा राजकुलं प्रवेशेति ॥

1. BM °sarva jinâ° M °târi B °târi çru°. — 3. BM °ṇâm̃ uda ° devakulaloke(B °ke |). 5. BM °sthita(M °taḥ) tatrânu° M °rajâne ‖.

7. M °lu sam̃bahulo a° B °lu sambaro a ° verâye i°. — 8. M etâdṛi° B °dṛiço hi me°. — 9. B °niçâya yadâgamasya pû° M °çâmya yad âga°. — 10. M °shasthi nayu° B °ttarâye sam̃mya° M °srâṇi ca âryya° B °âryedha° M °vâram̃ udyojeya ‖ B °dyojeyam̃ ‖.

12. B °gavatoḥ pâ° M °gavatâ pâ ° sâ vam̃ditvâ°. — 13. BM °kâyo | atha°. — 14. M °syaiva râtriye a ° stumahânaga ° ktasam̃sṛishtam̃° B °siktasam̃mishṭam̃° BM °shâṇam̃ çarkaraka(B °rkkala)ṭhallamukta° M °rṇṇam̃ gam̃dhagha° B °citram̃ parikshiptam̃ vigatavitânam̃ oçaktapaṭṭa° M °ptam̃ vitatavimânam̃ oçaktapatradâ° B °lâpam̃ dhûpam̃ dhûtam̃ muktapushpâvakîrṇṇam̃ | M °kalapam̃ dhûpanadhûpam̃ pushpapushpâvakîrṇam̃ |.

17. B °rttakam̃ ṛi° M °svarakâm̃ kum̃bhatûṇikâm̃ ço° B °kumbhatuṇḍikaço° BM °dvistavala(M °vara)velam̃cakâm̃ ° praveçinam̃ ka°. — 19. BM °ntam̃ çrâva°.

अथ खलु भगवां शुद्धोदनस्य निवेशनं प्रविशित्वा प्रज्ञप्त एवासने निषीदे यथासनो च भिक्षुसंघो ॥ अथ खलु राजा शुद्धोदनो भगवन्तं स्वहस्तं प्रणीतेन प्रभूतेन खादनीयभोजनीयेन सन्तर्पयति संप्रवारेति मित्रामात्या च भिक्षुसंघं ॥ अथ खलु भगवां भुक्तावी धौतहस्तो अपनीतपात्रो राजानं शुद्धोदनं धर्म्या कथया संदर्शयित्वा समादापयित्वा समुत्तेजयित्वा उत्थायासनातो प्रक्रमे ॥ अपरं दिवसं महाप्रजापती गौतमी भगवतो सश्रावकसंघस्य भक्तं करोति । अपरं दिवसं यशोधरा भक्तं करोति । अपरं दिवसं अन्तःपुरिका । अपरं दिवसं शाकियमण्डलं भगवतो सश्रावकसंघस्य भक्तं करोति ॥

यशोधराये दानि भगवतो सश्रावकसंघस्य मोदकं सज्जीकृतं सर्वं ज्ञातिवर्गं निमन्त्रितं ॥ भगवां कालज्ञो वेलज्ञो समयज्ञो पुद्गलपरापरज्ञो काल्यस्यैव निवासयित्वा पात्रचीवरमादाय भिक्षुसंघपरिवृतो भिक्षुसंघपुरस्कृतो यशोधराये निवेशनं प्रविशित्वा निषीदे प्रज्ञप्ते एवासने यथासणो च भिक्षुसंघो ॥ अथ खलु यशोधरा राहुलमाता महाप्रजापतीगौतमीये सार्धं ज्ञातिवर्गेण च भगवन्तं सश्रावकसंघं प्रणीतेन खादनीयभोजनीयेन सन्तर्पयति संप्रवारयति ॥ ताये दानि यशोधराये राहुलस्य हस्ते प्रत्यग्रो प्रणीतो मोदको वर्णगन्धरसोपेतो दिन्नः गच्छ इमं मोदकं पितुर्देहीति ॥ तेन गच्छित्वा भगवतो पात्रे प्रक्षिपित्वा भगवतो छायायां निषीदित्वा मातरमेतदुवाच ॥ सुखा खल्वम्ब श्रमणस्य इयं छाया ॥ अथ खलु यशोधरा राहुलं कुमारमेतदुवाच ॥ याच पुत्र पैतृकं धनं ॥ अथ खलु राहुलो कुमारो भगवन्तमेतदुवाच ॥ देहि मे श्रमण पैतृकं धनं ॥ भगवानाह ॥ राहुल प्रव्रजाहि ततो पैतृकं धनं दास्यामि ॥ अथ खलु राजा सान्तः-

1. M °vâm̃ râjâ çuddho° BM °thâsane ca° M °sam̃ghe ‖. — 2. B °gavam̃tam̃ sva° M °khâdanîyena bhojanîyena sam̃tarpa° B °rpayanti sam̃pracâreti ‖ mi° M °pracârayati mi° kshussam̃gham̃ ‖. — 3. M °haste apa° B °danam̃ dhâryakatha° M °danam̃ dharmyâ katha° B °dâyayitvâ samu° utthâsanâ°. — 5. B °diva mahâ° gauttamî°.

6. M °dharâ divasam̃ ka° B °roti a°. — 7[1]. M °rikâḥ. — 7[2]. M °kiyamam̃ḍalam̃. — 9. BM °to çrâva° B °kam̃ sarjjikṛi° M °kam̃ sarjikṛi° nimam̃tritam̃ |. — 10. BM °velajño samayejño pum̃gala(M °gava)parâparajño kâlya(B °la)syai° thâsane ca(M °va) bhikshusam̃gho(M °ghaḥ) ‖.

12. B °gauttamî° M °gavam̃tam̃ saçrâ° B °khâdanîye bho° M °khâdanîyena bhojanîyena sam̃tarpa° pracârayati | B °rayati tâ°. — 14. BM °hulas tasya° M °ste pratyâgre praṇî° to diçro gaccha° B °gaccha | imam̃ mokam̃ pi°.

16. M °cchitvâ bhagavato cchâyâ° B °prakshitvâ bha°. — 17. M °çravaṇa°. — 18[1]. M °dharâ râhulamâtâ râhu°. — 18[2]. M yâvat putra°. — 19[1]. M °çravaṇa° B °çramaṇam̃ pai°. — 20[2]. M °rivâro bhi° B °abhunsuḥ° M °bhûtsuḥ tu° hulaputro° dosham̃ ti ‖ B °doshonti |.

पुरे शाक्या च सपरिवारा हृष्टा अभून्सुः तुष्टा उदग्रा भगवतो राहुलो पुत्रो विनये यशोधराये किं दोषो त्ति ॥ यशोधरा दानि सर्वालंकारेहि आत्मानम-लंकृत्वा भगवन्तं परिविषति कथं पुनरा[304ª]र्यपुत्रो अगारमध्यावसति न च भगवतो चित्तस्यान्यथाभावो ॥ अथ खलु भगवां भुक्तावी धौतपाणि अपनीत-पात्रो राजानं शुद्धोदनं सान्तःपुरं महाप्रजापतीं गौतमीं च यशोधरां च राहुल-मातरं सपरिवारां धर्म्या कथया संदर्शयित्वा समादापयित्वा समुत्तेजयित्वा संप्रहर्षयित्वा उत्थायासनातो प्रक्रमे ॥

भिक्षू भगवन्तमाहन्सुः ॥ पश्य भगवं यशोधरा मोदकेहि लोभेति ॥ भगवा-नाह ॥ न भिक्षवो एतरहि एव एषा यशोधरा मम मोदकेहि लोभेति ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवं ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥

भूतपूर्वं भिक्षवो अतीतमध्वानं नगरे वाराणसी काशिजनपदे तस्य उत्तरेण अनुहिमवन्ते साहंजनी नाम आश्रमपदं शान्तं विविक्तं विगतजनपदं मनुष्यरहेयं प्रतिसंलयनसारोप्यं मूलोपेतं पत्रोपेतं पुष्पोपेतं पानीयोपेतं ॥ तहिं काश्यपो नाम ऋषिः प्रतिवसति पंचाभिज्ञो चतुर्ध्यानलाभी महर्द्धिको महानुभावो ॥ तेन ग्री-ष्माणां पश्चिमे मासे क्षुद्रपाकानि फलानि भुक्तानि तृषितेन च बहुतरं पानीयं पीतं । तस्य अभिष्यण्णा वातातपा संवृत्ता । तेन उपलकुण्डके सशुक्रं प्रस्रावं कृतं ॥ अपराये मृगीये तृषिताये तं प्रस्रावं पानीयसंज्ञाय पीतं ॥ ऋतुमतीये ताये मृगीये अशुचिप्रक्षिप्तेन मुखतुण्डेन सशुक्रं योनिमुखं जिह्वाय प्रलीढं । ताये संमूर्छयित्वा कुक्षिं प्रतिलब्धं ॥ सो च ऋषि मैत्रीविहारी तस्य मृगपक्षी पि न

2. B °rehi | â° M °tmâna alaṁkṛitvâ bhagavaṁtaṁ parivipati ka° B °na ca bhagavatâ ci° M °ttasyâṁnyathâbhâvaḥ ‖. — 4. M °vî dhotapâtro apanîtapâṇi râjâ° B °dhautaputro apanîtapâṇi râjâ° M °danaṁ syântaḥ° BM °prajâpati gauta(M °tta)mi ca yaço° dharmâ katha°.

8¹. M atha bhikshu bha° B bhikshu bha°. — 8². M yaçya bhagavan yaço° B °kehi lâbhehi ‖. — 9¹. M °rahim evam eshâṁ yaço° B °hi evam eshâ ° kehi lâbheti | M °bheti | anyadâpi eshâ mama modakehi lobheti ‖. — 9². BM bhikshu â°. — 10¹. M °gavan ‖. — 10³. BM °kshavo bhû°.

11. M °kshavaḥ atîtam adhyânaṁ ° çântaṁ praviviktaṁ° BM °heyaṁkaṁ prati° M °roghaṁ mulopetaṁ phalopetaṁ patropetaṁ pânî° B °mûlâpetaṁ patrâpetaṁ pushpâpetaṁ pânî° BM °yopetaṁ tahiṁ°. — 13. M °shiḥ vasa° B °lâbhi maha° BM °go te°.

16¹. B °abhipannâ vâ° M °abhishaṇâ vâ ° vṛittâḥ B °ttâ te°. — 16². M °ke suçu° B °kraṁ pramrâvaṁ kṛi° BM °taṁ a°. — 17¹. M °taṁ çukraprasrâ° B °taṁ pramrâvaṁ°. — 17². B ṛitugatiye tâni mṛi° M °tiye tâni mṛi ° khatuṁḍikena°. — 18. B °saṁmûcchrâyesvâ ku° M °rcchayetvâ°. — 19. M °ri tasya mṛigapakshi pi na santrasyaṁti mṛigapakshiçatâni âçramasya parisamantena caranti pravisanti va so pi mṛigi° BM °traiva(M °vaṁ) pratikramanti ‖.

सन्त्रसन्ति मृगपञ्चिशतानि आश्रमस्य परिसमन्ते चरन्ति प्रतिवसन्ति च सापि मृगी तस्यैव आश्रमस्य परिसमन्तेन चरति तत्रैव परिक्रमति ॥ सा दानि कालेन समयेन दारकं प्रजायति ॥ तेन ऋषिणा दृष्टा तस्यैतद्भूषि । कुतो इमस्या तिरिच्छानगताये मृगीये मानुषो अपत्यो ति ॥ समन्वाहरित्वा ऋषीणां ज्ञानं प्रवर्तति । सो दानि ऋषि समन्वाहरति । अमुकं कालं मये अधिमात्रं क्षुद्रपाकानि फलानि परिभुक्तानि बहुतरकं च मे पानीयं पीतं ततो मे अभिष्यन्देहि धातूहि उपलकुण्डके सशुक्रं प्रस्रावं कृतं । एताये मृगीये तृषिताये पानीयसंज्ञाये [304$^b$] पीतं ऋतुमतीये ततो च ताये कुक्षिं प्रतिलब्धं । ममैवैषो अंगनिस्रावो ति । तेन दानि गर्भरूपं अजिनकेन गृह्णीय तं आश्रमपदं प्रवेशितो ॥

सा दानि मृगी पृष्ठतो अन्वेति । तेन तस्य गर्भरूपस्य फलकेन नाभि च्छिन्ना तैलेन च अभ्यंगितो सुखोदकेन तं गर्भमलं परिधौतं ॥ सो ऋषि तं गर्भरूपं तस्या मृगीये स्तने अल्लीपेति सापि मृगी पायेति । ऋषिणापि तस्या मृगीये स्तनं तस्य दारकस्य मुखे प्रक्षिप्यति ॥ यं कालं सो दारको आसितो भवति ततः सा मृगी तस्य आश्रमस्य परिसमन्तेन चरित्वा पानीयं च पिबित्वा पुनः गर्भरूपं स्तनं पायेति जिह्वाग्रेण णं परिलेहति ॥ यं कालं सो गर्भरूपो पादेहि पि संस्थितः ततो स्वयन्तस्या मृगीये स्तनं गृह्णित्वा पिबति ॥ एकचरं शृंगकं जातन्ति तेन ऋषिणा एकशृंगो ति नामं कृतं ॥ सो दानि यथा से माता मृगेहि सार्धमण्वति तथा सो पि एकशृंगको ऋषिकुमारो अण्वति मृगेहि च मृगपोतकेहि च सार्धं क्रीडमानो । यतो यतः सा माता मृगगणेहि सार्धं अण्वति ततः ततो सो पि एकशृंगो ऋषिकु-

2. BM so dâ° B °jâpati te°. — 3[1]. BM °dṛishṭvâ ta°. — 3[2]. BM kuto imasya tiri° M °sho apatye pi sa°. — 4. M °vartteti ‖. — 5[1]. BM °ti a°. — 5[2]. BM °ye adhimâtram̃° M °pîtam̃ | tataḥ me° BM °bhiprasavehi dhâ° M °utparakundake° B °ṇḍalake ° pramrâvam̃°.

7. B °ṛitumatitatârakâye kukshi pra° M °to ratâye ku°. — 8. M mamevai° BM °niçrâvo ti te°. — 9. M °dâni rû ° ghṛihnîya tam âçra ° çitaḥ. — 10[1]. M so dâ° BM °nveti tena°. — 10[2]. M °phalakenâbhicchinnât taile° B °khodakona tam̃° BM °dhautam̃ so°.

11. B so rishi tam̃° BM °tasya mṛi° B °llîyeti sâ° M °lliyanti sâpi mṛigi prâpeti ‖. — 12. BM so pi ṛishi pi tasya mṛi° M °ye stam̃nam̃ °kshishyati. — 13. M yam̃ kâram̃ so ° vati | tato sâ° B °vati | tataḥ° BM °yeti | jihvâyena caram̃ pari° B °hatâ yam̃°. — 15. M °hi pi am̃ṭhito tataḥ sva° BM °n tasya mṛi° M °giye svanam̃° BM °gṛihnitvâ° B °bati e°.

16. M ekam̃ caram̃° B ekam̃ varam̃ çrim̃gṛikam̃° BM °jâtan tena° B °go hi nâmam̃°. — 17. BM° yathâ me mâtâ mṛigehi sârddham̃m aṇva(M °m am̃ṭha)ti | tathâ so pi (M °thâpi so) e° M °kumârah aṇva° B °ḍamo vo yato°. — 19. M mataḥ yato so tâm̃ mṛigagaṇehi yataḥ yataḥ sa mâtâ mṛgagaṇehi sârddham̃ aṇvati | tato tataḥ so ° ekam̃çṛim̃gako ṛi° B °rddham̃ aṇvati | tataḥ°.

मारो अण्वति । मृगपोतकेहि सार्धं क्रीडन्तो अण्विय अण्विय मृगेहि मृगपोतकेहि च सार्धं पुनस्तं ऋषिस्य आश्रमपदं आगच्छति । ततो नं ऋषि क्षुद्रक्षुद्राणि फलानि वर्णगन्धरसोपेतानि देति ॥ यदा सो ऋषिकुमारो आश्रमपदे शयितो भवति ततो बहू मृगा च मृगपोतका च तमृषिकुमारमनुपरिवारेत्वा शयन्ति ॥ यं वेलं ते मृगा च मृगपोतका च चरितुकामा भवन्ति ततः तमृषिकुमारं शयमानं मुखतुण्डकेन प्रतिबोधयन्ति ॥ एवन्ते मृगा च मृगपोतका च नानाप्रकारा च पक्षी तेन ऋषिकुमारेण सार्धं तत्र आश्रमपदे अभिरमन्ति ॥ यं कालं सो एकशृंगको ऋषिकुमारो विज्ञप्राप्तः संजातो तस्य ऋषिस्य तं आश्रमं सिंचति संमार्जति मूलानि नानाप्रकाराणि आनेति पत्राणि आनेति उदकं आनेति काष्ठानि आनेति तमृषिं परिमर्दति स्नापेति अग्निहोत्रं प्रतिजागरेति । तमृषिं परिविसति नानाप्रकारा[305a]हि मूलविकृतीहि पत्रविकृतीहि पुष्पविकृतीहि फलविकृतीहि पानीयं उपनामेति । प्रथमं तं ऋषिं परिविसित्वा तां च मृगीं मातरं पश्चात्स्वयमाहारं करोति ॥ तेन ऋषिणा तस्य ऋषिकुमारस्य ध्यानानां च अभिज्ञानां च मार्गमुपदिष्टं ॥ तेन दानि ऋषिकुमारेण पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्तेन विहरन्तेन घटन्तेन व्यायमन्तेन चत्वारि ध्यानान्युत्पादितानि पंच चाभिज्ञा साक्षीकृता ॥ सो दानि ऋषिकुमारो चतुर्ध्यानलाभी पंचाभिज्ञो कौमारब्रह्मचारी महर्द्धिको महानुभावो संजातो अभिज्ञातो देवमनुष्याणां ॥

एकशृंगको ऋषिकुमारो अनुहिमवन्ते गंगाये नदीये कूले साहंजनीआश्रमपदे प्रतिवसति । वाराणसीयं च नगरे काशिराज्ञो पुत्रो न भवति ॥ तेन दानि बहू इष्टिप्रक्रियास्थानानि कृतानि पुत्रार्थाय यथा मे पुत्रो भवेय न चास्य पुत्रो संभवति

1. BM mṛigîpo° M °ḍante | aṇviya mṛige° B °nto aṇviya açviyo mṛige° M °kehi sâ° çramasya padam̃°. — 2. M tataḥ tam̃ ṛishim̃ kshudra° B °to mam̃ ṛi° lâṇi va° M °rṇagam̃dhara° B °tâni | deti ya°. — 3. BM °bahu mṛigi ca mṛiga° M °parishâretvâ çayam̃ti ‖. — 5. B °lam̃ tam̃ mṛigâ° M °gâ ca mṛigâ ca mṛiga° BM °tukâmo bha° M °vanti | tataḥ tam ṛishi° khatum̃ḍake° BM °dhayanti(M °yati) mṛigapakshihi e°.

6. M eva te mṛigâ° potakâ vaca nânâpra° pakshi te°. — 7. BM °ro âvijña° B °ṛishi tam̃° M °ṛishi tam âçritam̃ sim̃ca° B °cati sanmârja° M °rjayati | mû° prakârâṇi mûlaprakṛitihi âneti patrâṇi âneti kâshṭâni âneti ‖ tam ṛi° B °jâgaroti |. — 10. M tam̃ ṛishim̃° B °rivivasati nânâprakârâṇi mû° M °prakârâṇi mûlaprakṛitihi pushpa° nîyam upa° B °meti pra°. — 12. M °mam̃ tam ṛishim̃° BM °riviçitvâ° mṛigi mâta° M °ram̃ paçya svayam̃ âhâ°. — 14. B °viharatena gha° M °viharantena vyâ° tpâdayitâ°.

16. M °câbhijñâ kaumarabra° ri maharshiko° B °jñâtâ de° BM °shyâṇâm̃ e°. — 18. BM °diye kule sâham̃jana(M °nî)m âçra°. — 19². B °hû yashṭhopayâ kritakâni kṛi° M °hû yashṭinpakriyâs te tâni kṛi° B °sam̃bhavati | vi° M °stirṇâ antaḥ° BM °ro ca asti |.

विस्तीर्णे अन्तःपुरे धीतरो व अस्ति ॥ तेन दानि काशिराज्ञा श्रुतं । गंगाय कूले साहंजनी नाम आश्रमपदं तत्र काश्यपो नाम ऋषि प्रतिवसति तस्य राजऋषिस्य तत्र आश्रमपदे प्रतिवसन्तस्य मृगीये सकाशातो एकशृंगको नाम ऋषिकुमारो उत्पन्नो ति । यन्नूनाहं नलिनीधीतरां राजकुलकुमारीं एकशृंगस्य ऋषिकुमारस्य ददेयं सो मे पुत्रो भविष्यति जामातिको च ॥ अथ खलु भिक्षवो स काशिराजा ब्राह्मणपुरोहितमाह ॥ तत्र काश्यपो नाम ऋषिः प्रतिवसति । तस्य राजर्षिस्य तत्र आश्रमपदे प्रतिवसन्तस्य मृगीये सकाशातो एकशृंगको नाम ऋषिकुमारो उत्पन्नो ति । यं नूनाहं नलिनीधीतां राजकुमारीं एकशृङ्गस्य ऋषिकुमारस्य ददेयं सो मे पुत्रो भविष्यति जामातिको च ॥

अथ खलु भिक्षवः स काशिराजा ब्राह्मणं पुरोहितं राजाचार्यं आमन्त्रयति । गच्छथ पुरोहित इमां नलिनीं राजकन्यां एकशृंगस्य ऋषिकुमारस्य देथ । सो मे पुत्रो भविष्यति जामातिको च ॥

अथ खलु भिक्षवो ब्राह्मणपुरोहितो राजाचार्यः नलिनीं राजकुमारीं सपरिवारां अश्वरथे आरूढयित्वा प्रभूतं चान्नपानं मोदका[305b]नि च नानाप्रकाराणि खादनीयभोजनीयानि आदाय साहंजनीं आश्रमपदं आगमे ॥ ते च दानि साहंजनीमाश्रमपदं गत्वा आश्रमस्य नातिदूरेणापि समीपे गता ॥ तत्र नलिनी राजकुमारी सखीहि सार्धं क्रीडति हसति तानि च क्रीडमानानि दृष्ट्वा तानि मृगपक्षिगणानि सन्त्रसन्ति दिशोदिशं परिधावन्ति ॥ अथ खलु भिक्षवः एकशृंगस्य ऋषिकुमारस्य एतदभूषि ॥ किं नु खल्विमे व्य मृगपक्षिगणाः सन्त्रसन्ति दिशोदिशं च परिधावन्ति ॥ अथ खलु भिक्षवः एकशृंगो ऋषिकुमारः येन नलिनी राजकन्या तेनागमि ॥ अद्राक्षीद्भिक्षव एकशृंगको ऋषिकुमारो नलिनीं राजकुमारीं सखीहि सार्धं क्रीड-

1[1]. BM °tam̃ gam̃°. — 1[2]. M °gâye kule saham̃° BM °ṛishisya | tatra° M °de praticasanta°. — 4. M yam̃ nûnâ° B °ham̃ nalînidhî ° tasya dadyeyam̃ ° shyati | jâ° M °shyati yâmâ°. — 5. B °brâhmaṇabrâhmaṇapu°.

6[2]. B °çâto | e°. — 8. M yannunâ° B °rasya dadeyam̃° M °shyati yâmâ°. — 10. M °kshavo sa kâ°.

11[1]. B gaccha ta pu ° mâm̃ nandalinî râjakanyâ e°. — 13. BM °rohita râ° M °jâcâryyo nali ° tam̃ cânteyânam̃ modakâni khâ° B °dâya soham̃° M °ham̃janîm âçra ° dam̃ âm̃gamya B °game te°. — 15. M te ca | tâni sâ° B °ca tâni soham̃° M °gatah | B °gatâ ta°.

16. M °ṇâni sam̃trasam̃ti diço ° dhâvam̃ti | . — 18. M °rasyaitad a°. — 19. M °ṇâḥ sam̃trasam̃ti diço ° dhâvayam̃ti ‖ B °dhâvayanti ‖ . — 20. BM °go rishi° M °mâro ye° B °râjakam̃nyâ°.

21. M °kshavaḥ e ° lini râjakumârî sa° B °hehi ca vastrehi ca dṛi° M °strehi ca dṛi°.

न्तीं स्वलंकृतां सुभूषितां महार्हेहि वस्त्रेहि । दृष्ट्वा च पुनः तस्यैतदभूषि ॥ शोभना खल्विमे ऋषिकुमारा उदाराणि तासां अजिनानि जटानि च अजिनमेखलानि च ॥ निध्यायति राजकन्यानां । सो दानि राजकन्यानां अजिनमेखलानि अतिरिव काये विभासन्तानि पश्यति ॥ सो दानि एकशृंगको नलिनीं पृच्छति ॥ शोभनानि युष्माकं अजिनानि जटानि मेखलानि च कण्ठसूत्राणि च ॥ सा दानि नलिनी राजकुमारी एकशृंगं ऋषिकुमारं हस्ते गृह्य आह ॥ एतानि एदृशानि अस्माकं अजिनानि च मेखलानि च कण्ठसूत्राणि च हस्तसूत्राणि च ॥ सा दानि तस्य ऋषिकुमारस्य मोदकानि पानं च अनुप्रदासि इदमस्माकं हस्ते मोदकं परिभुंजाहीति ॥ तेन दानि तानि मोदकानि परिभुक्तानि पानकं पि च पीतं ॥ तस्य तहिं आश्रमपदे कटुकषायेहि फलफलेहि जिह्वेन्द्रियप्रत्याहतस्य तेहि मोदकेहि परिभुंजमानस्य अतिरिव रसेषु आस्वादो नुगृहीतो ॥ तानि च पानकपिबनानि पीत्वा सो दानि आह ॥ शोभनानि युष्माकमिमानि फलाफलानि.पानीयं च अजिनमेखलानि च कण्ठसूत्राणि च हस्तसूत्राणि च उदाराणि न भोजनानि अस्माकं आश्रमे एदृशानि ॥

अथ खलु भिक्षवो नलिनी राजकुमारी एकशृंगं ऋषिकुमारं एतदुवाच ॥ आगच्छ ऋ[306ª]षिकुमार इदमस्माकं उटजानि संचारिमानि येन इच्छाम तेन एतानि उटजानि आदाय गच्छाम आगच्छ अस्माकं उटजं प्रविश आश्रमं ते च उपदर्शयिष्यामि ॥ सा दानि नलिनी तत्र यानं अभिरुहित्वा एकशृंगस्य हस्तं प्रणामि आगच्छ प्रविशाहि इदमस्माकं उटजं आश्रमं प्रवेक्षाम त्ति ॥ सो दानि तत्र याने अश्वानि आयुक्तानि दृष्ट्वा आह ॥ मम मृगी माता इमं च उटजं मृगा

1[1]. M °punar asyai°. — 1[2]. BM °me ṛishiḥ ku ° lâni ca ni°. — 3[1]. B °dhyâyanti râ°. — 3[2]. M °bhâ sayaṁtâni paçyaṁti || B °çyanti || . — 4[1]. M °pîṁ paçyati || so dâni ekaçṛiṁgako nalinî pṛicchati | . — 4[2]. M °yushmâñkaṁ ajinâni ca mekhalâni ca kaṁṭhasutrâ°. — 5. B °çṛiṁgasya ṛi°.

6. M °lâni ca kaṁṭhasutrâṇi ca ha°. — 7. B °pradâni i° M °pradâni | i° B °hasto mo° BM °bhuṁjati | . — 9[1]. BM tena dâni kâçirâjâ paribhuṁjâhî(M °ti)ti | tena dâni tâ ° kaṁ pi vânaṁ ca pi° B °taṁ ta°. — 9[2]. BM °dehi kaṭu° M °lehi dvijihvendriyehi pratyâ ° shu âçvâdânugṛihîtâ || B °svâdânugṛiddhatâ tâ°.

11. M jñâni ca pâ° BM °pibânâni pîtvâ || so°. — 12. M °mâni phalaphalâni pâ ° khalâni ca kaṁṭhasutrâṇi ca hastasutrâṇi ca u BM °râṇi bhoja° M °smâkam âçra°. — 15. M °vâcat || .

16. B °kaṁ udapâni saṁ° M °kaṁ udupâni sacâri° BM °etâni uda(M °du)pânâni âdâ° kaṁ udayaṁ pra° BM °çramaṁ te(M °me) na upadarçayishyami || . — 18. B °ṇâti â° M °udayam âçra° BM °maṁ pravishyâman ti || . — 20. M mama çriṁmî mâ° BM °ca udayaṁ mṛigâ° M °vahaṁti nâ°.

वहन्ति नाहं अत्र प्रविशामि ॥ सा दानि नलिनी एकशृंगस्य ऋषिकुमारस्य हस्ते लगति कण्ठे लगति आलिंगति चुम्बति प्रलोभेति च ऋषिकुमारो च ताये नलिनीये मूर्धातो उपादाय यावत्पादेषु निमित्तं पश्यति । अन्यादृशा स्वकानि जटानि अन्यादृशानि नलिनीये अन्यादृशं रूपं पश्यति अन्यादृशं नलिनीये अन्यादृशं स्वकं मुंजमेखलं अन्यादृशं नलिनीये अन्यादृशानि स्वकानि हस्तसूत्राणि पश्यति अन्यादृशानि नलिनीये ॥ सा दानि ऋषिकुमारेण सार्धं आलापसमालापं कृत्वा विश्वासं च संभावयित्वा प्रेम्नं च संजनयित्वा यथोक्तं भगवता ॥

पूर्वेवासनिवासेन प्रत्युत्पन्नहितेन वा ।
एवन्तं संजायते प्रेम्नं उत्पलं वा यथोदके ॥
यत्र मनं निवसति चित्तं वापि प्रसीदति ।
निष्ठां पण्डितो गच्छेया संतुष्टा मे पुरे सह ॥

तेषां संसारे सन्सरन्तानां दीर्घरात्रं जन्मसहस्रकोटीभिः परस्परेषां समागमो आसि भार्यापतिषां तस्मात्तेषां सह दर्शनेन परस्परं प्रेम्नं निपतति ॥ सा दानि नलिनी एकशृंगस्य ऋषिकुमारस्य प्रलोभनाभिप्राया राजार्हाणि मोदकानि खादनीयभोजनीयानि च परिभुंजापेत्वा प्रणीतानि च पानकानि पायेत्वा आलम्बित्वा च चुंबयित्वा च कण्ठसमालपतो च कृत्वा अश्वयानं अभिरुहित्वा वाराणसीं प्रत्यागता ॥ एतां प्रकृतिं विस्तरेणारोचयति ॥ एकशृंगको ऋषिकुमारो पि आश्रमं गत्वा तां नलिनीं राजधीतां मूर्धातो समुपादाय यावत्पादेषु रंजनीयानि निमित्तानि मनसिकरोन्तो आसति नैव मूलफलानि आनेति न उदकं न काष्ठानि न आश्रमपदं संमार्जति अग्निहोत्रं पटिजागरेति ॥

1. M °ṇthe lagneti â ° to udupâdâya° B °çyati a°· — 3. BM °jaṭâni anyâdṛiçâni naliniye anyâdṛiçâni rû° M °paṁ paçyati anyâdṛiçaṁ naliniye anyâdṛiçâni rupaṁ paçyati anyâdṛiçaṁ svakaṁ muṁjamesharaṁ anyâdṛiçâni svakâni hastasutrâni paçyati ‖ anyâdṛiçâni naliniye ‖ B °sùtrâni pa°.

6. M sa dâni tena ṛishiṇâ ku° BM °âlâpaṁ samâ° B °paṁ vitvâ° BM °viçvastaṁ ca saṁbhâ°. — 8. M °tpannehi°. — 9. M °tparaṁ vâ°. — 10. M °vasaṁti ‖ ci° B °vasanti ci°.

11. M nishṭâ paṁḍito gacchemâ saṁ° B nishṭhâ paṇḍi ° tustâ me ° sahâ te°. — 12. M teshâṁ sansâre sansâraṁtânâṁ° B °rgharâtrajatmasa° BM °hasrâ koṭıbhi(M °bhiḥ) paraspare° M °gamaḥ â° BM °bhâryyâ(B °ryâṁ)patishâm abhùt teshâṁ° B °nipyutanti | M °nipâtyaṁti ‖. — 13. B so dâ° M bho dâ ° lobhenâpi abhimâyâ râjârhâ ° bhojanimâni ca pari° BM °ṇitâni ca pânakâni ca pâyatvâ alambi(M °âlaṁbi)tvâ ca cuṁ° M °bayitvâ ca kaṁṭhe sa ° çvayânam abhiruhiya vâ ° gato e°.

17². M °navaṁ mulapha ° kaṁ na kâṁshṭhâni° B °daṁ samârjati | agni° M °traṁ pratipâkaroti | B °tıpâkarotı | .

सो दानि ऋषिः [306b] तं कुमारं चिन्तापरं दृष्ट्वा पृच्छति ॥ न ते काष्ठानि भिन्नानि न ते उदकं आहृतं अग्निहोत्रं न जुहितं किन्तुवं ध्यानं ध्यायसि ॥ ऋषिकुमारो आह ॥ इह अन्यातो आश्रमातो ऋषिकुमारो संबहुलेहि ऋषिकुमारेहि सार्धं आगतो प्रासादिको दर्शनीयो शोभनेहि जटेहि अजिनेहि शोभनेहि कण्ठसूत्रेहि हस्तसूत्रेहि शोभनेहि मुंजमेखलेहि मृष्टानि च सानं फलफलानि पानीयं च न एदृशं यथास्माकं मृगयुक्ते पि उटजे अच्छन्ति ते मया आश्रमस्य अमुकस्मिं प्रदेशे दृष्टा तेन च मे ऋषिकुमारेण सार्धं प्रीति संजाता कण्ठे च सो गृह्य मम प्रकाशं वक्त्रेण वक्त्रं प्रणिधाय शब्दं करोति तं मे जनये प्रहर्षं तमहं स्मरन्तो परिदीनवक्त्रो तेन विना न रमामि आश्रमे ॥ ऋषिणो दानि ऋषिकुमारस्य श्रुत्वा तद्भूषि ॥ यादृशं अयं ऋषिकुमारो तेषां वर्णसंस्थानं आचिक्षति न ते ऋषिकुमारा स्त्रीहि ताहि भवितव्यं ॥ सो दानि ऋषि तं एकशृंगकं ऋषिकुमारं आह ॥ पुत्र न ते ऋषिकुमारा स्त्रियास्तायो ऋषीनालोभेन्ति तपातो वारयन्ति । ऋषिभिस्तायो दूरातो परिवर्जयितव्या अन्तरायकरायो ब्रह्मचारिणां । मा तेहि सार्धं समं करोहि आशिविषसमा तायो विषपत्रसमा तायो अंगारकर्षूपमा तायो ॥

सो दानि काशिराजा तं पुरोहितं आह ॥ नावासु अशोकवनिकानि रोपेत्वा पुष्पफलोपेतेहि वृक्षेहि गंगाये प्रतिश्रोतेन तं आश्रमपदं गच्छाहि नलिनीये सपरिवाराये सार्धं ततो तमृषिकुमारं नावायमारूपित्वा आनेहि ॥ सो दानि पुरोहितो काशिराज्ञः प्रतिश्रुत्वा नलिनीं राजकन्यां पुरिमांतांगिकचेतिष्ठाहि नावाहि विततवितानाहि चित्रदुष्यपरिक्षिप्ताहि ओसक्तपट्टदामकलापाहि धूपनधूपिताहि

1[1]. M °rishis tam̃ ku° BM °cchati na°. — 1[2]. M °hritam̃ ‖ agni ° tam̃ kim̃ tu vadhyâ vadhyâyati ‖ B °kintu . . . vyâvadhyâyati ‖. — 3. M °bahulehi sârddham̃ ° niyo çobhanehi ja° jinehi çobhanehi kanthasutre ° stasutrehi çobhanehi mum̃° B °meshalehi mri° M °shtâhi ca sâtam̃ phala° B °nam̃ phalephalâ° M °yam̃ ca naidriçâm̃ yathâ° BM °kam̃ mrigayukte( M °yûthe)hi udaye arthanti(M °rthem̃ti) te mayâ ° deçe drishtvâ tena ca me ri° B °sam̃jâto kanthe° M °sam̃jâte kanthe ° çam̃ jatehi grihya ma va nânyavakhena vaktram̃° BM °çrame ri°.

9. BM rishinâ dâ° M °ni kumâ ° tvâ eta°. — 10. M °ayam rishi° B °âçishyati | na° M °tâbhi bhavi°.

11[1]. B °dâni rishim̃ tam̃° M °dâni vâshi tam etaçrim̃gakam rishikumâram âha ‖. — 11[2]. M putra nam̃ te ° s târo rishinâlo° B °s tâvo rishi° M °lobhem̃ti tapâto câryyam̃ti ‖ B °to câryenti |. — 12. BM °s tâvo dû ° yakarâvo bra ° nâm̃ mâ°. — 13. BM °rohi asi(M âçi)vishasamâ tâvo vishapatra(M °panna)samâ tâvo am̃gârakarshopa(M °rshasa)mâ tâvo |. — 15[1]. BM dâni° M °hita âha ‖. — 15[2]. BM °kâni râpetvâ pu° M °lopetâni vri° B °lopetehi kakshe° M °çrotena tam âçra° BM °yam âru(M °ruvu)hitvâ â°.

17. M °çirâjño pratiçru ° purimatam̃gikacetimâhi nâvâhi vi° B °purimam̃tam̃gikavetimâhi nâvâhi vi° M °ciptadushya° BM °kshiptâ o° M °lâpâna dhupitâhi mu ° saparivârâm âruhitvâ ° çrotena tahim̃ sâham̃janim âçra°.

मुक्तपुष्पावकीर्णाहि सपरिवारां आरूपित्वा गंगाये प्रतिश्रोतेन तं साहंजनिं आश्रमपदं गतो ॥ तेन दानि तस्य आश्रमपदस्य समीपे नावानि स्थापेत्वा सा नलिनी राजकन्या एकशृंगस्य ऋषिकुमारस्य सकाशं विसर्जिता गच्छ त्वं ऋषिकुमारमानेहि ॥ सा दानि नलिनी राजकुमारी नावातो ओरुहित्वा सपरिवारा तत्राश्रमपदे नानाप्रकाराणि वनकुसुमानि च वनकिसलयानि च प्रलावेन्ती आसति । तां पि च दृष्ट्वा ततो आश्रमातो मृगपक्षिगणा स्वक[307a]स्वकानि वतानि मुंचन्तानि दिशोदिशं प्रधावन्ति ॥ ऋषिकुमारो पि तानि मृगपक्षिगणानि सन्त्रसन्तानि दृष्ट्वा तं प्रदेशं गतः । ततो तां पश्यति नलिनीं राजकुमारीं सपरिवारां वनकुसुमानि च वनकिसलानि च प्रलावेन्तीं ॥ दृष्ट्वा च पुनर्येन नलिनी राजकुमारी तेनोपसंक्रान्तो ॥ नलिनीये ऋषिकुमारो भूयो अभिनन्दितो कण्ठे च लग्ना भूयो च आलिंगितो चुंबितो च मोदकानि च खज्जकप्रकाराणि च परिभुंजित्वा राजार्हाणि च पानकानि पिबित्वा नलिनीये सार्धं तान्नावां आरूढो ॥ नलिनी आह ॥ इमे अस्माकं आश्रमे उदके संचरन्ति ॥ सो ताये प्रलोभेत्वा नावायानेन वाराणसीमानीतो । पुरोहितेन ऋषिकुमारस्य नलिनी पाणिग्रहं कृत्वा दिन्ना ॥ सो ताये नलिनीये सार्धं आसति क्रीडति न पन संयोगं गच्छति । जानाति वयस्यो मे ऋषिकुमारो ति ॥

सो दानि ताये नलिनीये सार्धं तस्यां नावायां साहंजनिमाश्रमपदं गतः ताये च मातरे मृगीये एकशृंगको ऋषिकुमारो नलिनीये राजकुमारीये सार्धं आगच्छन्तो दृष्टः ॥ सा दानि पुत्रं पृच्छति । पुत्र कहिं सि गतो ति ॥ सो दानि आह ॥ इमस्य मे वयस्यस्य आश्रमं गतो ति ॥ एषो मे वयस्य अग्निं प्रदक्षिणीकृत्वा उदकेन पाणिना गृहीतो ति ॥ तस्या दानि मृगीये एतद्भूषि ॥ न खलु

2. BM °pe nâvâ nishape(M °nipate)tvâ sâ ° jakaṁnyâ e° M °rjita gacchaṁtaṁ ṛi° B °cchantaṁ ṛishikumâra ânehi sâ°. — 4. BM °to âru° M °de nânâprakârâni vanaku° BM °sumânâni ca vanakiçalakâni ca pralobhenti âsanti (M °prarobheṁti âsaṁti) | .

6. BM tâni ca dṛi ° muṁcatâni diço° M °dhâvaṁti ‖ B °nti ṛi°. — 7. B °ṇâni satrasantâ° M °ṇâni saṁtrasaṁtâni dṛi° B °gataḥ ta°. — 8. BM °to taṁ paçya ° kiçalâni(B °ni ca) pralâpenti dṛi°. — 9. M °saṁkrâṁto B °nto na°. — 10. M °ndito kaṁṭhe lagno bhûyo ca â ° kâni ca shajja ° rhâni ca pâ ° rddhaṁ tâṁ nâvâṁ âruhi âsati ‖ .

13[1]. M kriḍati nali°. — 13[2]. BM °âçramo u° M °caraṁti. — 13[3]. B °pralâbhe°. — 14. BM °linîye pâṇi°. — 15. B °ḍati na vana saṁ° M °ḍati na va saṁ°.

17. BM so dâni tâye naliniye sârddhaṁ tâṁ nâvâṁ sâ° M °janim âçra° B °çramaṁpadaṁ° M °daṁ gato tâye ca mṛigiye mâtare e° B °mâtaramṛi° M °dṛishṭo B °shṭaḥ sâ°. — 19[1]. B °cchati pu°. — 19[2]. M putra ko esho hiṁ si°. — 20[1]. M °vayasya âçra° B °vayasyâsya â°. — 20[2]. M °vayasyo agniṁ ° kshiṇiṁkṛi° B °gṛihitaṁ ti ta°.

21[1]. BM tasya dâ°. — 21[2]. M khalu ° ro vayasya saṁjâ° BM °tena te esha(M °sho) bhâryâ a° M °kshiṇiṁkṛi ° pâṇigṛi°.

पुनरयमृषिकुमारो वयस्यं जानाति भार्या वा इयं च कन्या अयं च ऋषिकुमारो पुरुषोत्तमो एतेन तु एषा भार्या अग्निं प्रदक्षिणीकृत्वा उदकेन पाणिगृहीता भार्या लब्धा ति ॥ तत्र को से ऋषिकुमारस्य एतमर्थं संबोधये यथा न एष ऋषिकुमारो काशिराज्ञो एषा धीता नलिनी नाम तव भार्या दिन्ना ति ॥ तत्र च साहंजनिस्य आश्रमपदस्य हेष्टा गंगाकूले प्रतिव्रतानां तापसीनां आश्रमपदं प्रविशन्तो ऋषिकुमारो तापसीहि वारियति ॥ मा तुवं अत्र आश्रमपदे प्रविशाहि त्वं पुरुषो एषो च स्त्रीणां प्रतिव्रतानां ब्रह्मचारिणीणां आश्रमो ति न लभ्यं अत्र पुरुषेण प्रविशितुं ॥ सो दानि ऋषिकुमारो तां तापसीं पृच्छति ॥ को वा स्त्री पुरुषो वा ति ॥ तस्य ताये तापसीये स्त्रीधर्मा च आचिक्षिता न एष तव वयस्यो न एष ऋषि[307b]कुमारो एषा स्त्री नलिनी नाम राजकुमारी काशिराज्ञो धीता त्वं च पुरुषो मृगीतो उत्पन्नो ततो त्वं न जानासि एषा तव उदकेन भार्या दिन्ना त्वं च एतस्या पति नो लभ्या युष्माभिः अन्यमन्यं त्यजितुं ॥

सो दानि ऋषिकुमारो तासान्तापसीनां श्रुत्वा नलिनीये सार्धं साहंजनिं आश्रमपदं पितुः काश्यपस्य ऋषिस्य सकाशं गतो पितुः पादां वन्दित्वा सार्धं नलिनीये एतां प्रकृतिं सर्वां आरोचयति ॥ ऋषिस्य एतदभूषि ॥ न शक्यति ऋषिकुमारो नलिनीये विना इह आश्रमपदे प्रतिवसितुं परस्परस्य एते बद्धसंजाता स्नेहसंजाता ॥ सो दानि तं पुत्रं एकशृंगं ऋषिकुमारं आह ॥ पुत्र एषा तव नलिनी राजकुमारी अग्निदेवं साक्षीकृत्वा उदकेन पाणिगृहीता दिन्ना । एषा ते भार्या त्वं च एतस्या पतिः । न लभ्या युष्माभिः परस्परस्य त्यजितुं । गच्छ एताय सार्धं वाराणसीं नगरं ॥ ते दानि ऋषिस्य पादां वन्दित्वा प्रदक्षिणीं च कृत्वा

3. BM °tra ko me ṛi ° evam arthaṁ ° yathâ va na esha ° ro râçirâjño° B °nàma tatra bhâryà dinnà | . — 4. M °haṁjanîsya â° B °gaṁgâkule° M °gaṁgâkule pativra° B °daṁ gacchâma | tena dâniṁ tan tâpasînâṁ âçramapadaṁ gatà tatra ca tâpasînâṁ âçramapadaṁ pravi° BM °hi vârayati mà°.

6. M mâ bhuvo a° BM °tvaṁ purusho eshâṁ ca° M °strîṇâṁ pativra ° càriṇâṁ â° B °bhyaṁ | a° M °rushaṁṇa praviçatuṁ ‖ B °tuṁ so°. — 8[1]. M °ro tân tâpa°. — 8[2]. B °sho vâ yâti ta° M °sho vâ pi ta°. — 9. M °siyaṁ stridharmà ca àcikshati naisha tava vaya° B °çirâjñà dhi ° nno tato taṁ na jâ° M °dinnâḥ tvaṁ càsyâ°.

13. M °ro tâsâṁ tâpa° BM °çrutvâ naliniyena(M °yeta) sàrddhaṁ sâhaṁjaniṁ âçra° B °pade pituḥ kâçya° BM °ṛishi sakâ° M °nîya e° B °ekâṁ pra° M °tiṁ sarvam âro° BM °ti ṛi°. — 15[2]. M °çakya ṛi ° prativiçituṁ paraspa e° B °prativaçituṁ° M °ddhasaṁjñâtasnehâsaṁjâtâ B °ddhasaṁjâtasnehâsaṁjàtà | .

17[1]. M °çṛiṁgâ ṛi ° màram âha ‖ . — 17[2]. BM °esha ta° M °va nâlani° BM °devâṁ sà ° udakaṁ ca pâ° M °dinnâḥ ‖ . — 18. M eteshâṁ bhâryâṁ tvaṁ ° patir na la° B °patiṁ na°. — 19[1]. M °labhya yu°. — 20. M °dâṁ vaṁditvâ pra° BM °ṇiṁ ca màta° M °siṁ gato gatvâ kâçirâjñà upasaṁkrâṁtà râ° B °ntà râ°.

मातरं च अभिवादेत्वा वाराणसीं गता गत्वा काशिराज्ञो उपसंक्रान्ता ॥ राज्ञा ऋषिकुमारस्य अनुरूपं गृहं दिन्नं परिवारं च उपस्तरणप्रत्यास्तरणं च सर्वाणि च उपभोगपरिभोगानि च युवराज्येनाभिषिक्तो ॥

सर्वे क्षयान्ता निचयाः पतनान्ता समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं पि जीवितं ॥

सो दानि काशिराजा कालधर्मेण संयुक्तो कालगतो एकशृंगेण वाराणस्यां राज्यं प्रतिलब्धं ॥

तेन दानि नलिनीये मूलातो यमजाता द्वात्रिंशत्पुत्रा जाता । अपराणां पि देवीनां मूलातो सातिरेकं पुत्रशतं जातं ॥ धर्मेण राज्यमनुशासयित्वा चिरं दीर्घरात्रं ज्येष्ठपुत्रं राज्ये भिषिंचित्वा पुनः ऋषिप्रव्रज्यां प्रव्रजितो ॥ तेन दानि पूर्वरात्रापररात्रं जागरिकायोगसमनुयुक्तेन युज्यन्तेन घटन्तेन व्यायमन्तेन बाहितकेन मार्गेण चत्वारि ध्यानान्युत्पादितानि पंचाभिज्ञा साक्षात्कृता ॥ सो दानि कामधातुं समतिक्रमित्वा कायस्य भेदात् ब्रह्मदेवनिकाये उत्पन्नो ॥

भगवानाह ॥ यस्तेन कालेन काश्यपो ऋषिरेष स शुद्धोदनो अभूषि । या सा मृगी एषा सा भिक्षवो महाप्रजापती अभूषि । यस्य काशिराजो भूदेष एव महानामो शाक्यो भूत् । यश्चैकशृंगको ऋषिकुमारस्तदाहं एव बभूव । या च नलिनी ना[3o8ᵃ]म राजकन्या एषैव यशोधरा अभूषि ॥ तदापि एषा आत्मानं अलंकृत्वा मम प्रलोभेति । एतरहिं पि एषात्मानं अलंकृत्वा मम प्रलोभेति ॥

नलिनीये राजकुमारीये जातकं समाप्तं ॥

1. M râjño ṛi ° starasya pratyâcaraṇam̃° B °tyâvara°. — 4. B °yântâ vica° M °nicayâ pa° BM °cchrayâḥ sam̃°. — 5. B °ṇânta hi ji° M °ṇânta him̃ ji°.

6. B °rmeṇa sam̃ko kâ° M °kto kâsagato râkaçrim̃° B °çrim̃gena vâ° M °pratilam̃bdham̃ ‖. — 8[1]. B °lâto — matmâghâ trim̃° M °yamapârâ dvâ ° jâtâḥ |. — 8[2]. M °viṇâm mûlâto sotire°. — 9. M °ṇa râjyam̃ anu° B °ṇa râjyam̃m anu° M °sayi ciram̃° BM °jyeshṭapu° M °jye 'bhi ° shipravrajito ‖. — 10. M °yogam anuyuktena pûjya ° vyâyamam̃tena vâ° B °vyâyapantena vâ° M °sâkshîkṛitâ |.

12. M °dhâtu sama ° bhedâd brâhmaṇo de° B °brâhmo de° M °tpannam̃ ‖. — 14[2]. M °lena tena samayena kâçyapo nâma ṛishiḥ esha° |. — 14[3]. M mâ sâ mṛigi evâ sâ bhi° B °pati gau° M °gauttami°. — 15. B °râjño bhûd e° M °d eshaivam̃ ma ° çâkyo 'bhût | B °çâkyâ bhût |.

16[1]. M °çṛim̃go ṛi ° evam̃ ba°. — 16[2]. B °râjakam̃nyâ°. — 17. M °eshâ ânam̃ a°. — 19. M iti çrîmahâvastuavadâne nali°.

भिक्षू भगवन्तमाहन्सुः ॥ पश्य भगवन् कथमियं यशोधरा राज्ञा शुद्धोदनेन अननुयुञ्जित्वा अपर्यवगाहित्वा अनपराधी वध्या ति ओसृष्टा ॥ भगवानाह ॥ न भिक्षवः एतरहिमेव एषा यशोधरा राज्ञा शुद्धोधनेन अननुयुञ्जित्वा अनपराधी वध्या ओसृष्टा । अन्यदापि एषा यशोधरा इमिना राज्ञा शुद्धोदनेन अननुयुञ्जित्वा अपर्यवगाहित्वा अनपराधी वध्या ओसृष्टा ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवं ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥

अतीतमध्वाने अनुहिमवन्ते महावनखण्डं तत्र माण्डव्यस्य ऋषिस्य आश्रमपदं चतुर्ध्यानलाभिनः पंचाभिज्ञस्य महाभागस्य मूलोपेतं फलोपेतं पुष्पोपेतं पत्रोपेतं पानीयोपेतं मृगपक्षिशतसहस्रेहि निषेवितं ॥ अथ खलु भिक्षवो माण्डव्येन ऋषिणा ग्रीष्माणां पश्चिमे मासे क्षुद्रपाकेहि फलेहि परिभुक्तेहि बहुतरेण च पानीयेन पीतेन अभिष्यन्नेहि धातूहि उपलकुण्डके सशुक्रं प्रस्रावं कृतं ॥ अथ खलु भिक्षवो अन्यतरा मृगी ऋतुमती तृषायां भ्रान्ता पानीयसंज्ञाय ततो उपलकुण्डकातो तमृषिस्य सशुक्रं प्रस्रावं पीतं । अशुचिम्रक्षितेन च मुखतुण्डकेन स्वकं योनिमुखं परिलेहसि । अचिन्त्यो सत्वानां कर्मविपाकः । ताये मृगीये तं शुक्रं.रुधिरं च संमूर्छित्वा कुक्षिं प्रतिलब्धं ॥ सा दानि तस्यैव आश्रमपदस्य परिसामन्तेन चरति परिभ्रमति च ॥ सा दानि कालेन च समयेन च दारिकां दर्शनीयां अक्षुद्रावकाशां परमया शुभवर्णपुष्कलतया समन्वागतां गौरीं नवनीतपिण्डसंनिभां प्रसूता ॥ सा दानि मृगी तां दारिकां प्रसूता च तेन च ऋषिणा तं द्रव्यं दृष्टं ॥ तस्यैतदभूषि ॥ कुतो इमस्यान्तिरश्चानगताये मृगीये मानुषं अपत्यन्ति ॥ समन्वाहरित्वा ऋषिणां पंचाभिज्ञानां ज्ञानं प्रवर्तति ॥ सो दानि ऋषि माण्डव्यो

1[1]. B bhikshu bha° M bhikshur bhagavam̃tam âha° B °vanta âhansuḥ pa°. — 1[2]. M °yujitvâ aparyâvagâhetvâ ana° B °jyitvâ parya° M °osṛishṭo ‖ anyadâ° (*l.* 4). — 3. B °yujyim̃tvâ ana°. — 4. M °pi evâ ya ° dharâ etinâ° B °dharâ eminâ° M °nena anuyum̃jitvâ aparyya°. — 5. BM bhikshu â°.

6[1]. M °gavan ‖ . — 6[3]. M °kshavaḥ B °kshavo a°. — 7. M atîtam adhyâne° B °hâvanashaṇḍe tatra maṇḍa° M °hâvanakham̃ḍe tatra mam̃ḍavya° B °mûlopetam̃ | pha° M °gapakshigaṇaça°. — 9. B °vo maṇḍa° M °vo mam̃ḍavye ° shyandehi dhâ° B °shyande dhâ° M °utparakundake° B °ṇḍakehi sa° M °çukrapramrâvam̃°.

11. M °pâniyam̃ sam̃jñâya tataḥ utparakundakâto tam̃ ṛishi° B °ṇḍalakâto° B °pramrâvam̃° M °pramrâvam̃ tîtam̃. — 13. M °tum̃ḍake° B °parilekhasi | M °parilekhesi. — 14[1]. B acintyam̃ sa° M acintya sa ° pâko to°. — 14[2]. M toye mṛi° B °mṛigî tam̃° BM °çukrarudhi° M °sam̃m̃urcchitvâ° B °kukshi pra°.

16. M °lena ca dâ ° drâvakâçam̃ pa° B °paramapâṇḍubha° M °shkaratayâ° BM °gauri nava° M °nîtapim̃ḍasam̃ ° prasutâḥ | . — 18. M °kâm̃ dyasutâm̃ ca te° B °sûtâm̃ ca tena câ rishi° BM °dravyena dṛishṭvâ ta°. — 19[1]. M °syâ tiricchâ ° ṛatyam̃ ti B °n ti sa°. — 20. B °shi maṇḍa°.

पंचाभिज्ञो महाभागो समन्वाहरति ॥ इह मम [3o8[b]] अत्र आश्रमपदे अन्यस्य पुरुषस्य प्रचारो नास्ति । एषा च मृगी इमहिं एव मम आश्रमपदे जाता संवृत्ता तथान्यान्यपि मृगपक्षिशतानि इह वनखण्डे संवृत्तानि नैव मम क्वचित् मृगो वा पक्षी वा अन्यवनखण्डं गच्छति न चान्यातो वनखण्डातो कोचित् मृगपक्षी इहागच्छति । इह एते वनखण्डे मृगपक्षिगणा जाता च संवृत्ता च संवृद्धा च अभिरता च अमनुष्यचरितं च वनखण्डं । अमुककाले मया ग्रीष्माणां पश्चिमे मासे पक्कसुपक्कानि च फलफलानि परिभुक्तानि सुशीतलं च बहुतरं पानीयं पीतं । ततः मे भिष्यन्देहि धातूहि उपलकुण्डके सशुक्रं प्रस्रावं कृतं एताये मृगीये तृषिताये तं सशुक्रं प्रस्रावं पानीयसंज्ञाये पीतं । ततो एताये मृगीये कुक्षिं प्रतिलब्धं । मम एष अंगनिस्रावो ॥ तस्य ऋषिस्य माण्डव्यस्य तत्र दारिकाये अतिप्रेम्नं संजातं ॥ तेन सा दारिका अजिनकेन गृह्य आश्रममानीता । साप्यस्य मृगी पृष्ठतो न्वेति ॥ तेन दानि ऋषिणा ताये दारिकाये तं नाभि फलशस्त्रकेन छिन्नं मानुषिकाये च नं केलायनाय केलायन्ती ताये वनमृगीये स्तनाचूषणं आसति । सो पि नं ऋषि क्षुद्रपाकानि फलानि मुखे पीडेति कालेन कालं तैलेनाभ्यंगेति सुखोदकेन स्नपेति ॥ संवर्धयमाना च सा दारिका ताये मृगीये तेन च ऋषिणा अतीव तं वनं शोभेति सा च नां माता जिह्वाये परिलिहति ॥ यत्र काले सा दारिका विवर्धमाना पादेहि पि अखवति ततो यत्र यत्र पादा निक्षिपति तत्र तत्र ताये दारिकाये पूर्वोपचितेन शुभस्य कर्मस्य विपाकेन पद्मानि प्रादुर्भवन्ति ।

1. B iha mama putra ° pracâra nâsti | . — 2. BM °imamhi evam mama â° B °çramapadam jâ° M °jâtâḥ || samvritâḥ ta° BM °thânyânapi mri° M °naivam mama kva° B °go vâ pakshi vâ anyavanashaṇḍam° M °kshi vâ anyavanakhamṇḍam gacchati || tadânyanto vana° B °cânyanto vanashaṇḍâ° BM °to kvaci° M °t mrigâpakshi i°. — 5. B °ete vanashaṇḍe° M °ete vanakhamḍe mri° ttâ ca abhi° BM °manu(B °nushya)carite ca vanakhaṇḍe amu°.

6. M °shmâyâm paçci° BM °lâni ca pari° M °hutalam pâ°. — 7. M tato me bhishyandamdehi dhâ° B °shyantehi dhâ° M °utpalakundake çaçukrapraçrâvam° B °ṇḍake saçukram pramrâvam kri° M °trishitâye ° vam pîniya°. — 9[1]. B °kukshi pra°. — 9[2]. B °nimrâvo ta°. — 10. B °shisya maṇḍa° M °shisya mamḍavya°.

11[1]. B °âçramapadam â°. — 11[2]. M °prishṭato anueti || . — 12. M te dâ° B °tam nâlaphalam çastra° M °tam nâlaphalaçasukena ° nushikâye vacanam kelâyanakelâyanti | tâ° B °nam kelâyanâya kelâyanti tâ ° stanamûcanam â° M °stanasucanam âsati | . — 13. BM so pi tam rishi(B °shi) kshu° B °ḍeti | kâlena kâ° M °kena snâpeti B °peti sam°. — 15. M samvaddhamânâ° B °varddhamânâ° M °gi etena ca ri ° tivam tam vanam çobhati || sà ca tâm mâtâ° B °çobhati so ca nam mâtâ° BM °likhati ya°.

16. M °vivaddhamânâ° B °ṇvati | tato° M °ṇvati | tataḥ yatra yatra pâ ° ti tatra tatra tasyâ dârikâyâ pûrvopacitena çu° rbhavamti sa°.

समन्तेन च आश्रमपदे तस्य ऋषिस्य ताये दारिकाये पर्याहिण्डन्तिये पद्मपङ्क्ती उत्थापिता पद्मवनमिव शोभति तेहि च पद्मेहि सा दारिका क्रीडति हस्तेनापि गृह्य अच्छति ॥ तस्य दानि ऋषिस्य तस्या दारिकाये तंशुभकर्मविपाकतो क्रमेषु पद्मानि प्रादुर्भूतानि दृष्ट्वा विस्मयं संजातं अहो दारिकाये ऋद्धीति यत्र यत्र क्रमा निक्षिपति तत्र तत्र प्रासादिका[309a]नि दर्शनीयानि पद्मानि प्रादुर्भवन्ति कृतपुण्याये इमाये दारिकाये भवितव्यं पूर्वं दक्षिणीयेषु ओरुप्तकुशलेषु कुशलमूलाये यस्या इमं एदृशं अनुभावं ॥ तेन दानि ऋषिणा ताये दारिकाये पदुमावतीति नामं कृतं ॥

सा दानि संवर्धमाना ताये मातरे सार्धं तस्याश्रमस्य परिसमन्तेन अच्छति । यतो यतो सा मृगी चरमाणा अच्छति ततो ततो सापि दारिका ताये मातरे सार्धं अच्छति मृगेहि च मृगपोतकेहि च सपरिवारा क्रीडन्ती अच्छति ॥ यदा च बुभुक्षिता भवति ततो ताये मातरे सार्धं तमाश्रमं आगच्छति अपरेहि मृगेहि मृगीहि च मृगपोतकेहि च सपरिवारिता । ततो सो ऋषि आश्रमगताये मृगीये मृष्टमृष्टानि फलानि देति मृष्टमृष्टानि च पानकानि देति ॥ सा दानि फलफलानि स्वयं पि खादति अपरेषां मृगपोतकानां देति ॥ यदा सा दारिका तत्राश्रमे शयिता भवति ततो ते मृगपोतका च मृगपोतिका च चारिकां अनुपरिचरित्वा शयन्ति यदा च चरितुकामा भवन्ति ततो तां दारिकां मुखतुण्डकेन प्रतिबोधयन्ति ॥ यतो यतो मृगा चरन्तो अच्छन्ति ततो ततो सा दारिका तेहि मृगेहि मृगपोतकेहि मृगपोतिकाहि च सार्धं क्रीडन्ती अच्छति । यतो यतो सा अच्छति

1. BM °çramapadam̃ tasya ṛi ° ryâhim̃ḍantiye padmehi paktibi u° B °ntiye padmehi shakî u° M °dmehi sa dâ°. — 3. M °smaya sam̃° B °jâtam̃ | aho° BM °kâye riddhîti-(B °ti |) yatra yatra(M °tra cam̃)kramâṇi kshi° M °dikâ darça ° rbhavam̃ti kṛitapuṇyâni imâ° B °nti | kṛitapuṇyâhi imâ° BM °vyam̃ | pûrvam̃(M °rva) da° B °ṇiyashu° M °olupta° BM °lâye yasya i° BM °nubhavam̃ te°.

7. M °ye padmâva°. — 9. M °rddhamâni tâye° B °mânâni tâye° M °mâtaram̃ sâ° B °paribhrama°. — 10. BM °gî caramâni aṇvati | tato tato(M °taḥ) sâ pi° M °krîḍam̃ti a° B °ḍanti a° BM °ṇvati ya°.

11. BM °vati | tato tâye(B °te tato ye) mâ°. — 13. M tataḥ so° B °so rishi° M °çramapadam̃ gatâ ° lâni phalâni deti° BM °ca phalapânikâ(M °nakâni) ca deti | . — 14. M °lâni ca svayam̃° B °yam̃ vikhâ°. — 15. M °sâ dirikâ tatrâ° BM °ti | tato° B °te mṛigapotakâ ca cârikâm̃° M °çayam̃ti || yadâ ca caritukâmâ bhavam̃ti tataḥ tâm̃° B °tukâmo bhavanti | tato° M °dhayam̃ti.

18. M yataḥ yato mṛigo caram̃tâ aṇvati tataḥ tato sâ dâ° B °nto aṇvati | tato tato sâ dâ° M °kehi ca sârddham̃ krîḍati aṇvati B °kehi mṛigapotikehi ca sârddham̃ krîḍanti aṇvati | . — 19. M yato yataḥ sâ aṇvati tato tataḥ sa° B °ti | tato tato sa ° kramanteshu pa° M °krameshu pa ° rbhavam̃ti || .

ततो ततो समन्तेषु क्रमकेषु पद्मानि प्रादुर्भवन्ति । सापि दारिका तत एवन्तानि पद्मानि गृह्य स्वयं च आबन्धति तेषां च मृगपोतकानां पद्मानि आबन्धति ॥ एवं सा तेहि सार्धं क्रीडन्ती तहिं आश्रमपदे संवर्धते परस्परं विनापि न रमन्ति ॥ यत्र काले सा दारिका विज्ञप्राप्ता ततो तमृषिस्य आंश्रमं सिंचति शोधेति नानाप्रकाराणि मूलविकृतीनि आनेति पत्रविकृतीनि नानाप्रकाराणि आनेति पुष्पविकृतीनि नानाप्रकाराणि आनेति फलविकृतीनि नानाप्रकाराणि आनेति उदकमानेति काष्ठं वा समिधानि वा आनेति । तं च ऋषिं तैलेनाभ्यंगेति स्नापेति । अग्निहोत्रं से पटिजागरेति तं च ऋषिं नानाप्रकारेहि मूलेहि च पत्रेहि च पुष्पेहि च [3o9^b] फलेहि च परिविसति । नानाप्रकाराणि च फलपानानि आनयति । यतो यतो च तत्राश्रमपदे अण्वति यतो यतो गच्छति मूलहारिका वा पत्रहारिका वा पुष्पहारिका वा फलहारिका वा ततो तेहि मृगपक्षीहि परिवारिता आगच्छति ॥

कदाचित्सा पदुमावती तेहि मृगपक्षीहि परिवारिता उदकहारिं गता काम्पिल्लको च राजा ब्रह्मदत्तो बलाग्रेण सार्धं मृगव्यं अण्वन्तः तं प्रदेशं उज्झितो वातजवसमेन तुरंगेन मृगमनुजवन्तो । तेन मृगेन सो राजा ब्रह्मदत्तो वनखण्डमुपनीतः ॥ यथोक्तं भगवता धर्मपदेषु ॥

गतिर्मृगाणां प्लवनं आकाशं पक्षिणां गतिः । .
धर्मो गतिर्द्विजातीनां निर्वाणं महती गतीति ॥

सो मृगो तत्र वनखण्डे नष्टो ॥ तेन राज्ञा ब्रह्मदत्तेन वनखण्डे तं मृगं मार्ग-

1. M sâ dârikâ tadâ evam̃ tâni padmâni gṛi° B °rikâ tataḥ e° BM °yam̃ ca âbandha-(M °badhnam̃)ti | teshâm̃ mṛi ° bandheti | . — 2. B °krîḍanti ta° M °kriḍam̃ti tehim̃°. — 4. BM °çodheti | nânâprakârâṇi mû ° neti(B °ti |) pushpavikṛitîni âneti phalavikṛiti-(M °ti)ni nânâprakârâṇi âneti(M °ti ||) udakam â(M °dakâ)neti(B °ti |) kâshṭam vâ (M °shṭhâni vâ) sa°.

7. BM °ṛishi tai° M °bhyam̃gi snâyeti. — 8. BM °tram̃ me paṭi(M °ṭi)pâkaroti (M °ti ||) tam̃° B °ṛishi nânâpra° M °ṛishiṇâ nânâprakârehi mulehi ca phalehi ca patrehi ca pariviçati B °viçati | . — 9[1]. B °pânâni vâ â° M °ni ca â°. — 9[2]. B °çramepade° M °ṇvati yato yataḥ gacchati mûlahârikâ vâ pushpahârikâ vâ phalahârikâ vâ patrahârikâ vâ gacchati || tato° B °trahârikâri vâ pu ° phalahârikâ vâ gacchati tato ° mṛigapakshihi parivârito â° M °kshihi saparivârikâ â°.

12. M °sâ paumâ° BM °tehi mṛiga(B °ge)pakshihi pari ° rim̃gatâ kâ(M °tâ || kam̃)-pilla ° vyam̃ aṇvataḥ(M °to) tam̃° B °ujhitvâ vâ ° tvâ ° ujhivâtajavesa° M °turagavegena mṛiga° B °ram̃gena mriga anu°. — 14. B °tto vanashaṇḍa° M °tto vanakham̃ḍam upanîto || . — 15. B tatho° BM °shu ga°.

16. M gatir mṛi° BM °plavaṇam̃ â°. — 17. B dharmâ gatir vibhâti° M °rmo gatî vibhâti° mahatâm̃ gatiti | . — 18[1]. M °mṛige tatra vanakham̃ḍe nashṭo° B °shṭo te°. — 18[2]. M tatra

त्तेन तर्हिं उदककूले पदुमावती दृष्टा कृष्णाजिनेन निवस्ता उत्तरासंगिका च उदककुम्भेन गृहीतेन पद्मेन च शोभनेन हस्तगतेन प्रासादिका दर्शनीया परमया वर्णपुष्कलतया समन्वागता । यत्र यत्र च क्रमाणि निक्षिपति तत्र तत्र पद्मानि प्रादुर्भवन्ति मनोरमाणि सुदर्शनीयानि । दृष्ट्वा च पुनर्भिक्षवो राज्ञो ब्रह्मदत्तस्य पदुमावतीं ऋषिकुमारीं एतदभूषि ॥ अहो कन्यायाः रूपवन्तं ऋद्ध्यनुभावं यत्र यत्र क्रमाणि निक्षिपति तत्र तत्र पदुमानि प्रादुर्भवन्ति अतीव चक्षुरमणीयानि प्रासादिकानि दर्शनीयानि का नु खल्वियं भविष्यति देवकन्या वा नागकन्या वा किन्नरकन्या वा मानुषी वा इयं भविष्यति अमानुषी वा । यं नूनाहं उपसंक्रम्य परिपृच्छेयं ॥

अथ खलु भिक्षवो राजा ब्रह्मदत्तो येन पदुमावती ऋषिकुमारी तेनोपसंक्रमित्वा पदुमावतीं ऋषिकुमारीमेतदवोचत् ॥ भद्रे का त्वं कस्य वासि ॥ एवमुक्ते भिक्षवः पद्मावती ऋषिकुमारी राजानं ब्रह्मदत्तमेतदवोचत् ॥ अहं खलु ऋषि पद्मावती नाम ऋषिकुमारी माण्डव्यऋषिस्य धीता मूलफलभोगिकस्य वनवासिस्य ब्रह्मचारिस्य ॥ एवमुक्ते भिक्षवः राजा ब्रह्मदत्तो [310a] पद्मावतीं ऋषिकुमारीमेतदवोचत् ॥ केवरूपा ते भद्रे भोजनविधानानि उपवने निवसन्तीये येनासि एवं उपचितशरीरा कीदृशानि ते वस्त्रविधानानि येन ते चैवं सुकुमारवर्णनिभा ॥ एवमुक्ते भिक्षवो पदुमावती ऋषिकुमारी राजानं ब्रह्मदत्तमेतदवोचत् राज्ञो वस्त्राणि परामृशन्ती ॥ मूलफलानि अस्माकमाहारं अजिनानि प्रावरणानि एवं सूक्ष्माणि यादृशानि इमानि न च अजिनानि ॥ एवमुक्ते भिक्षवः

tena râ ° ttena vanakhaṁḍe taṁ ° kûle padmâvatî° B °drishṭvâ kri° M °shṇâm âji ° nivastra utta° B °nivasta utta° M °çobhanena hasta° B °bhanena ca hasta° M °niyâ paramâye pushkalavarṇatâye samanvâgataḥ B °pushkarata°. — 3. BM °yatra caṁkra° M °rbhavaṁti ‖ manoramâni su° B °ṇi sahadarçaniyâni dṛi° M °rçanâniyâni dṛi°. — 4. B drishtvâ ca | pu° M °puna bhi ° sya padmâvatiṁ râjakumârim eta° B °tiṁ râjaku°. — 5. M °nyâyâ rûpavatiṁ riddhyânu° B °ntaṁ ridhyânubhâ° BM °yatra yatra caṁkra° M °rbhavaṁti | ati° B °nti | ativa ca cakshu °lviyaṁ bhavishyati | devakaṁnyâ vâ nâ ° nnarakaṁnyâ vâ mâ° BM °iyaṁ rûpaṁ bha° B °shyati | a° M °amânushâ câ.

8. M yaṁ nûnâsyâhaṁ°. — 10. M °yena padmâvatî nâma ṛi ° tvâ padmâvatâṁ ṛi° B °tvâ padumâvatî ṛi°.

11¹. M °sya câpi e°. — 11². M °kshavo padmâvati ṛi ° mâ râjâ ° tad uvâca ‖. — 12. M °ṇḍavyo ṛishisya dhitâ mulaphalabhogika°. — 14. M °kshavo râ° B °hmadatta padmâvatî ṛi°. — 15. M °bhadro bho° B °santiye na yenâsi° M °ntî yena yena si ° rîro kî ° caiva sukumâro varṇa° B °kumârâ varṇṇa°.

17. M °rî râjâna bra° BM °cat ‖ râjño° M °varttrâṇi parâmṛiçati B °mṛiçati mû°. — 18. M mula° B °prâvarâṇâni evaṁ sûkshmâni yâ° M °mâṇi ca a°. — 19. M °kshavo râjâ bra°.

राज्ञो ब्रह्मदत्तस्य एतदभूषि ॥ अविधिज्ञा इयं ऋषिकुमारी राज्ञो राजार्हाणां वा वस्त्राणां नैव ऋषिस्य विशेषं अभिजानाति न राजानस्य नैव अजिनानां विशेषं जानाति नापि राजार्हाणां वस्त्राणां विशेषं जानाति नापि मम तुरंगस्य । एषा च ऋषिकुमारी राजकन्या ममैषा भार्या अनुरूपा भवेया न शक्या मया माण्डव्येन ऋषिणा अनभ्यनुज्ञाता पाणिनापि प्रष्टुं कुतो पुनरितो आश्रमातो कम्पिल्लं नगरं नयितुं । माण्डव्यो ऋषि महाभागो शापेन मे सपरिवारं भस्मीकरेय । यं नूनाहं पदुमावतीमृषिकुमारीमुपायेन प्रलोभयेयं ॥ पौराणानां च भिक्षवो राज्ञां मृगव्येन गच्छन्तानां मधुसर्पिसंयुक्तानि सक्तूनि राजार्हाणि च मोदकानि च उक्कारिकानि च यमलकं पूरेत्वा अश्वपृष्ठे पल्लाणस्य पृष्ठतो बन्ध्यन्ति मा राजा अश्वेन एको अद्वितीयो वनेषु हृतो समानो बुभुक्षाय मरेय ॥ तेन खलु पुनर्भिक्षवो समयेन राज्ञो ब्रह्मदत्तस्य मधुसर्पिसंयुक्तानि सक्तूनि मोदकानि च उक्कारिकानि च यमलकं पूरेत्वा अश्वपृष्ठे पृष्ठतो पल्लाणवध्रेण बद्धमभूषि ॥ अथ खलु भिक्षवः राजा ब्रह्मदत्तो यमलकातो मोदकं उक्कड्ढेत्वा पदुमावतीये अदासि ॥ हन्त भद्रे इमानि अस्माकं फलानि ॥ सा दानि आह ॥ जाने कतमानि शोभनतराणि फलानि युष्माकं वा अस्माकं वा ॥ सा दानि तं मोदकं परिभुंजित्वा आह ॥ भगवं शोभनानि इमानि युष्माकं फलानि मृष्टानि रसवन्तानि अस्माकं पुनः फलानि कटुकषायाणि ॥ राजा आह ॥ एदृशानि अस्माकं आश्रमे वृक्षेषु फलानि यदीच्छसि [310b] ईदृशानि परिभुंजितुं ततो तं मम आश्रमपदं गच्छाहि ॥ एवमुक्ते भिक्षवः पदुमावती ऋषिकुमारी राजानं ब्रह्मदत्तमेतदु-

1. M °ri râjñâ râjârhâṇâm̃ vastrâ° BM °shisya viçesham̃ nâbhijâ(M °jña)nâti na M °naivam̃ ajinânâm̃ viçesham̃ nâbhijânâni na râjânasya naiva ajinânâm̃ ° turagasya ‖ . — 4. BM eshâm̃ ca ṛishikumârî(M °rîm̃) râjakanyâ mamesha bhâ ° veyâ ça° M °kyâ mayâ maṇḍa ° pâninâ° BM °kuto pu ito âçra° M °ram̃ napitum̃ B °yitum̃ ma°.

6. BM maṇḍa° M °ram̃ bhâsmi° BM °reyam̃ | . — 7[1]. M °kumârîm̃ upâ° B° kumârâm upâ° M °lobheyam̃ | . — 7[2]. BM paurâṇâm̃ ca bhi° M °vyena gacchentânâm̃ madhusarppisam̃yuktânâm̃ madhumarpisam̃yuktânam̃ madhusarpisam̃yuktâni çaktukâni râjârhâ° B °ntânâm̃ madhusarppisam̃yuktânâm̃ madhusarpiyuktâni çaktû ° rhâni ca mo° M °yamarakam̃ pû° BM °çvapṛishthapallâ(M °lâ)çasya° M °to bam̃dhyati ‖ mâ râ° B °ndhyati mâ râ°. — 10. B °ktâni çaktû° M °ktâni çaktumo° B °ukvaritâni yamala° M °kkârikâni yamarakam̃ rûpetvâ ° to palâçe baddhena baddha° B °llâçabaddhatena baddha°.

12. M °yamarakâto modako u° BM °kkaṭṭetvâ° B °si ha°. — 14[1]. B °imâṇi a ° lâni sâ°. — 15. BM °dâni tato mo°.

16. B bhagavâm̃ ço° M sarvaço ° punaḥ phalâ° BM °ṭukâshâ°. — 17[2]. M etâdṛiçâni asmâkam̃m âçra° BM °lâni icchasi idṛiçâ° B °tum̃ | tato° M °dam̃ âgacchâhi ‖ . — 19. M °kshavo yaimâm̃vati ° dattam̃ eta°.

वाच ॥ इच्छामि अहं एदृशानि फलानि परिभोक्तुं आगमे मुहूर्तं इदमस्माकं आश्रमं न दूरं यावदिमं उदकं हरामि तातस्य आमन्त्रेमि ततः तव आश्रमं गमिष्यामि ॥ अथ खलु भिक्षवो राजा ब्रह्मदत्तो पदुमावतीये अपराणि मोदकानि अदासि ॥ इमानि पितुरुपनामेहि एवं च वदेहि । यस्य ऋषिस्य आश्रमे एदृशानि फलानि तस्याहं भार्या भविष्यामीति । लघु त्वं च आगच्छेहि एष अहं इह नदीतीरे आसामि ॥

अथ खलु भिक्षवः पदुमावती ऋषिकुमारी येन माण्डव्यस्य आश्रमपदं तेनोपसंक्रमित्वा पानीयभाण्डं निक्षिपित्वा तानि मोदकानि पितुर्माण्डव्यस्य अनुप्रदासि । इमानि तात फलानि खादाहि यस्य ऋषिस्य आश्रमे एदृशानि फलानि तस्याहं भार्या भविष्यामि ॥ अथ खलु भिक्षवो माण्डव्यस्य ऋषिस्य एतदभूषि ॥ नूनं पंचालराजा ब्रह्मदत्तो मृगव्येन अन्वन्तः इमस्याश्रमस्य समीपं अनुप्राप्तो तेन इमानि मोदकानि दिन्नानि परिभुक्तानि पदुमावतीये राजार्हाणि मोदकानि न एषा शक्ष्यति भूयो इहाश्रमे कटुकषायेहि फलाफलेहि यापयितुं पदुमावती च राजकन्या । यन्नूनाहं अस्य राज्ञो ब्रह्मदत्तस्य भार्या प्रयच्छेयं ॥ अथ खलु भिक्षवो माण्डव्यो ऋषिः पदुमावतीं ऋषिकुमारीमेतदुवाच ॥ न खलु पदुमावति एवंरूपाणि फलानि भवन्ति को ते ज्वलनसमेहि कामेहि प्रलोभेति ॥ अथ खलु भिक्षवो पदुमावतीये एतदभूषि ॥ भवितव्यं कामा नाम ते वृषा येषां इमानि एदृशानि फलानि ॥ अथ पदुमावती एवं पितरमेतदवोचत् ॥ यदि तात कामफलानामेदृशो आस्वादो तान्यहं परिभुंजिष्यामि न मे इमानि महत्फलानि रोचन्ति ॥ अथ माण्डव्यो ऋषिः पदुमावतीमेतदुवाच ॥ को ते पदुमावति इमानि फलानि अदासि केवरूपो वा सो ऋषिकुमारो कतरस्मिं वा प्रदेशे तिष्ठति ॥

1. M °aham edṛi° B °hûrtte i° M °kam̃ âçramam̃ nânidûre yâ° B °dûre yâvad emam̃ u° M °râmi tântasya âmam̃tremi tato tavâçra°. — 3. M °tto padmâvatî° BM °kâni deti adâ°. — 4[1]. M °evam̃ vademihi B °dehi ya°. — 4[2]. M °syârha bhâ° B °mîti la°. — 5. M laghu ca âgacchesi esho ham̃ i° B °cchesi e°.

7. M °vaḥ padmâvatî ° yena mam̃ḍavyasya â ° tur maṇḍa° B °tur maṇḍavyasya apradâsi | . — 9. B imâṇi tato phalâni khâ° M °tâto phalâni khâ ° shisyâçra ° tasyam̃ham̃°. — 10[1]. BM °vo maṇḍa° M °shisyaita°. — 10[2]. M °vyena açvento imasyâ° B °aṇvataḥ imasyâ° M °prâptaḥ || te ° ktâni padmâvatîye râjâ° B °rhâni mo° M °kâni naishâ ° lâphaleyâhi paribhum̃jayitum̃ padmâvatim̃ ca râjakanyâm̃ || B °lâphale yâpayi ° vatim̃ ca râjakanyâ ya°.

14[1]. M ye nûnâ°. — 14[2]. M °vo mam̃ḍavyo ṛishi pamâvatî ṛishiku°. — 15. M °padumâvàtî evam̃rûpâni phalâni bhavam̃ti ko te jvaranasamayehi kâ°.

16. M °padmâva° BM °shi bha°. — 17. M °yeshâm̃ imâ°. — 18[1]. M °tî pita°. — 18[2]. B °ço âçvâdo° M °ço âkhyâto tân padvam̃ pari ° rocam̃ti || . — 20[1]. M °ṛishi padmâva°. — 20[2]. M °padmâvatî i° B °vatî i° BM °si ko ca rùpo vâ(M °vo) so ṛi(B °ri)shi° M °mârî ka°

एवमुक्ते पदुमावती माण्डव्यं ऋषिमेतदुवाच ॥ सूक्ष्माजिनो तात ऋषिकुमारो दकतीरे स्याति [311[a]] मृगमभिरुह्य तेन मे इमानि फलानि दिन्नानि तस्य च तात आश्रमे एदृशानि फलानि ॥ अथ माण्डव्यो ऋषिः पदुमावतीये सार्धं येन राजा ब्रह्मदत्तस्तेनोपसंक्रमित्वा राजानं ब्रह्मदत्तं प्रतिसंमोदेत्वा पदुमावतीं राज्ञो ब्रह्मदत्तस्य उदकेन अदासि ॥ एषा ते महाराज भार्या भवतु महाराजस्य च एषा अनुरूपा मा च परस्य वचनेन अननुयुजित्वा विप्रियं कुर्यासि ॥

अथ राजा ब्रह्मदत्तो पदुमावतीं अश्वपृष्ठमारूपेत्वा माण्डव्यस्य ऋषिस्याभिवादनं कृत्वा तत्रैव अश्वपृष्ठे अभिरुहित्वा येन कंपिल्लं नगरं तेन प्रक्रमे ॥ अद्राक्षीद्राज्ञो ब्रह्मदत्तस्य बलाग्रं दूरत एवागच्छन्तं दृष्ट्वा च पुनर्येन राजा ब्रह्मदत्तो तेनोपसंक्रमे ॥ अथ राजा ब्रह्मदत्तो ततो अश्वपृष्ठतो ओतरित्वा पदुमावतीये ऋषिकुमारीये सार्धं हस्तिपृष्ठमभिरुहित्वा येन कंपिल्ले नगरे स्वकमुद्यानं तेन प्रयासि ॥ अश्रोषीत्पद्मावती कंपिल्ले नगरे महतो जनकायस्य निर्घोषं नगरं च कंपिल्लमद्राक्षीत् उद्विद्धप्राकारं अट्टालगोलकतोरणं रमणीयं च ॥ दृष्ट्वा च पुनः राजानं ब्रह्मदत्तमामन्त्रयसि । कस्य एतं वत वनविवरे निर्घोषो श्रुयति ऋषिणां एतं वनमृगाणां च उटजानि एतानि उद्विद्धानि दृश्यन्तीति ॥ अथ राजा ब्रह्मदत्तो पद्मावतीमेतदुवाच ॥ एतमृषिणां वनमृगाणां च निर्घोषो एतानि चास्माकं उटजानि उद्विद्धानि दृश्यन्तीति ॥ अथ राजा ब्रह्मदत्तो येन स्वकमुद्यानं तेनोपसंक्रमित्वा हस्तिपृष्ठातो प्रत्योरुहित्वा पदुमावतीये उद्यानं प्रवेशे ॥ अथ खलु राजा ब्रह्मदत्तो अमात्यपारिषद्यानामन्त्रयसि ॥ हो भणे ग्रामणिका क्षिप्रं पुरोहित-

1[1]. M °padmâvatî mâm̃ḍavyam̃°. — 1[2]. M sukshmo jino tâtaḥ ṛi° B sukshmâ° M °mârî uda°. — 3. M °shiḥ padmâvatî ° detvâ padmâvatîm̃°. — 5. B eshân te mahârâja bhâ° M °tu mahârâjasya naishâ anurûpâ mâ re parasya vanena ananuyu°.

7. M °padmâvatîm̃ ° shṭham âruhetvâ mam̃ḍavya° B °shṭham ârûyetvâ maṇḍa° BM °sya rishi° B °pṛishṭe abhi°. — 8. BM °d râjâ bra° M °durato evâ ° punaḥ ye ° dattas teno°. — 10. M atha khalu râ ° tto tataḥ açva° B °çvapṛishṭâto o° M °ottaritvâ padmâva° B °stipṛishṭam abhi° BM °yena kam̃pillam̃ nagaram̃ sva°.

12. M °shita padmâva ° kshîd udvi° BM °aṭṭalagola(M °gora)kato ° yam̃ ca dṛi°. — 13. M °puna râjâ ° ttam âmam̃tra° B °yasi ka°. — 14. M kasyetam̃° BM °bhavanam̃ vanavi° B °shiṇâ etam̃ vanamṛi° M °ṇam̃ evam̃ canamṛi° BM °gânâm̃ udayâ(B °pâ)ni etâ°. — 15. M °dmâvatîyam e°.

16. M °m ṛishiṇâm̃° B °kam̃ udapâni udvi° M °kam̃ udayâni udvṛiddhâni dṛiçyam̃titi |. — 17. B °pṛishṭâto pratyâru° M °pratyâruhitvâ padmâvatî ° prâviçet || B °praviça ||. — 18. M °shadyânâm̃ âmantra°. — 19. M ho maṇe grâmanikâ kshi° B °kshipra puro° M °netha | padmâvatî ° strâni câbharaṇâni ca yâvac ca râjakulam̃ yâvac ca udyâ° B °dyânam̃ na tam̃ atrâ° M °ram̃ sarva alam̃kâram̃ kâ° B °lam̃kârâpetha | vitatavitâ° M °nam̃ vicitra ° oçaktapatta ° pam̃ bhûpitadhûpanam̃ osiktasam̃pṛishṭham̃ mu° B °pam̃

मानेथ पदुमावतीये वस्त्राणि चाभरणानि च याव च राजकुलं याव च उद्यानं तमत्रान्तरं सर्वं अलंकारापेथ विततवितानं चित्रपुष्पपरिक्षिप्तं ओसक्तपट्टदामकलापं धूपनधूपितं सिक्तसंमृष्टं मुक्तपुष्पावकीर्णं देशेदेशेहि नटनर्तकऋल्लमल्लकपाणिस्वर्यशोभिकद्विस्त्वलकवेलम्बकनट्टधराणि उपस्थपेथ ॥

मनसा देवानां वचसा पार्थिवानां
नचिरेणाढ्यानां कर्मणा दरिद्राणामिति

वचनमात्रेण राज्ञो अमात्येहि यथा[311[b]]णत्तं सर्वं पटिआगृतं ॥ अथ पदुमावती राजानं ब्रह्मदत्तमेतदवोचत् ॥ कहिं ते भगवं शरणं समिधा वा उदहोदकं कमण्डलु वा समयो वा मे अग्निहोत्रं जुहनाय ॥ अथ राजा ब्रह्मदत्तो पदुमावतीमाह ॥ आगमेहि मुहूर्तं सार्धं ते सूक्ष्माणि अजिनानि आनीयन्ति ततः गंगायां स्नात्वा सहिता अग्निं जुहिष्यामः ॥ अथ राज्ञो अमात्यपारिषद्या तत्क्षणं तन्मुहूर्तं अन्तःपुरं तमुद्यानं आनयेन्सुः पदुमावतीये वस्त्राणि चाभरणानि चानयेन्सु ब्राह्मणं च पुरोहितं राजाचार्यं आनयेन्सु श्रेष्ठिप्रमुखो च निगमो पि निर्यासि सार्थवाहप्रमुखो वणिजग्रामो निर्यासि सर्वाणि चाष्टादश श्रेणी निर्यान्सुः ॥

अद्राक्षीद्राज्ञो अमात्या पारिषद्या नैगममहत्तरका च ब्राह्मणा च पुरोहितो च राजाचार्यो ब्रह्मदत्तस्य देवीं पदुमावतीं सर्वालंकारविभूषितां प्रासादिकां दर्शनीयां परमवर्णपुष्कलतया समन्वागतां । राज्ञा ब्रह्मदत्तेन सार्धं अग्निप्रदक्षिणीं करोति । यत्र यत्र च क्रमाणि निक्षिपति तत्र तत्र पद्मानि प्रादुर्भवन्ति प्रासादिकानि दर्शनीयानि । दृष्ट्वा च हृष्टा तुष्टा हर्षसंजाता राजानं ब्रह्मदत्तमामन्त्रयेन्सुः ॥ नास्माभिः महाराज कदाचित्कस्यचिदेदृशी स्त्री दृष्टा वा श्रुता वा

dhâpanaṁdhûpitaṁ osaktasaṁsṛishtaṁ° M °rṇaṁ deçedohi ca° BM °ṛillamallakṛipâṇisvaryâñço° B °bhirudvi° M °bhitaüdvṛiddhastvalakakevalaṁbanaṭṭadharâṇi upathapetha | .

6. M °rmaṇâṁ dari° thâṇantaṁ sa° B °sarva pa° BM °ṭiyâkṛitaṁ || . — $7^2$. M °padmâvaṭiye râ°. — 8. M karhi te bhavâṁ ça° B °gavâṁ ça° BM °unmodakaṁ° M °kamaṁḍalu vâ samaya vâ me° B °samaye vâ me°. — 9. M °padmâva°. — 10. M apâme° rddhaṁ te sukshmâni aji° B °kshmâni aji° nîyanti | ta° M °nîyaṁti tato gaṁ° shyâmi || .

11. M atha râjâ amâtya° B °tyasya pâri° M °hûrtta a° B °naṁ ânayetsuḥ padu° M °naṁ ânayetsuḥ | padmâvatî° B °ṇâni cânayetsu brâ° M °ṇâni cânayetsuḥ brâhmaṇapurohitaṁ ca râjâcâryaṁ ânayetsuḥ çreshṭhipramukhâ ca nigamehi niryâsi sâ° B °ryaṁ ânayetsu çreshṭipramukho ca nigamo bhiniryâsi sâ° BM °mukhâ vaṇi° B °câshṭhâdaça çreṇî niryâmsuḥ | . — 15. M °rohitâ câ râjâcâryye bra° devî padu° laṁkârabhûshitaṁ prâjâdi° nîyaṁ paramaçubhavaryâpushkaratayâ sa° B °nvâgato | .

17. M râjâ bra°. — 18. BM yatra yatra caṁkra° B °mâni nikshi° M °rbhavaṁti prâ°. — 19. BM °hrishṭâ ca tu° M °dattaṁ âmaṁtrayetsuḥ B °yetsuḥ nâ°. — 20. M °smâbhir

यथा इमस्या पदुमावतीये देवीये । साधु महाराज पदुमावती देवी पादेहि राजकुलं प्रवेशियतु ततो महाजनकायो देवीये इमां एवरूपां ऋद्धिं दृष्ट्वा प्रीता भवेन्सुः ॥ अथ राजा ब्रह्मदत्तो सान्तःपुरः पदुमावतीये देवीये सार्धं अमात्यपारिषद्यपुरस्कृतो महता जनकायेन सार्धं महता राजऋद्धीये महता राजानुभावेन उद्यानातो राजकुलं प्रवेशि ॥ अद्राक्षीत्सो जनकायो यावच्च उद्यानं यावच्च राजकुलं पदुमावतीये पद्वीतिहाराणां उभयतो पदुमानि प्रासादिकानि दर्शनीयानि ॥ दृष्ट्वा पुनः महाजनकायो उदानं उदानेसि ॥ कृतपुण्यो महाराजा ब्रह्मदत्तो यस्य इममेवंरूपं स्त्रीरत्नं प्रादुर्भूतं ॥ अथ राजा पदुमावतीये सार्धं उपरिप्रासादवरगतो पंचहि कामगुणेहि समर्पितो समङ्गीभूतः क्रीडति रमति प्रविचारयति पदुमावतीं च देवीं म[312ª]देहि अक्षेहि च गीतवाद्येहि च प्रेक्षेति तावदन्या देवीयो न समन्वाहरति पदुमावतीये प्रमत्तो । पदुमावती च राज्ञा ब्रह्मदत्तेन सार्धं संवसन्ती आपन्नसत्वा संजाता ॥

यत्र काले देवीप्रजननवेला ततः राज्ञा ब्रह्मदत्तेन या अन्तःपुरिकायो कुश-वायो स्त्रीधर्मार्थं ता आयत्ता पदुमावतीमुपेत्य । राजा च हिरण्यसुवर्णं अयतो कृत्वा नानाप्रकाराणि च वस्त्राणि निषण्णो ये मे निवेदयिष्यन्ति येमेण पदुमावती प्रजाता ति तेषां आह्लादं दास्यामि ॥ तासां पि देवीनामेतदभूषि ॥ यदुपादाय पदुमावती आनीता तदुपादाय अस्माकं राजा न समन्वाहरति । अत्र एषा प्रजायमानी अस्माभि अनयव्यसनमापादयितव्यं ॥ ता दानि तां पदुमावतीं

mahâ° B °d edriçâni riddhi drishṭvâ vâ çru° M °riddhim̃ drishṭvâ vâ çrutvâ ya° B °imasya pa° M °imasya padmâvatîye devime B °viye sâ°.

1. M °hi râjakule praveçatu ‖ tadâ ma° B °mahâm̃ janakâ° M ° imâm̃m evarupâ tam riddhim̃° B °pâm̃ riddhim̃ dri° BM °vetsuḥ ‖ . — 3. M °ntaḥpuro padu ° shadyâpuraskrito mahato janakâ ° pradesi ‖ . — 5. M °yo yâvacca râjakulam̃ yâvacca udyânam̃ padmâvatî ° vithihârâ° BM °to padumâvatî prâsâdikâm̃ darçanîyâm̃ dri°.

7[1]. M °kâya udânam̃°. — 7[2]. M °m evarûpam̃°. — 8. M °jâ padmâvatîye sârddham upari ° guṇe samarpi° B °rpito samaṅgâbhû° M °krîdito ramati pravi° B °kriḍanti ramanti pravi° BM °yati padmâ(B °dumâ)vatî ca devî ca adehi akshe ° çekhoti(M °çesheti) tâvadedya devî yena samâha° M °ti ‖ padmâva° BM °tto pa°.

11. M padmâvatim̃ ca° B °rddham̃ samvasanti â° M °vasanti â ° jâtâḥ B °jâtâ ya°. — 13. BM yatra kâlam̃ devî prajânavelâ° M °tato râjño bra° B °ttena yo a° M °nâm̃ nânâgatâ padmâvatîm unnathâ B °tha râ°. — 14. B râjâ va hi ° suvarṇṇa agra° M °sharṇṇâye me° BM °yishyati | kshe° M °ṇa padmâvatî prajânâni te° B °prajânâti te°.

16[1]. B °bhûshi pu°. — 16[2]. B pudupâdâya asmâ° M yad upâya padumâvati â ° râjânam̃ sa°. — 17. M °smâbhir anaya° B °yitavya | C °yitavyâ | . — 18. BM te dâ° M °rikânâm̃ padmâvatim̃ pricchanti jâ° B °pricchati jâ°.

पृच्छन्ति ॥ जानसि कथं स्त्रियो प्रजायन्तीति ॥ सा दानि आह ॥ न जानामीति ॥ ता दानि अन्तःपुरिका आहंसुः ॥ स्त्रीये प्रजायमानीये अक्षीणि पट्टकेन बध्यन्ति ॥ सा दानि आह ॥ मह्यं पि प्रजायमानीये अक्षीणि पट्टकेन बन्धेथ ॥ तस्या दानि यं वेलं प्रजायिष्यतीति ततो अस्या अक्षीणि पट्टकेन बद्धानि ॥ सा दानि द्वौ दारकौ प्रजाता प्रासादिका दर्शनीया ॥ तासां दानि एतदभूषि ॥ अपुत्रा तावेयं देवी राज्ञो ब्रह्मदत्तस्य इष्टा च बहुमता च आसि किं पुनः सपुत्रा अपुत्रस्मिं राजकुलस्मिं । इमाये द्वौ दारका जाता ततो अधिमात्रं राज्ञो ब्रह्मदत्तस्य प्रिया भविष्यतीति वयं च न समन्वाहरिष्यति ॥ ताहि दानि अन्तःपुरिकाहि ते दारका तपनस्मिं चैलकं उपस्तरित्वा तत्र प्रक्षिप्ताः ॥ तं तपनं स्वपिहितं सुबद्धं कृत्वा राजकीयेन तापनीयेन तापयित्वा मुद्रयित्वा नदीये गंगाये प्रक्षिप्ता । पदुमावतीये च स्वकेन गर्भमलेन मुखं मृक्षितं ॥ सा दानि पदुमावती अन्तःपुरिकां पृच्छति किं मे जातन्ति ॥ ताहि पि अन्तःपुरिकाहि दुवे उल्ख-कानि गर्भमलेन प्रम्रक्षयित्वा पदुमावतीये अल्लीपितानि ॥ इमानि प्रजातासि ॥ सा दानि आह ॥ मुह्यथ एतानि किं एतेषां करिष्यामीति ॥ राजा दानि ब्रह्मदत्तो पृच्छति ॥ किं देवी प्रजाता ति ॥ ता आहंसुः ॥ महाराज दुवे दारका प्रजाता प्रासादिका दर्शनीया ते [312b] च णं जातमात्रा ताये खादिता । कुतो महाराज ब्रह्मचारिस्य ऋषिस्य अपत्यन्ति पिशाची एषा त्वया आनीता त्वं दिष्ट्या जीवन्तो मुक्तो ॥ ताये पिशाचिनीये मूलातो आगच्छ पश्याहि तां यदि अस्माकं न श्रद्दधासि ॥ सो दानि तां देवीं पश्यनाय प्रविष्टो पश्यति च पदुमावतीं

1[1]. B °si | ka° M °thaṁ striyo prajânaṁti ||. — 2[1]. B te dâ° M °antâḥpurikâ âhansuḥ strî°. — 2[2]. M °kshîṇî pa° dhyati. — 3[2]. M °akshiṇî pa° B °kena baṁdhetha |. — 4. B tasya dâni iyaṁ ve° M tasya dâni yaṁ° B °titi | tato asya akshiṇî pa° M tato 'sya akshiṇî pa°. — 5[1]. M °jâtâḥ prâ° BM °nîyâ tâ°. — 5[2]. B tâsâṁ dârikâni e° shi a°.

6. M aputro tâva yaṁ° sya dṛishṭâ° BM °bahûmatâ° saputro aputresmiṁ râja° BM °kulesmiṁ i°. — 7. B °dârikâ jâtâ | tato adhimâ° M °dârakau jâtâs tano adhimâ° priyo bha° B °titi | va°. — 8. B °dârakâ tapaneshu cai° M °dâraka tapeshu cailakaṁm upatvaritâ te dârakâ tatra° B °upatvaritvâ te dârakâ tatra°. — 9. M °kyena tâpasîyena dâpayitvâ mu° B °dîpe gaṁ° M °kshiptâḥ taṁ°.

11[1]. M padmâva° rbhamale mu° BM °khaṁ prakshitaṁ |. — 11[2]. M °padmâva° jânaṁ ti |. — 12. M °kâhi iva uddhânakâ ga° B °uddhârinakâ ga° M °lena praçrakshapitvâ padmâva° B °allipitâni |. — 14[2]. BM muhyatha° M °mi kim ete° B °ete ka°. — 14[3]. B °cchati kiṁ°. — 15[1]. M devî° B °jâtâni ||. — 15[2]. M °âhansuḥ |. — 15[3]. M °jaive dâ° prajâtâḥ prâ° BM °yâ tena taṁ jâta° B °mâtroye khâdito ku° M °mâtraṁ ye khâ°.

17. M °apatyaṁ ti pi° esho tva° B °shâ | tva° M °nîtâḥ tâṁ dṛishṭvâsi° B °nîtâ tâ dṛishṭyâsi° BM °kto tâ°. — 18. B °çâcinî° hi taṁ ya° M °hi || taṁ ya°. — 19. M °viṁ praçya° vati ru° B °dhiraprakshi°.

रुधिरम्रक्षितेन यादृशी राक्षसी ॥ सो दानि तान्दृष्ट्वा भीतो संजातो ॥ अमात्यानामाह ॥ गच्छथ तां घातापेथ मानुषिका ति कृत्वा एषा मयानीता यदि एषा पिशाचिनी वा राक्षसी वा न मे ताये कार्यं ॥ सा दानि ततो राजकुलातो निष्कासिता ॥

सा दानि तेषाममात्यानां पृच्छति ॥ कहिं मे नयिष्यथ ॥ ते आहन्सुः ॥ राज्ञासि ब्रह्मदत्तेन वध्या ओसृष्टा ॥ सा दानि तेषां अमात्यानां पृच्छति ॥ किं मये राज्ञो ब्रह्मदत्तस्य अपराद्धं येनाहं वध्या ओसृष्टा ॥ ते अमात्या आहन्सुः ॥ त्वया दुवे दारका जनित्वा खादिता ततो राज्ञा पिशाचिनीति कृत्वा वध्या ओसृष्टा ॥ सा आह ॥ न मे दारका जाता पृच्छामि अन्तःपुरिकां ता आहन्सुः दुवे ते उल्वका जाता ते पि तत्रैव मेल्लिता नैव दारकानि पश्यामि नैव खादामि ॥ ते दानि अमात्याः पण्डिता स्त्रीमायानां शाठ्यानां चाभिज्ञाः ॥ तेषामेतदभूषि ॥ इयं पदुमावती राज्ञो ब्रह्मदत्तस्य इष्टा च बहुमता च स्थानं विद्यति यं एताहि अन्तःपुरिकाहि एषा पदुमावती अजानमाणी खलीकृता भवेय विप्रलब्धा वा ॥ ते दानि अमात्या तां पदुमावतीं पृच्छन्ति ॥ कथं सि प्रजाता ति ॥ सा दानि तेषां अमात्यानां तां प्रकृतिं विस्तरेण आचिक्षति ॥ ताहि मे अन्तःपुरिकाहि प्रजायमानीये अक्षीणि पट्टकेन बद्धानि नैव दारकान्पश्यामि नैव खादामि । यं कालं च प्रजाता ततो पृच्छामि तानि अन्तःपुरिकानि किं मे जातं ति ताहि दानि मम दुवे उल्वका अक्षीपिता ते जाता ति ॥ तेषां दानि अमात्यानामेतदभूषि ॥ इयं देवी अन्तःपुरिकाहि ईर्ष्याप्रकृतेन विप्रलब्धा इयं च देवी ब्रह्मदत्तस्य इष्टा च बहुमता च मा पश्चाद्राजा ब्रह्मदत्तो

1[1]. M °ni tâm̃ dṛishṭvâ°. — 1[2]. B amâtyenâ° M °tyâ âha ‖ . — 2. B gacchatha tam̃ ghâtâyetha mâ° M gacchatha tam̃ ghâṭâyetha mâ° BM °nushikâni kṛi° M °tvâ ekâ mayâ nîtâ | yadi yeshâ pi ° me tâya kâryyam̃ ‖ . — 3. M °shkâsinâ ‖ B °shkâçitâ sâ°. — 5[1]. M °teshâm̃ amâ° B °shâm asmâkam̃ amâ° BM °ti ka°. — 5[2]. M °him̃ te me na°. — 5[3]. M °âham̃suḥ ‖ .

6[1]. BM °na vadhvâ o° M °sṛishṭâḥ | . — 6[2]. B °amâtyaamâtyâ ° ti kim̃°. — 7[1]. B °aparaddham̃ | ye° M °aparâdham̃ ye° BM °vadhvâ o°. — 8. M tvayâ ive dâ°. — 9[1]. B °ha na°. — 9[2]. M °cchâmi ‖ am̃taḥpurikâ te â° B °kâm̃ | te â° M °nsuḥ ‖ dave te uddharîkâ jâ° B °dudve te udvanikâ jâ° BM °mellitvâ naiva dâ° M °naivam̃ khâ° B °khâdâmi te°.

11. M °amâtyâ pam̃ḍitâ strî ° çâkyânâm̃ câ° B °çâthyânâm̃ câ° M °jñâs teshâ°. — 12[1] B °shi iyam̃°. — 12[2]. B °sthâna vidya° M °dyati ‖ yam etâni antaḥ° B °etâni antaḥ°. — 14. M °tyâ nâm̃ padmâva° BM °cchati ka°. — 15[2]. BM °nâm̃ tân prakṛi°.

16. M °akshiṇi pa ° naivam̃ dârakâm̃ paçyâmi naiva ravâdâmi | B °dârikân pa°. — 17. M °mi tâni am̃taḥpu ° ve uddhânakâ ullayitâ te jânâti te° B °ve udvânakâ ullapitâ | te jânâti te°. — 19[2]. B °hi irshyâ° M °sya dṛishṭâ° BM °çokena ca glainânyam̃°.

देवीये पद्मावतीये अत्ययेन विप्रतिसारी भवेय शोकेन च गेलान्यं पतेय ॥ तेहि [313ᵃ] दानि अमात्येहि सा देवी पदुमावती स्वके गृहे गोपिता राज्ञो ब्रह्मदत्तस्य निवेदितं घातिता देवीति ॥ ता दानि देवीयो घातिता पदुमावतीति श्रुत्वा तस्य राज्ञो ब्रह्मदत्तस्य चटुलायन्ति घृतं च परिक्षिपन्ति सर्षपाणि च अग्नौ प्रक्षिपन्ति चतुर्दिशं च बलिं निष्कासयन्ति शान्तिं च करोन्ति दिष्यासि महाराज जीवन्तो मुक्तो राक्षसीहस्तातो ॥ तं मुहूर्तं राजा स्नातो विलिप्तो निष्पुरुषेण नाटकेन प्रक्रीडितो । तावदन्तःपुरिकायो काचिद्वीणां प्रवादिता काचित्सुघोषकं काचिन्मृदंगं काचिद्वेणुं काचित्प्रणृत्यन्ति काचिद्गायन्ति ॥

अथ खलु भिक्षवो अन्यतरा देवता माण्डव्यस्य ऋषिस्य अभिप्रसन्ना वैहायसमन्तरीक्षे स्थिहित्वा राजानं ब्रह्मदत्तमेतदुवाच ॥ दुःश्रुतन्ते महाराज अपरिज्ञातं ते महाराज अविज्ञातन्ते महाराज यो त्वमननुयुंजित्वा अपर्यवगाहेत्वा अनपराधीं पदुमावतीं वध्यामवसिरसि तादृशस्य महाभागस्य ऋषिस्य वचनं न समनुस्मरसि ॥ अथ राज्ञो ब्रह्मदत्तस्यान्तःपुरिका देवताये अन्तरीक्षगताये तं घोषं श्रुत्वा सुष्ठुतरं गायन्ति वादेन्ति च यथा राजा ब्रह्मदत्तो एताये देवताये जल्पन्तीये न श्रुणेयाति ॥ अथ राजा ब्रह्मदत्तो अन्तःपुरिकां निस्तपेति आगमेथ तावद्यावज्जानाम किमेषा देवता अन्तरीक्षगता जल्पतीति ॥ ता दानि अन्तःपुरिका राज्ञो वचनेन तूष्णीभूता संजाता देवता राज्ञो ब्रह्मदत्तस्याह ॥ दुःश्रुतन्ते महाराज यो त्वमननुयुंजित्वा अपर्यवगाहित्वा अनपराधीं पदुमावतीं देवीं वध्यां ओसिरेसि तादृशस्य महाभागस्य ऋषिस्य संदेशं न समनुस्मरसि ॥ राजा दानि

1. B °tam̃ yohità deviti | M °tam̃ yohitâm̃ deviti | . — 3. M °ghâṭitâ padmâva° sya catilâpeti ghṛi° B °sya caṭillâpeti ghṛi° M °parikshipam̃ sarshapâni ca agnau prakshipem̃ti catu° shkâsayam̃ti || drishṭvâsi mahâ° B °çânti ca karoti dṛishṭvâsi mahâ° BM °kshasito ha° B °stâto tam̃°.

6. M muhûrta râ° B °vilupto° BM °niḥpurusheṇa° dito tâ°. — 7. B °kam̃ | kâcit mṛi° M °gam̃ kâci durdaram̃ kâcid ve° B °ṇum̃ kâcin pra° kâcit gâyanti || M °tyam̃ti kâcit gâyanti || . — 9. BM °tâ maṇḍa° M °sthitvâ râ°. — 10. B duçruta° M duçrutam̃ me mahârâja aparijñâtan te mahârâja avijñâtam̃ te mahârâja yo tvam̃ ananu° B °tam̃ te mahârâja abhijñâtan te mahârâja yo tvam̃m ananu° BM °hetvâ anaparâdhim̃ padumâ(M °dmâ)vatim̃ vadhyâ° B °smarati | .

13. M °ttasyâm̃taḥpurikâye de° B °purikâ de° M °rikshe ga° B °sushṭutaram̃° M °gâyam̃ti vâdyenti ca yathâ° tto ye tâye de°. — 15. M °purikâ nistha° kim eshya de° B °kshagato ja° M °lpantiti || .

16. B °nena tushṇi° M °jâtâḥ de° syâhuḥ || . — 17. B duçruta° M duçrutam̃ te mahâ° yo svam̃ amanu° B °yo tvam̃ amanu° M °hitvâ anaparâdhim̃ padmâvatim̃ devim̃ vadhyâ josiresi || tâ°. — 19. M °kâye pṛi°.

संमोदनीयां कथां संमोदयित्वा सारायणीयां कथां व्यतिसारयित्वा एकान्ते निषीदि ॥ एकान्ते निषण्णं ज्योतिपालं माणवं राजा दिशांपतिरेतदवोचत् ॥ ओवदतु मे भवां ज्योतिपालो अनुशासतु मे भवां ज्योतिपालो मा च भवां चिरायतु अस्माकं ओवादानुशासनीये । एते च वयं भवन्तं ज्योतिपालं स्वके पैतृके स्थाने स्थापेम यदिदं पौरोहित्ये गौविन्दीये ॥ अथ खलु भवन्तो ज्योतिपालो माणवः स्वके पैतृके स्थाने स्थापितो पौरोहित्ये गोविन्दीये यदप्यस्य पिता कर्म कारापयति तदपि कर्म कारापयति यदप्यस्य पिता कर्मान्तानि अभिसंभुणोति तां पि ज्योतिपालो माणवो कर्मान्तां अभिसंभुणोति यदप्यस्य पिता अर्थार्थं समनुशासति तं ज्योतिपालो माणवो अर्थार्थं समनुशासति यदप्यस्य पिता अर्थार्थं अभिसंभुणोति तदपि ज्योतिपालो माणवो अर्थार्थमभिसंभुणोति ॥ अपि हि त्रितं ब्राह्मणगृहपतिनो नैगमजानपदा एवमाहन्सुः ॥ गोविन्दो पुनर्भवन्तो ज्योतिपालो माणवो महागोविन्दो ज्योतिपालो [328a] इति ॥ अपि हि त्रितं ज्योतिपालस्य माणवस्य गोविन्दो महागोविन्दो ति एवमक्षरमभिख्यं उपनिपते ॥

अथ खलु भवन्तो महागोविन्दो ब्राह्मणो येन ते क्षत्रियास्तेनोपसंक्रमित्वा तेषां क्षत्रियाणामेतदुवाच ॥ एतु भवन्तो एतु भवन्तो येन रेणुकुमारस्तेनोपसंक्रमित्वा रेणुं कुमारमेवं वदेथ ॥ यंसुखी भवां रेणुः तंसुखी वयमपि यंदुःखी भवान् रेणुः तंदुःखी वयमपि । अयं भो रेणु राजा दिशांपति जीर्णो वृद्धो महल्लको अध्वगतो वयमनुप्राप्तो दुर्जयं खलु पुनः तं भो रेणु यमिदं जीवितं मरणान्तं ॥

1[1]. M ekâm̃te nisharṇṇaḥ | jyotishpâlam̃ ° jâ viçâm̃pa°. — 2[2]. BM opa(B ova)tu me bhavâm̃ jyoti(M °bhagavâm̃a jyotiḥ)pâlo(M °laḥ) anuçâsa(B °si)tu me bhavâm̃ jyoti(M °vân jyotiḥ)pâla mâ ca bhavâ(M °mâ ra bhavâm̃)ṇ âgirâyatu | asmâ° B °ovâdyanu° BM °nîye e°. — 4. M °bhavam̃tam̃ jyotiḥpâlam̃ svapai° B °pema | ya° M °d imam̃ paurohitya govim̃diye | . — 5. M °bhavam̃to jyotiḥpâ ° ṇavo sva° M °hityagovim̃diye | yad apyasya pitâ karma kârâpayati tam̃ jyotipâlo mâṇavako karmam̃ kâraya | te yad apyasya pitâ° (l. 8) B °hitya gauvindîye yad apyasya pitâ karma kârâpayati | yad apyasya pitâ karmântânyabhisam̃bhûṇoti tam̃ pi jyotipâlo mâ ° çâsati | tam̃ jyo° M °çâsati tam̃ jyotiḥpâ° BM °çâsati | ya° M °noti | tadâpi jyotiḥpâ°.

10. BM °jidam̃ brâ° B °hapatinâ nai° M °hapati nai ° evam âha | evam̃m ahatsu go°. — 11. M govim̃do punar bhagavam̃to jyotiḥpâlo mâṇavo govim̃do jyotiḥpâleti | . — 12. B °jidam̃ jyo° M °jyotiḥpâ ° kasya govim̃do yena aksha° B °ti yenam aksharam agnim̃nyam̃ upaniyate || . — 14. M °bhavam̃to mahâgovim̃do brâ° B °yena te kshetriyâs te ° shâm̃ kshetriyâṇâm̃m e° M °shâm̃ kshatriyânâm e°. — 15. M yem̃tu bhavam̃to yenu(?) kva(?)mâro teno ° tvâ reṇuku°.

16. M yam̃sukhî bhavân re° BM °reṇum̃ tam̃su ° n reṇum̃ tam̃duḥ°. — 17. B sham̃ bho reṇu râ° M ayam̃ bho reṇuḥ râjâ viçâm̃° BM °dhvagata vaya° M °prâptaḥ du ° punas tam̃ bhà reṇu ° maraṇatam̃ sa° B °ntam̃ sa°.

सचेद्धि भो रेणु राज्ञो दिशांपतेरत्ययेन राजकर्तारो भवन्तं रेणुं राज्येनाभिषिंचिष्यन्ति शक्ष्यति भवां रेणु अस्माकमपि राज्येन संभजितुं ॥ एवमुक्ते भगवां रेणुकुमारो षट् क्षत्रियानेतदवोचत् ॥ सचेत् मां भवन्तो राज्ञो दिशांपतेरत्ययेन राजकर्तारो राज्येनाभिषिंचिष्यन्ति संविभजिष्याम्यहं भवन्तो राज्येन ॥ अथ कोचि दानि अस्माकं राज्ये अन्यो नाप्येवं सुखमेधिष्यति यत्रैव भवद्भिः ॥

अथ खलु भवन्तो दीर्घस्याध्वनो त्ययेन राजा दिशांपतिः कालमकार्षीत् ॥ अथ खलु भवन्तो राजकर्तारो येन रेणुकुमारस्तेनोपसंक्रमित्वा रेणुकुमारमेतदुवाच ॥ राज्यं सि कुमार प्राप्तो राज्येन त्वामभिषिंचाम ॥ एवमुक्ते भवन्तो रेणुः कुमारो तां राजकर्तारां एतदवोचत् ॥ तेन हि भवन्तो सुखी भवथ यस्येदानि कालं मन्यथ ॥ अथ खलु स रेणुराजा राज्येनाभिषिक्तो पंचहि कामगुणेहि समर्पितः समंगीभूतः क्रीडति रमति परिचारयति ॥ अथ खलु भवन्तो महागोविन्दो ब्राह्मणो येन ते षट् क्षत्रिया तेनोपसंक्रमित्वा तान् षट्क्षत्रियानेतदवोचत् ॥ एन्तु भवन्तो अयं हि भवन्तो रेणुराजा राज्येनाभिषिक्तो पंचहि कामगुणेहि समर्पितो समंगीभूतो क्रीडति रमति परिचारयति कामा च नाम एते भवन्तो मदनीया ॥ एन्तु भवन्तो येन रेणुराजा तेनोपसंक्रमित्वा रेणुं राजानमेवं वदेथ । स्मरति भवां रेणु तं वचनं ॥ साधु भवन्ति एते षट् क्षत्रिया महागोविन्दस्य ब्राह्मणस्य प्रतिश्रुत्वा येन रेणुराजा तेनोपसंक्रमित्वा रेणुं राजानमेतदवोचत् ॥

1. M °jño viçâm̃° B °tyayena râjâ karttâro bhavantam̃ reṇuḥ râjyenâbhishim̃cishyanti çakyati bhavâm̃° M °ro bhavam̃tam̃ reṇuḥ râjyenâbhishicishyanti | çakshyati | bhavâm̃ ° sam̃vibhajitum̃ ‖. — 2. M °m uktam̃ bhagavân reṇum̃ kumâro yo kshatri° B °bhavâm̃ reṇu°. — 3. M sacen mâm̃ bhavam̃to râjño viçâm̃° BM °tyayena râjâ karttâ° M °ro râjyonâbhishicishyati sam̃bhavishyâ ° bhavam̃to râjyena |. — 4. M °dânim̃ asmâkam̃ anyonyapye° B °sukham̃ snedhishyati | anya° M °sukham̃ svapishyati | anyatraivam̃ bha°.

6. M °bhavam̃to dî ° râjâ viçâm̃°. — 7. BM °bhavanto(M °vam̃to) râjâ karttâ° M °yena reṇukumâro teno ° tvâ reṇum̃ ku ° tad avocat |. — 8[1]. B °jyena tvabhi°. — 8[2]. M °bhagavam̃to re ° mâraḥ tâm̃ ° rtâram e°. — 9° M °hi bhavam̃taḥ su° B °khî bhavatha | ya° M °dânîm̃ kâ°. — 10. M °ṇu kumâro râjânâ râjye ° pam̃cabhi kâ ° rpito samanvam̃gibhûtaḥ sukhî bhavatha yasyedânîm̃ kâlam̃ manyatha | atha khalu sa reṇukumâro râjânâ râjyenâbhishikto pam̃cabhi kâmaguṇehi samarpito samanvam̃gibhûtaḥ krîḍati ramate paricârayati | kâmâ ca nâma bhavam̃to mardanîyâ em̃tu bhavam̃to | atha°.

11. M °bhavam̃to mahâgovim̃do brâ° BM °ṇo yena te shaṭ kshetriyân e(M °shaṭ kenniyâm e)tad a°. — 13. M em̃tu bhavam̃to ayam̃ hi bhavam̃to re° B eta bhavanto aham̃ hi bhavam̃to re° M °rpito samanvagibhûtaḥ krî° B °yati | kâ° M °kâmâ ca se naite bhavam̃to yena° B °nîyâ e°. — 15. B etu bha° M yena ° râjânam̃m e ° dethâ | B °tha sma°.

16[1]. M °ṇu nam̃ va°. — 16[2]. B °bhavanto ti e° M °bhavam̃te ti | e° B °shaṭ kshetri° M °govim̃dasya brâ° B °yena reṇurâjân etad a°.

स्मरति भवां रे[328b]णु तं वचनं ॥ एवमुक्त भवन्तो रेणुराजा तां षट् क्षत्रिया-नेतद्वोचत् ॥ स्मराम्यहं भवन्तो तं वचनं । अथ को पि दानिमिमां महापृथिवीं सप्तधा भाजयिष्यति ॥ एवमुक्ते भवन्तो षट् क्षत्रिया रेणुं राजानमेतदुवाच ॥ अथ को हि दानि भो रेणु तेन भगवता महागोविन्देन अन्यो पण्डिततरो वा व्यक्ततरो वा य इमां महापृथिवीं सप्तधा भाजयिष्यति ॥ अथ खलु भवन्तो रेणु-राजा अन्यतरं पुरुषमामन्त्रयति ॥ एहि त्वं भो पुरुष येन महागोविन्दो ब्राह्म-णस्तेनोपसंक्रमित्वा महागोविन्दं ब्राह्मणं एवं वदेहि । राजा रेणुर्भगवन्तं महा-गोविन्दमामन्त्रयति ॥ साधु महाराजेति स पुरुषो रेणुस्य राज्ञः प्रतिश्रुत्वा येन महागोविन्दो ब्राह्मणस्तेनोपसंक्रमित्वा महागोविन्दं ब्राह्मणमेतदुवाच ॥ राजा रेणुर्भगवन्तं महागोविन्दं आमन्त्रयति । उपसंक्रमतु भवां महागोविन्दो येन राजा रेणुः ॥ साधूति महागोविन्दो ब्राह्मणः तस्य पुरुषस्य प्रतिश्रुत्वा येन रेणु-राजा तेनोपसंक्रमित्वा रेणुना राज्ञा सह संमोदनीयां कथां संमोदयित्वा सारा-यणीयां कथां व्यतिसारयित्वा एकान्ते निषीदि ॥ एकान्ते निषण्णो महागोविन्दो ब्राह्मणो रेणुं राजानमेतदुवाच ॥ इमा भवन्तो महापृथिवी सप्तराज्यविस्तीर्णा ।

दक्षिणेन संक्षिप्ता शकटमुखसंस्थितं ।
अपह्नमध्यमं रेणुस्य राज्ञः आसि अतः पुरं ॥
कलिंगानां च अश्मकानां यो....... ।
माहिष्मती च ..... सौवीराणां च रोरुकं ॥

1[2]. M evaṁm ukte bhavaṁto re° BM °shaṭ kshetri°. — 2[1]. M °bhavato taṁ°. — 2[2]. M atha kvacid idâ imâṁ° B °ko ci hi dâni° BM °thivi sa° M °dhâ bhoja°. — 3. M °bhavaṁto shaṭ kshatriyâṁ reṇurâ°. — 4. M atha kvacid idânîṁ bho° B °ko ci hi° M °reṇus te° govide BM °thivi saptadhâsya bhâ(M °bho)ja°. — 5. M °bhavaṁto re° sham âmaṁtra°.

6. M °goviṁdo brâ° B °hmaṇos teno° B °dehi râ°. — 7. M °r bhagavaṁtaṁ mahâgoviṁdaṁm âmaṁtrayati | B °vindaṁm â°. — 8. M °ti satpuru° B °reṇasya° M °reṇusâ râjño pra° yena mahâgovido brâhmaṇe teno° goviṁdaṁ brâ° m etad avocat | . — 9. M °reṇuṁ bhavaṁtaṁ mahâgoviṁdaṁ âmaṁtrayati | . — 10. M °kramitu bhavân mahâgoviṁdo ye° BM °ṇuḥ sâ°.

11. M °goviṁdo brâhmaṇo tasya pu° BM °nîyâṁ kathâ saṁmodayitvâ sârâpaṇî(M °paṇi)yâṁ° M °ekâṁte ni° B °shîdi e°. — 13. M ekâṁte nisharṇṇo mahâgoviṁdo brâ° reṇurâ°. — 14. BM imâṁ bhavanto(M °vaṁto) ma° B °ptadhâ râje vistîrṇṇaṁ dakshi° M °râje vistîrṇṇo dakshi°. — 15. B dakshiṇadakshiṇe° ptâ sakaṭamukhasaṁsthitâṁ a° M °ṭamukheshu sasthitâ a°.

16. B °jñaḥ asi a° BM °si an(M °aṁ)taḥpu° BM °raṁ ka°. — 17. B °yo tanaṁ mâ° M °yo ttanaṁ mâ°. — 18. BM mâhi(M moha)shyati ca vartti(M °rti)nâṁ sau° M °ṇâṁ ca lolakaṁ B °kaṁ mi°.

मिथिलां च विदेहानां . . . अंगेषु मापये ।
वाराणसीं च काशिषु एतं गोविन्दमापितं ॥

अथ खलु भवन्तो गोविन्दो ब्राह्मणस्तां षट क्षत्रियां स्वकस्वकेषु राज्येषु प्रतिष्ठापये ॥

अचिराभिषिक्ता च षड्राजानः क्षिप्रमेव संनिपतिता येन महागोविन्दो ब्राह्मणस्तेनोपसंक्रमित्वा महागोविन्दं ब्राह्मणमेतदवोचत् ॥ प्रवदतु भो भवां महागोविन्दो अनुशासतु भो भवां महागोविन्दो यथा च भवां महागोविन्दो रेणुस्य राज्ञः अर्थार्थानि समनुशासति तथा इमेषु [329ᵃ] षट्सु राज्येषु अर्थार्थानि समनुशासतु ॥ तेन खलु पुनस्समयेन महागोविन्दो ब्राह्मणः सप्तानां राज्ञां अर्थार्थानि समनुशासति । सप्त च ब्राह्मणशतसहस्राणि मन्त्रां वाचेति सप्त च स्नातकशतानि मन्त्रां वाचेति । वदतो मे शृणुथ ॥

अपि हि जितं ब्राह्मणगृहपतिनो नैगमजानपदा च महाभागं गोविन्दं ब्राह्मणं एवं संजानन्ति ॥ पश्यति आर्यो महागोविन्दो साक्षान्महाब्रह्माणं महाब्रह्मणा च पुनः सार्धं विन्नेयं मन्त्रिय मन्त्रिय अर्थार्थानि समनुशासति ॥ अश्रोषीत्खलु भवन्तो महागोविन्दो ब्राह्मणो । मम किल ब्राह्मणगृहपतिनो नैगमजानपदा एवं संजानन्ति आर्यो महाभागो गोविन्दो साक्षात्पश्यति ब्रह्माणं महाब्रह्मणा च पुनः सार्धं चिन्तयति यान्यर्थार्थानि समनुशासति । न खलु पुनरहं पश्यामि साक्षात

1. BM °dehâm̃ ca yâ am̃ge° M °shu mâmaye B °ye vâ°. — 2. B °ṇasî ca° M °râṇam̃sî ca ° govim̃dam âropitam̃ ‖ . — 3. M °bhavam̃to govim̃do brâ° B °shaṭ kshetri° BM °jyehi pra°. — 5. M °cirâdbhishi ° shaḍ râjâ ° kshipram̃m evam̃ sannipatitânâm̃ ca mahâgovim̃do brâhmaṇah teno° B °nipatitânâm̃ ye° M °govim̃dam̃ brâ°.

6. BM pravadatu bhavâm̃ ma(M °vân ma)hâgovindo(M °vida) a ° tu me bhavâm̃ ma(M °vân ma)hâgovindo(M °vim̃da) yathâ° M °bhavân mahâgovim̃da re ° râjño arthârtham̃ samanu ° çâsati tena° B °çâsati | . — 9. B açroshit tena kha° M °lu samaye ° govim̃do brâ ° râjñâ a°. — 10. M °srâṇi tatrâ vâceti sa° B °srâṇi mam̃trâm̃ vâceti sa° M °tâni tam̃trâ vâceti.

11. BM vadatu me bhavâm â(M °vân â)ha ‖ . — 12. BM °patinâm̃(M °nâ) naigamajâ(M °ja)napadena mahâ° B °bhâgo govi° M °govim̃dam̃ brâ ° jânam̃ti B °nti pa°. — 13. M paçyati | âryyamahâ° B °ârye mahâ° M °govim̃do sâkshât mahâbrâhmaṇa puṇah° B °kshân mahâbrâhmaṇo mahâbrâhmaṇâ ca ° rddham̃ dinneyam amantreyam̃ mantriyam̃ a° M °rddham̃ dinneyam̃ mam̃treya mam̃triyam̃ a° B °ti a°. — 14. M °lu puna bhavam̃to mahâgovim̃do brâ° B °hmaṇa ma°. — 15. M sama ki° BM °patinâ nai° M °jânam̃padâ evam̃ sajânam̃ti | âryâ mahâbhogo govim̃do sâ° BM °çyati(M °ti |) brâhmaṇamahâbrâhmaṇâ° M °rddham̃ cim̃tayati yo arthârthâni° B °yati yo 'rthârthâ sa°.

17. M na khalu punar am̃ham̃ mahâbrâhmaṇena sârddham̃ vim̃daya mam̃triya a° B °t mahâbrâhmaṇam̃ ° hâbrâhmaṇena sârddham̃ vindiyati vindiya mantriya a° BM °çâsati ‖ .

महाब्रह्माणं न च पुनरहं महाब्रह्मणा सार्धं विश्वेयं मन्त्रिय मन्त्रिय अर्थार्थानि समनुशासामि ॥ न खलु पुनर्मे तत्साधु न प्रतिरूपं यमहं अभूतं असन्तं वर्णं अधिवासयेयं ॥ श्रुतं खलु पुनर्मे तं पौराणानामाचार्याणां प्रवयानां जीर्णानां वृद्धानां महल्लकानां अध्वगतवयमनुप्राप्तानां संमुखाद्भाषमाणानां । यो चत्वारि वार्षिकां मासां प्रतिसंलीनो करुणं ध्यानं ध्यायति तं साक्षात् महाब्रह्मा उपसंक्रमति यस्यास्यार्थो अभिप्रेतो भवति तं वास्य पृच्छितेन विसर्जियति । यं नूनाहं चत्वारि वार्षिकानि मासानि प्रतिसंलीनः करुणं ध्यानं ध्यायेयं सचे तं भगवां रेणु अनुजानाति ॥ एवमुक्ते भवन्तो रेणुराजा महागोविन्दं ब्राह्मणमेतदुवाच ॥ तेन हि भो महागोविन्द सुखीभव यस्य व कालं मन्यसीति ॥

अथ खलु भवन्तो महागोविन्दो चत्वारि वार्षिकां मासां प्रतिसंलीनः करुणं ध्यानं ध्याये ॥ अथ खलु भवन्तो महागोविंदो ब्राह्मणो चतुर्णां वार्षिकानां मासानां अत्ययेन तदहो पोषधेयं चतुर्दश्यां पौर्णमास्यां शीर्षस्नातो आहतवस्त्रशुचिवस्त्रनिवस्तो अन्तरा च वेदिं अन्तरा चाग्निं स्नातशरीरो पट्टशिलायां आज्यानुलेपनायां अन[329b]न्तरहितायां अग्निं प्रज्वालेत्वा आज्ञानां गृहे निषीदे उत्तरामुखो ॥ अथ खलु भवन्तो नचिरस्यैव उत्तरातो दिशातो महतो आलोकस्य प्रादुर्भावो अभूषि ॥ अद्राक्षीत्खलु भवन्तो महागोविन्दो उत्तरातो दिशातो महतो आलोकस्य प्रादुर्भावं दृष्ट्वा च पुनराश्चर्याद्भुतं संविग्नरोमहर्षजातो अभूषि यथापीदं अदृष्टपूर्वं दृश्यते ॥ अथ खलु भवन्तो महाब्रह्मा नचिरस्यैव उत्तरातो दिशातो वैहायसमागत्वा महागोविन्दस्य ब्राह्मणस्योपरि वैहायसमन्तरीक्षे अस्थासि ॥ अद्राक्षीत्खलु महागोविन्दो ब्राह्मणो ऊर्ध्वं उल्लोकेन्तो महाब्रह्माणं उपरि-

2. M °tu punar etat sâ° BM °pam̃ yâm aham̃ bhû° M °tam̃ asam̃tam̃ va° B °vâseyeyam̃ çru°. — 3. B çrutam̃ | kha° BM °paurâṇânâm̃m âcâryâṇâm̃(M °ryyâṇâ) prâvaryâṇâm̃ ji° M °llakâtâm̃ adhva° BM °shamâṇâ(M °nâ)nâm̃ yo°. — 4. BM °rshikânâm̃ mâsâm̃(M °sâ) pra ° nam̃ dhyâyeti(M °ti |) tam̃ sâ ° preto(M °pretâm̃) bhavati(M °ti |) tam̃ câsya pṛicchito yena visarjjayati | .

6. BM °rshikânâm̃ mâsânâm̃(M °sânam̃) pra° B °yeyam̃ | sa°. — 8[1]. M °bhavam̃tâ re° govim̃dam̃ brâ°. — 8[2]. M °govim̃do su° BM °yasya ca kâ° M °nyasi iti | . — 10. M °bhavam̃to mahâgovim̃do ca ° lîna kalunadhyânam̃°.

11. M °bhavam̃to ma ° ṇo caturṇṇâ vâ ° ho mosha° B °dheyam̃ cadasyâm̃ paurṇṇam̃mâsyâm̃° M °shadheyam̃ caturdaçyâm̃ çîrsha° BM °âhatavaçucivastranivasto anta(M °nivastro am̃ta)râ ca devî antarâ câgnim̃ shva(M °am̃tarâyâgnim̃ tya)ktaçarîram̃ pathakshiptâyâm̃ ajâ(B °atrâ)nulepanâyâm̃ ananta(M °nam̃ta)rahitâyâm̃ agni prajvâletvâ çrutvânâm̃ gṛihya nishi°. — 15. M °bhavam̃to nacirasyaivam̃ u ° diço âlo°.

16. M °bhavam̃to mahâgovim̃do u° B °çcaryâm̃dbhu° M °romakṛishṭa ° rvam̃ ca dṛi°. — 18. M °bhavam̃to mahâbrâhmâ ° syaivam̃ u ° govim̃dasya brâ°. — 20. M °lu bhavam̃to

वेहायसमन्तरीचे स्थितं दृष्ट्वा च पुनर्येन महाब्रह्मा तेनांजलिं प्रणामेत्वा महाब्रह्माणं गाथाये ध्यभाषति ॥

बलं वा यशं वा च्युतिं वा किन्तुवमसि मारिष ।
अजानन्तो ते पृच्छामि कथं जानेम ते वयं ॥

एवमुक्ते भवन्तो महाब्रह्मा महागोविन्दं ब्राह्मणं गाथाये प्रत्यभाषति ॥

यं कुमारो ति संजानन्ति ब्रह्मलोके सनातनं ।
देवा पि संजानंति एवं एवं गोविन्द जानथ ॥

एवमुक्ते भवन्तो महागोविन्दो ब्राह्मणो महाब्रह्माणं गाथाये भाषति ॥

आसनं उदकं पाद्यं मधुरकल्पं च पायसं ।
प्रतिगृह्णेहि मे ब्रह्म अर्घं अभिहरामि ते ॥

अथ खलु भवन्तो महाब्रह्मा महाब्राह्मणं महागोविन्दं गाथाय प्रत्यभाषति ॥

आसनं उदकं पाद्यं मधुरकल्पं च पायसं ।
प्रतिगृह्णामि गोविंद अर्घं अभिहराहि मे ॥

एवमुक्ते भवंतो महागोविंदो ब्राह्मणो महाब्रह्माणं गाथाये भाषति ॥

दृष्टे धर्मे हितार्थं वा संपरायसुखाय वा ।
कृतावकाशो पृच्छेयं यं मे मनसि प्रार्थितं ॥

mahâgovimdo brâ ° ûrddha ullo° B °ûddhaṁ u° BM °kento(M °kemto) mahâbrâhmaṇaṁ u° M °hâyasam amtari ° praṇame° BM °tvâ mahâbrâhmaṇaṁ gâ° M °bhâsheti | .

3. BM °çaṁ vâ cyutiṁ vâ kin(M °kiṁ) tu tvaṁ asi ° sha a°. — 4. M ajânamto ne pṛi° B °ma | te°. — 5. M °bhavamto ma ° govimdaṁ brâ ° bhâshaye.

6. M kumâ° B ye ku° BM °ro ti taṁ jâ° M °jânamti | bra° BM °naṁ de°. — 7. M devâṁ pi saṁjânamti e° B °nti evaṁ go° M °govimda jâ°. — 8. M °bhavamto mahâgovimdo brâ° BM °ṇo mahâbrâhma(B °hmaṁ)ṇaṁ ° shati | balaṁ vâ(M °câ) yaçaṁ vâ çyutiṁ vâ kiṁ tvam asi mârisha ajânanto(M °namto) te pṛicchâmi kathaṁ jânema te vayaṁ ‖ atha khalu bhavanto(M °vamto) mahâgovinda(M °vimdo brâhmaṇo) â°. — 9. M âhanaṃ uda° BM °saṁ pra°. — 10. BM °gṛihnehi me brahme a° M °graṁ atiha°.

11. M °bhavamto mahâbrahmâ mahâgâthâye pratyabhâsheti | . — 12. B *omet 12, 13 et 14*. M °kaṁ vâdyaṁ madhuka ° saṁ pra°. — 13. M °gṛihnâmi govimde agraṁ abhibasaṃi te | . — 14. M °vimde brâhmaṇa mahâbrâhmaṇa mahâbrâhmaṇaṁ gâthâ shati ‖ . — 15. M dṛishṭve vaṁ me hi° B °shṭe varme° BM °rthaṁ saṁ° M °parâṇi su° B °khâni vâ kṛi°.

16. M °kâçe pṛiccheyaṁ | paṁca me manami prâ° B °ccheyaṁ me°.

एवमुक्ते भवन्तो महाब्रह्मा महागोविन्दं ब्राह्मणं गाथाये प्रत्यभाषति ॥

दृष्टधर्मे हितार्थं वा संपरायसुखाय वा ।
कृतावकाशः पृच्छाहि यं भवत्यभिप्रार्थितं ॥

अथ खलु पुनः भवन्तो महागोविन्दस्य ब्राह्मणस्यैतदभूषि ॥ प्रवारितं मे खलु महाब्रह्मणा प्रश्नव्याकरणेन किं दानिं महाब्रह्माणं पृच्छेयं दृष्टधार्मिकं अर्थमारभ्य [330a] उताहो सांपरायिकं ॥ अथ खलु भवन्तो महागोविन्दस्य ब्राह्मणस्यैतदभूषि ॥ अस्ति तावदयं दृष्टधार्मिको अर्थो यमिदं पंच कामगुणानारभ्य । यं नूनाहं महाब्रह्माणं सांपरायिके अर्थे प्रश्नं पृच्छेयं ॥ अथ खलु महागोविन्दो ब्राह्मणो महाब्रह्माणं सांपरायिके अर्थे प्रश्नं पृच्छे ॥

पृच्छामि ब्रह्माणं सनत्कुमारं
कांक्षी अकांक्षं परिचारियेषु ।
कथंकरो किन्तिकरो किमाचरं
प्राप्नोति मनुजो ऽमृतं ब्रह्मलोकं ॥

एवमुक्ते भवन्तो महाब्रह्मा गोविन्दं ब्राह्मणं गाथाये प्रत्यभाषति ॥

हित्वा ममत्वं मनुजेषु ब्रह्म
एकोतिभूतो करुणो विविक्तो ।
निरामगन्धो विरतो मैथुनातो
प्राप्नोति मनुजो ऽमृतं ब्रह्मलोकं ॥

1. B evaṁm u° M atha khalu punar bhavaṁto mahâbrâhmâ goviṁda brâhma ° bhâshe. — 2. M dṛishṭhadha ° sukhâyani vâ | B °khâni vâ | . — 3. M °kâça pṛi° BM °yaṁ bhâvasyâbhi° M °prârthaye | . — 4[1]. M °punar bhavaṁto mahâgoviṁdasya brâ°. — 4[2]. BM °lu mâhâbrahmâ praçna° B °dânîm emama brâhmaṇaṁ° M °nîṁ maṁ mama brâhmaṇaṁ° kam artha ârabhya jâto sâṁ°.

6. M °bhavaṁto mahâgovidasya brâ°. — 7[1]. M pravâritaṁ me khalu tâ ° dṛishṭvâdhârmikorthâ yam i ° ṇânâṁ rabhya B °rabhya yaṁ°. — 7[2]. BM °hâbrâhmaṇaṁ° M °artha praçna pri°. — 8. M °goviṁdo brâ° BM °ṇo mahâbrâhmaṇaṁ(M °ṇa) sâṁparâyikaṁ arthaṁ pra° B °ccheham pṛicchâ° M °ccheyaṁ ‖. — 10. BM °mi brâhmaṇaṁ satâṁ (M °satya) ku° B °raṁ kâkshî akâṁkshî paricârîyeshu ka° M °raṁ kâçi akâkshî parivârayeshu ka°.

12. M kakaroti kiṁ ca karohi mâṁ vâro prâ° B °thaṁ karoti mâ vâro kiṁ ca karohi prâ° BM °pnoti anyo amṛi°. — 14. M evaṁm ukte bhavaṁto mahâgoviṁdo mahâbrahmâṇaṁ gâthâ ° bhâshiti ‖ B °bhâsheti ‖. — 15. B °shu brâhme e° M °brahme e° BM °ruṇe vivikto(M °kte) | .

17. M °magaṁdho vi° B °viratâ mai° ti manyo amṛitaṁ brâhma° M °ti manye amṛi°.

एवमुक्ते भवन्तो महागोविन्दो ब्राह्मणो महाब्रह्माणमेतदवोचत् ॥ हित्वा ममत्वं ति वयं भवन्तो महाब्रह्मणो भाषमाणस्य एतमर्थमाजानाम यदेकत्यो अगारस्यानगारियं प्रव्रजे अल्पं भोगस्कन्धं प्रहाय महान्तं वा भोगस्कन्धं प्रहाय अल्पं वा ज्ञातिवर्गं प्रहाय महान्तं वा ज्ञातिवर्गं प्रहाय । उच्चकुलाद्वा नीचकुलाद्वा संभवति अपहृतगृहिव्यंजनो संघाटीपात्रचीवरमादाय शिक्षति शिक्षापदेषु कायकर्मवाचाकर्मणा समन्वागतो परिशुद्धेन परिशुद्धाजीवो हित्वा ममत्वं ति वयं भवन्तो महाब्रह्मणो भाषमाणस्य एतमर्थं जानाम ॥ एकोतीभावं भवन्तो महाब्रह्मणो एतमर्थमाजानाम ॥ यदिहैकत्यो वितर्कविचाराणां व्युपशमाद्ध्यात्मसंप्रसादाच्चेतस एकोतीभावादवितर्कमविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य विहरति एकोतीभूतो ति वयं भवन्तो महाब्रह्मणो भाषमाणस्य एतमर्थमाजानाम ॥ करुणो विविक्तो ति वयं भवन्तो महाब्रह्मणो भाषमाणस्य एतमर्थमाजानाम ॥ यदिहैकत्यो करुणापरेण चेतसा एकान्दिशां स्फरित्वोपसंपद्य विहरति विपुलेनमुन्नतेन अद्वयेनाप्रमाणेनावैरेणाव्याबाधेन तथा द्वितीयं तथा तृतीयं तथा चतुर्थमिति ऊर्ध्वमधो तिर्यक्सर्वैहि सर्वत्रताये सर्वावन्तं लोकं स्फरित्वोपसंपद्य विहरति करुणो [330b] विविक्तो ति वयं भवन्तो महाब्रह्मणो

1[1]. M °bhavaṁto mahâgovido brâ° B °hâbrâhmaṇa° M °brahmam e°. — 1[2]. B °tvâ mamatveti yaṁ yaṁ bhavanto mahâbrâhmaṇo° M °tvâ mamatveti yaṁ ya dravaṁto mahâbrâhmaṇo ° etam arthaṁm âjânâmâ | yathedaṁ ekanyo a° B °jâma yadai° BM °je analpaṁ bhogaskandhaṁ(M °skaṁdhaṁ) pra(B °prahâyama)hâya mahântaṁ(M °hâṁtaṁ) vâ bhogaskandhaṁ(M °skaṁdha) prahâya(B °ya |) alpaṁ vâ jñâ° M °jñânivargaṁ prahâya mahâṁtaṁ va duvaku° B °prahâya ucca°. — 4. BM °kulâd(M °le) vâ nicakulâd(M °le) vâ saṁbhavati | (B °ti) a ° gṛihavyaṁjanâ(M °janaṁ) saṁghâ° B °ṇâ samatvâgato° BM °çuddho jî° M °jîvo hitvâṁ mamatvan ti | vayam api matvanti | vayam api mahâbrâhmaṇo° B °hitvâ mamatva ti ° hâbrâhmaṇo ° etam arthe jânâma eko°.

7. B °tivayaṁ bha° M °ticayaṁ bhavato mahâbrâhma° B °hâbrâhma ° tam arthaṁm âjâ° M °tam arthaṁ jâ°. — 8. B °haikatyâ vitarkavicârâ° M °çamâd adhyânmasaṁ° B °dâc caitasa° M °bhâvâd avitarkam avive ° harâmi | ekonibhûto ni vayaṁ bhavaṁto mahâ° B °harati | ekotibhû ° hâbrâhma ° tam arthaṁm âjânâma ka° M °tam arthaṁ jânâmaḥ ka°.

11. M karûṇo vimukteti cayaṁ bhavaṁto mahâbrâhmaṇasya e° B °ruṇo vimukto ° hâbrâhma° BM °tam arthaṁ âjâ°. — 12. BM °haikatyo(M °tye) karu(M °rû)ṇo pano na ce (M °paro na ca) tasya ekân diçâṁ sphâritvo(M °kâ diçaṁ sphârayitvâ u)pasaṁpadya viharati | vipulena madga ° pramâṇenâvaire(M °nâvale)ṇâvyâbaddhe(M °rddhe)na tathâ dvi ° rtham iti urddham a(M °ûrddhaṁ a)dho tiryat sa(M °tîryag sa)rve° M °rvâvaṁtaṁ lo° B °saṁpadyati viha° BM °ruṇe vivikte ti vayaṁ bhavanto(M °vaṁto) mahâbrâhmaṇo bhâ° B °rtham âjâne âmaga° M °rtham âtone ânma°.

भाषमाणस्य एतमर्थमाजानाम ॥ निरामगन्धं वयं भवन्तो महाब्रह्मणो भाषमाणस्यार्थं न जानाम ॥

के आमगंधा मनुजेषु ब्रह्म
एतं न विन्दे तद्वीर ब्रूहि ।
येनावृता वारिवहा कुकूल
आपायिका निर्वृता ब्रह्मलोकं ॥

एवमुक्ते महाब्रह्मा महागोविन्दं ब्राह्मणं गाथाये प्रत्यभाषति ॥

क्रोधो मृषावाद् कथंकथा च
..... अतिमानो....... ।
ईर्ष्या च हिंसा परवादरोषणा
ते आमगन्धा मनुजेषु ब्रह्म ।
येनावृता वारिवहा कुकूल
आपायिका निर्वृता ब्रह्मलोकं ॥

एवमुक्ते भगवान्महागोविन्दो महाब्रह्माणमेतदुवाच ॥ आमगन्धो ति वयं भवन्तो महाब्रह्मणो भाषमाणस्य एतमर्थं जानाम ॥ तं न मे शक्यमगारमध्यावसता एकान्तसंलिखितं एकान्तानवद्यं एकान्तपरिशुद्धं पर्यवदातं च ब्रह्मचर्यं चरितुं । अल्पकं जीवितं गमनीयो सांपरायः नास्ति जातस्यामरणं तस्माज्ज्ञातव्यं मन्तव्यं बोद्धव्यं कर्तव्यं कुशलं कर्तव्यं ब्रह्मचर्यं न किंचिल्लोके पापं कर्म करणीयं ॥

1. M ânmagaṁdhaṁ vayaṁ bhavaṁto mahâbrâhmaṇasya bhâshamâṇâsyâ° B °hâbrâhma bhâ° BM °rthaṁ jânâma e°. — 3. B eke â° M ete âtmagaṁdhâ yanuje° B °shu brâhmaṇa evaṁ na° M °shu brâhmaṇa eva na viṁde tad vanaṁ krûhi B °d vîra kruhî me°. — 5. B menâvṛi° M yenâpûto pâripahâ° BM °kukkula° M °âyâpikâ°.

7. M evaṁm ukte mahâbrâhmaṇa mahâgoviṁdaṁ brâ° B °kte mahâbrâhmâ ° vindo brâ°. — 8. BM °thâ ca kariyaṁ atimâno ti andhâ(M °mâto ni aṁdhâ) i°. — 10. BM irshyâ hiṁsâ ca pa° B °ṇâ ete âmagaṁdhâ manu° M °ṇâ ye te âtmagaṁdhâ manujeshu brâhmaṇenâ B °brahme ye°.

12. M yana nirvṛitâ vâ° BM °kukkula° M °pâpikâ° B °rvṛittâ bra°. — 14[1]. M evaṁm u ° goviṁdo mahâbrâhmaṇa° B °ndo mahâbrâhmaṇa° M °tad avocat ‖ . — 14[2]. M âmagaṁdho ti° BM °bhavanto(M °vaṁto) mahâbrâhma ° nâma taṁ°. — 15. M taṁ ta me° satâ ekoṁtasalikhitaṁ pṛikâṁtam anavayaṁ kṛitapari° B °satâ ekântaṁ saṁli ° dyaṁ kṛitapariçu° M °ryyavadâtaṁ bra° B °tuṁ a°.

17. BM alpâkaṁ° M °jîvituṁ ga° BM °nîyaṁ sâṁparâyaḥ(M °yo) nâsti(B °nâsmiṁ) jâ° M °smât jñâtavyaṁ maṁtavyaṁ bodhakartavyaṁ ku° B °ryaṁ na kiñcillo°.

प्रव्रजिष्यामि दानि हंभो महाब्रह्म अगारस्मानगारियं सचेत् मे भवां महाब्रह्मा अनुशासेय ॥ एवमुक्ते भवन्तो महाब्रह्मा महागोविंदं ब्राह्मणमेतदवोचत् ॥ तेन हि भो महागोविन्द सुखीभव यस्येदानिं कालं मन्यसि ॥

श्रुतं च मे तं भगवां किल तेन समयेन महागोविन्दो नाम ब्राह्मणो अभूषि स्मरति भगवां ॥ एवमुक्ते भगवां पंचशिखं गन्धर्वपुत्रमेतदवोचत् ॥ एवमेतं पंचशिख अहं तेन समयेन महागोविंदो नाम ब्राह्मणो अभूषि स्मरामि चाहं न च ते पुनः पंचशिख श्रुतं यथा सो महागोविन्दो ब्राह्मणो अगारस्मानगारियं प्रव्रजितो ॥ अहं खलु सो पंचशिख महागोविन्दः ब्राह्मणो येन रेणुराजा तेनोपसंक्रमित्वा रेणुं राजानं गाथाये अध्यभाषि ॥

आमन्त्रेमि महाराज रेणु भूमिपते तव ।
प्रव्रजामि प्रजहित्वा राज्यं पौरोहित्यं च मे ॥

एवमुक्ते पंचशिख रेणुराजा महागोविन्दं ब्राह्मणं गाथाय प्रत्यभाषति ॥

सचेद[331ᵃ]स्ति ऊनं कामेहि वयन्ते पूरयामथ ।
को वा भवन्तं हेठेति वयन्ते धारयामथ ।
भवां पिता वयं पुत्रो मा गोविन्द प्रव्रजाहि ॥

एवमुक्ते पंचशिख महागोविन्दो ब्राह्मणो येन रेणुराजा तेनोपसंक्रमित्वा रेणुं राजानं गाथाये अध्यभाषति ॥

न अस्ति ऊनं कामेहि हेठयिता न विद्यति ।
अमनुष्यवचनं श्रुत्वा कथं वर्तेम अन्यथा ॥

1. B °bho mahâbrahme agâ° M °bho mahâbrahme satrioyem̃ me bhagavân mahâ° B °sacet se bha° hâbrâhmâ° BM °seyam̃ ‖. — 2[1]. M °bhavam̃to mahâbra° govim̃da brâ° tad uvâca ‖. — 2[2]. M °govim̃do sukhibhavasya dâli kâlam̃ manyami | B °kâla manyasi |. — 4. M °me bhagavâ kila° govim̃do nâ° shi | smarati bhavân | B °ti bhagavâm̃ — vam u°. — 5[1]. M °gavâm̃n pam̃caçisham̃ gam̃dharva° B °ndharvam̃pu°. — 5[2]. BM °naḥ pam̃caçikha(M °çisham̃) çrutam̃(B °tam̃ |) yathâ(M °thâ ço) so mahâgovindo(M °vim̃do) brâ°.

8. BM evam̃(M eve) bhagavam̃ aham̃° B °çikho mahâgovim̃daḥ brâ° M °çisha mahâgovim̃do brâ°. — 10. M âmam̃tremi° B °ntresi mahâ° tava pra°.

11. M prajânâmi prajânâti prajânâm̃ sarvasvarâ° B °vrajâmi prajânasvarâ°. — 12. M evam̃m ukte° govidam̃ brâ° thâye pra°. — 13. M °hi vayam̃ ne pû° BM °tha ko°. — 14. M °bhavam̃tam̃ heṭheti capam̃ te dhâ° B °ṭheti caya° M °mathâ | B °tha bha°. — 15. B °pitâ ca yam̃ putra mâ° M °putra mâ govim̃dam uvrâjâ(?)hi |.

16. M evam̃m u°° çisha mahâgovim̃do brâ° tvâ reṇurâjâ° B °ṇum̃ râjâṇam̃ gâ°. — 18. B nâsti° M nâsti ûtam̃ kâmehi viheṭha°.

एवमुक्ते पंचशिख रेणुराजा महागोविन्दं ब्राह्मणं गाथाये प्रत्यभाषति ॥

अमनुष्यो कथं वर्णो किं वा अर्थं अभाषत ।
यस्य वाचं श्रुत्वा जहासि अस्माकं गृहं च केवलं ॥

एवमुक्ते पंचशिख महागोविंदो ब्राह्मणो रेणुराजानं गाथयाध्यभाषति ॥

सर्वतो यष्टुकामस्य उपवुस्तस्य मे सतः ।
अग्नि प्रज्वालितो आसि कुशचीरपरिच्छदो ॥
ततो हंमि प्रादुरभू ब्रह्मा लोके सनातनो ।
यस्य वाचं श्रुत्वा जहामि युष्माकं गृहं च केवलं ॥

एवमुक्ते पंचशिख रेणुराजा महागोविन्दं ब्राह्मणं गाथाये प्रत्यभाषति ॥

श्रद्दधाम वयं भवतो यथा गोविन्दो भाषति ।
अमनुष्यवचनं श्रुत्वा कथं वर्तेम अन्यथा ॥

अन्यापि वचना भवां महागोविन्दो कुशलानि येव आचिषति । या च भवतो गोविन्दस्य गतिर्भविष्यति सा अस्माकं अपि गतिर्भविष्यति ॥

यथा आकाशे विमलो शुद्धो वेडूलियो मणिः ।
एवं शुद्धो चरिष्यामि गोविन्दस्यानुशासने ॥

एवमुक्ते पंचशिख महागोविन्दो ब्राह्मणो रेणुराजानं गाथाभिरध्यभाषति ॥

सचेज्जहथ कामानि यत्र रक्ताः पृथग्जनाः ।
शस्तं भवेद्दृढीभवथ क्षान्तीबलसमाहिता ॥

1. M °govim̃dam̃ brâ°. — 2. M °kim̃ vâmartham̃° BM °shati ‖. — 3. BM yasya tvam̃ vacanam̃ çru° B °tvâ jânesi asmâ° M °tvâ asmâkam̃ grihake°. — 4. B °gâthâyâ° M °gâthâye adhya°. — 5. B sarve te yashṭu° M sarve te yam̃stukâmasya omavrasta° B °masya opavu° M °satâm̃ | B °sataḥ a°.

6. B °si kûsaci° M °çalîcamari – dâ |. — 7. B °ham̃ pi prâ° BM °r ahi brahmalo ° nâtanam̃ |. — 8. BM yasyâham̃ vacanam̃ çru° M °shmâka gri°. — 9. M evam̃m̃ u ° ṇuyatâ mahâgovim̃do brâ°. — 10. M °dhâmeti vayam̃° B °yam̃ bhagavato° M °to yabhâ govim̃do bhâ° B °vinda bhâ°.

12[1]. BM °vacanâm̃(M °cato) bha° M °govim̃da kuçalena evam̃ â° B °kuçalena ye ° ti yà°. — 12[2]. M yà ca bhagavato govim̃dasya gatir bhavishyati |. — 14. BM °kâça vi° B °ddho ruli° M °ddho ca rucire maṇi |. — 15. M °govim̃dasyâ°.

16. M °çikho mahâgovim̃do brâ ° reṇum̃ râ°. — 17. M °mâni yatra çaktâ pri° B °mâni putrâ çaktâḥ pri° BM °thakjanâḥ sa(M °ça)°. — 18. B sastam̃° M °ve dridhi° B °d dridhâ bhava° M °tha kshâm̃ticarasamâhitaḥ |.

एष मार्गो ब्रह्मपुरे एष मार्गः सनातनः ।
सद्धर्मविद्भिराख्यातो ब्रह्मलोकोपपत्तये ॥

अश्रोषीत्खलु पंचशिख ते षड्राजानो महागोविन्दो ब्राह्मणो अगारस्मानगारियं प्रव्रजिष्यतीति । ते क्षिप्रमेव संनिपतेन्सुः ॥ अथ खलु पंचशिख महागोविन्दो ब्राह्मणो येन ते षड्राजानस्तेनोपसंक्रमित्वा तां षड्राजां एतदवोचत् ॥ एन्तु भवन्तो एन्तु भवन्तो अन्यं दानि आचार्यं पर्येषथ यो वो स्वकस्वके[331b]षु राज्येषु अर्थार्थानि समनुशासिष्यति ॥ तत्कस्य हेतोः ॥ प्रव्रजिष्याम्यहं अगारस्मानगारियं ॥ श्रुतं हि मया महाब्रह्मणो संमुखादामगन्धं भाषमाणस्य । तं न शक्यं अगारमध्यावसता एकान्तसंलिखितमेकान्तानवद्यं परिशुद्धं पर्यवदातं ब्रह्मचर्यं चरितुं अल्पं जीवितव्यं गमनीयो संपरायो नास्ति जातस्यामरणं तस्माद् ज्ञातव्यं प्राप्तव्यं बोद्धव्यं कुशलं चरितव्यं ब्रह्मचर्यं न च किंचिल्लोके पापं कर्म कर्तव्यं ॥

अथ खलु पंचशिख तेषां षण्णां राज्ञामेतदभूषि ॥ ब्राह्मणा हि नामैते भोगलुब्धा भवन्ति । यं नूनं वयं महागोविन्दं ब्राह्मणं भोगेहि उपनिमन्त्रयेम ॥ अथ खलु पंचशिख ते षड्राजानो महागोविन्दं ब्राह्मणं भोगेहि उपनिमन्त्रेन्सुः ॥ संविद्यन्ति भो महागोविन्द इमेषु षट्सु राज्येषु प्रभूता मानुष्यका भोगा धार्मिका धर्मलब्धा धार्मिकेन बलेन अभिसाहृता अभिसमूढा ततो भवां महागोविन्दो धनमादियतु मा भवां महागोविन्द अगारस्मानगारियं प्रव्रजतु ॥ एवमुक्ते पंच-

1. B °hmapare e° M °hmayâne eva mârga samaṁtaraṁ B °saṁmatanaḥ sa°. — 2. BM °rmashaḍbhir âkhyâ(B °khyâto) bra° M °lokaprapattaye |. — 3. M °çikho te shaṭ râjâto mahâgoviṁdo brâ°. — 4[1]. M °saṁnimatetsu | B °tetsuḥ |. — 4[2]. M °paṁcaçîrsha mahâgoviṁdo brâ° B °brâhma ye° M °te shaṭ râjâno teno °ḍ râjânam eta° B °ḍ râjâ eta°. — 5. B etu bhavanto etu bhavanto a° M ettra bhavaṁto yetu bhadaṁtaḥ | dâpi âcâryya yaryepratha° BM °yo vâ svaka° M °keshu arthârthâni °çâsati |.

8[1]. M °yâ brâhmaṇaḥ saṁ° B °hâbrâhmaṇo saṁ° M °d âmagaṁdha bhâvamâ° BM °ṇasya taṁ°. — 8[2]. M taṁ na çûkshmâ agârasyâriyaṁ agâ° B °kyaṁ nagâ° M °dhyâvasittâ ekâṁtasaṁli° M °kâṁnânava° BM °tuṁ(M °tu) alpa jivitavyaṁ(B °vyaṁ |) gamanîyaṁ saṁ° M °ṇaṁ tasyâ jñâtavyaṁ prâ° B °smâd dhâtavyaṁ prâ ° ryaṁ ca na kiṁ° M °ryyaṁ ca | na | kiṁ ° paṁ karttavyaṁ ‖.

12[1]. M °râjñâṁ yatad a°. — 12[2]. M °hmaṇo hi ° bhavaṁti |. — 13[1]. M °naṁ ceyaṁ mahâgoviṁdâ brâhmaṇo bhogeha upanimaṁtrehi ‖ B °vindo brâhmaṇo bho°. — 13[2]. M atha khala paṁ° B °çisha te° M °goviṁdaṁ brâ ° nimaṁtretsuḥ | B °ntretsuḥ |. — 14. M saṁvidyaṁti bho mahâgovido i ° tâ | manu ° bdhâ dhârmakena ba° BM °bhisâhitâ abhisaṁmu(M °mû)ḍhâ° M °ḍhâ tataḥ bhavâṁ mahâgoviṁdo dhanam âdiya ° govido agârasyâcagâri°.

17. B °çisha ma° M °goviṁdo brâ ° ḍ râjñam eta° B °ḍ rârâ eta°.

शिख महागोविन्दो ब्राह्मणो षड्राजां एतदवोचत् ॥ संविद्यन्ति खलु भवन्तो अस्माकमपि प्रभूता मानुष्यका भोगा धार्मिका धर्मलब्धा धार्मिकेन बलेनाभिसाहृता अभिसमूढा तानपि चाहं अपहायागारस्यानगारियं प्रव्रजिष्यं ॥ तत्कस्य हेतोः ॥ श्रुतं हि महाब्रह्मणः संमुखादामगन्धं भाषमाणस्य । तं न शक्यं अगारमध्यावसता एकान्तसंलिखितं एकान्तानवद्यं परिशुद्धं पर्यवदातं ब्रह्मचर्यं चरितुं अल्पकं जीवितव्यं गमनीयं सांपरायं नास्ति जातस्यामरणं तस्माज्ज्ञातव्यं प्राप्तव्यं बोद्धव्यं कर्तव्यं कुशलं चरितव्यं ब्रह्मचर्यं न किंचिल्लोके पापं करणीयं ॥ अथ खलु पंचशिख तेषां षण्णां राज्ञामेतदभूषि ॥ ब्राह्मणा हि नाम एते स्त्रीलुब्धा भवन्ति । यं नूनं वयं महागोविन्दं ब्राह्मणं स्त्रीभिरुपनिमन्त्रयेम ॥ अथ खलु पंचशिख षड्राजानो महागोविन्दं ब्राह्मणं स्त्री[332a]भिरुपनिमन्त्रेन्सुः ॥ संविद्यन्ति भो महागोविन्द इमेषु षट्सु राज्येषु प्रभूता स्त्रियः प्रासादिका दर्शनीया अक्षुद्रावकाशा परमया शुभवर्णपुष्कलतया समन्वागता ततः भवां महागोविन्दो स्त्रियः आदियतु मा भवां गोविन्द अगारस्यानगारियं प्रव्रजतु ॥ एवमुक्ते पंचशिख महागोविन्दो ब्राह्मणो तां षट् राजां एतदवोचत् ॥ संविद्यन्ति खलु भवन्तो अस्माकमपि चत्वारिंशत्सदृशीयो भार्या प्रासादिका दर्शनीया अक्षुद्रावकाशा परमया शुभवर्णपुष्कलतया समन्वागता ता पि चाहमपहाय अगारस्यानगारियं प्रव्रजिष्यं ॥ तत्कस्य हेतोः ॥ श्रुतं हि ब्रह्मणो संमुखादामगन्धं भाषमाणस्य । तं न शक्यमगारमध्यावसता एकान्तसंलिखितं एकान्तानवद्यं परिशुद्धं पर्यवदातं ब्रह्मचर्यं चरितुं अल्पकं

1. B savidya° M sam̃vidyam̃ti khalu bhavam̃to a° B °bhogâ dhârmiko dharma° BM °balenâ(M °le)bhyâhṛitâ abhisam̃mû° M °hâya agârasyâ° B °hâyogârasyâ° M °jishyati | . — 4[1]. BM °hâbrâhmaṇaḥ(M °ṇo) sam̃° M °d ânagam̃dham̃ bhâ° BM °sya tam̃°. — 4[2]. M tan na° BM °dhyâvasatâ(B °to |) ekântam̃(M °kâm̃tam̃) sam̃likhitam̃ ekânto(M °kâm̃tâ)navadyam̃° M °sâm̃parâyo nâsti jâtamaraṇam̃ tasyâ jñâtavyam̃ prâ° B °smât ṭâtavyam̃ prâ° ryam̃ na hi na hi kim̃°.

7. M °çikho teshâm̃ sharṇṇâ dâtâm eta° B °râjñâm̃m eta° BM °shi brâ°. — 8. M °bhavam̃ti | . — 9[1]. M °nûnâham̃ vayam̃ mahâgovim̃dam̃ brâ° BM °bhir ûpa° M °niyam̃trayema | . — 9[2]. M °shaṭ râjâno mahâgovim̃dabrâ° B °ḍ rârâno mahârâjâno mahâgo° BM °bhir ûpa° M °nimam̃trayetsu B °ntretsuḥ ‖ . — 10. M sam̃vidyam̃ti mahâgovim̃da i° BM °bhûtâ prâ° M °çâ paramâye çu ° latâye sa° B °samatvâga° M °taḥ bhavân mahâgovim̃do striyo âdiyatu mâm̃ bhavâm̃ mahâgovida agânagâri° B °agârisyâ° vrajitu | .

13. M °râjñâm e° B °shaṭ râjñâm e°. — 14. M sam̃vidyam̃ti ° bhavam̃to a ° rim̃çan sa ° ramâye çu ° gatâ pi câham̃ apa° B °gatâ pi câha | agârisyâ° BM °jishyam̃ti ‖ .

17[1]. M çrutvâ tam̃ hi mayâ brâhmaṇam̃ sam̃° B °hi brâhmaṇam̃ sam̃° M °d âtmagam̃dham̃ bhâvamâ° B °gandhâm̃ bhâ° BM °ṇasya tam̃°. — 17[2]. M tam̃ na çyakyam̃ agâ ° dhyâvasitâm̃ ekâm̃tam̃ sam̃ | likhitam̃ ekâm̃tânavadyam̃° B °satâ ekântam̃ sam̃lishitam̃ | ekântâ ° jivitavyam̃ mamani° M °gamaniyam̃ nâsti ° brahmaryam̃° B °llokam̃ pâ°.

जीवितव्यं गमनीयः संपरायो नास्ति जातस्यामरणं तस्माज्ज्ञातव्यं प्राप्तव्यं बोधव्यं कर्तव्यं कुशलं चरितव्यं ब्रह्मचर्यं न च किंचिल्लोके पापं करणीयं ॥ एवमुक्ते पंचशिख ते षड्राजानो महागोविन्दं ब्राह्मणमेतदुवाचत् ॥ तेन हि महागोविन्द प्रतिपालेहि सप्त वर्षाणि यावद्वयं स्वकस्वकेहि राज्येहि पुत्रभ्रातृकां स्थापयित्वा आगमिष्याम या च भवतो महागोविन्दस्य गतिर्भविष्यति सा चास्माकमपि गतिर्भविष्यति ॥ एवमुक्ते पंचशिख महागोविन्दो ब्राह्मणस्तां षड्राजां एतदवोचत् ॥ अतिचिरं खल्वेतं भवतां यमिदं सप्त वर्षाणि प्रव्रजिष्याम्यहं अगारस्यानगारियं ॥ तत्कस्य हेतोः ॥ श्रुतं हि मया महाब्रह्मणः संमुखादामगन्धं माषमायस्य तं न शक्यं ..... पापं कर्म करणीयं ॥ एवमुक्ते पंचशिख ते षड्राजानो महागोविन्दं ब्राह्मणमेतदवोचत् ॥ तेन हि त्वं महागोविन्द प्रतिपालेहि षड्वर्षाणि । एवं पेयालं पंच वर्षाणि चत्वारि वर्षाणि त्रीणि वर्षाणि द्विवर्षाणि एकवर्षं । सप्तमासानि प्रतिपालेहि [33a$^b$] यावद्वयं महागोविन्द स्वकस्वकेहि राज्येहि पुत्रभ्रातृकां स्थापयित्वा आगमिष्यामः या च भवतो गोविन्दस्य गतिर्भविष्यति सा अस्माकं पि गतिर्भविष्यति ॥ एवमुक्ते पंचशिख महागोविन्दः ब्राह्मणस्तां षड्राजां एतदवोचत् ॥ अतिचिरं खल्वेतं भवन्तो यमिदं सप्त मासा प्रव्रजिष्याम्यहं अगारस्यानगारियं ॥ तत्कस्य हेतोः ॥ श्रुतं मया महाब्रह्मणः संमुखादामगन्धां माषमायस्य तं न शक्यं ..... पापं करणीयं ॥ एवमुक्ते पंचशिख ते षड्राजानो महागोविन्दं ब्राह्मणं एतदवोचत् ॥ तेन

2. B °çisha te° M °jâto mahâgovimdam brâ° B °hmaṇamm e° M °m etad avocat | . — 3. M °mahâgovimdâ pra° B °shyâmi yâ° M °shyâma | yâvad bhagavato mahâgovimdasya ° smâkam gati°. — 5. M evamm u ° govimdo brâhmaṇam strînad râjñâm e° B °ḍ râjñam eta°.

6. M khalvena bha ° pta ca va° BM °agârisyâ°. — 7$^2$. BM °hâbrâhmaṇaḥ(M °ṇa) sam° M °d âmmagandham ° sya tam çakyam° B °çakyam agâ° M °dhyâvasinâ ekâmtasam ° ekâmtaanavadyamparivadâ ° lpajîvitam ga° B °jîvitam ga° M °ṇam jñâtavyam prâptabo°. — 9$^1$. M °çikha shaḍ râ° B °govindo brâ° M °govimdo brâhmaṇamm e°. — 9$^2$. B °hi to mahâ° M °hi bho mahâbhovida pranipâ° B °nda prâtipâ°. — 10. M °peyâtam | pamca varshâṇi trîni varshâṇi catvâri varshâṇi hi varshâṇi e° B °catvâra va°.

11. M °yam mahâgovimda svaka ° bhrâtṛiṇâm sthâ ° shyâmiḥ yâvad bhagavato govimdasya° B °maḥ | yâ ca bhagavato go° BM °ti | sâ (M °ti so) câ°. — 13. M °vindo brâ° B °ḍ râjñâ e° M °ḍ râjânam eta°. — 14. M °lvedam bhavamto yam idam sa mâsâm pra° B °mâsâm pra ° ham | a ° riyam ta°. — 15$^1$. BM °hâbrâhmaṇaḥ(M °ṇa) sammu° M °d âmagamdhâ bhâ ° sya nam ta na ça ° dhyâvasita ekâmtasam° BM °khitam ekânta(M °kâmta)navadyam° M °jîvitam gamanîyam sâmpa° B °nîyaḥ | sâmpa ° ṇam | tasmâ° M °prâptam bo ° kimvillo°.

17.$^1$ M evamm u ° ḍ râjâto mahâgovimdam brâhmanam eta° B °ḍ rârâno mahâgovindo brâ°. — 17$^2$. M °govimda pra ° shan mâ yâvad va ° bhrâtṛimkâm°.

हि महागोविन्द् प्रतिपालेहि षरमासां यावद्वयं स्वकस्वकेहि राज्येहि पुत्रभ्रातृकां स्थापयित्वा आगमिष्यामः । एवं सर्वत्र कर्तव्यं पेयालं पंच मासां चत्वारि मासां त्रीणि मासां द्वे मासां एकमासं याव वयं स्वकस्वकेहि राज्येहि पुत्रभ्रातृकां स्थापयित्वा आगमिष्यामः या च भवतो महागोविन्दस्य गतिर्भविष्यति सा चास्माकं पि गतिर्भविष्यति ॥ एवमुक्ते पंचशिख महाब्राह्मणो महागोविन्दस्तां षड्राज्ञ एतद्वोचत् ॥ अतिचिरं खल्विदं भवन्तो यमिदं अर्धमासं प्रव्रजिष्यामि अहं अगारस्मानगारियं ॥ तत्कस्य हेतोः ॥ श्रुतं हि ..... पापं कर्म करणीयं ॥ एवमुक्ते पंचशिख ते षड्राजानो महागोविन्दं ब्राह्मणमेतद्वोचत् ॥ तेन हि भो महागोविंद् प्रतिपालेहि सप्त दिवसानि यावद्वयं स्वकस्वकेहि राज्येहि पुत्रभ्रातृकां स्थापयित्वा आगमिष्यामः या च भवतो गोविन्दस्य [333ª] गतिर्भविष्यति सा अस्माकमपि गतिर्भविष्यति ॥ एवमुक्ते पंचशिख महागोविन्दो ब्राह्मणस्तां षड्क्षत्रियानेतद्वोचत् ॥ अल्पकं खल्विदं भवन्तो यमिदं सप्त दिवसानि तेन हि भवन्तो सुखीभवथ यस्येदानिं कालं मन्यथ ॥

अथ खलु पंचशिख महागोविन्दो ब्राह्मणो येन तानि सप्त ब्राह्मणमहाशालसहस्राणि सप्त च स्नातकशतानि तेनोपसंक्रमित्वा एतद्वोचत् ॥ एन्तु भवन्तो एन्तु भवन्तः अन्यं दानि उपाध्यायं पर्येषथ यो वो मन्त्राणि वाचयिष्यति । प्रव्रजिष्याम्यहं अगारस्मानगारियं ॥ तत्कस्य हेतोः ॥ श्रुतं हि मया महाब्रह्मणो संमुखादामगन्धं भाषमाणस्य ..... पापं कर्म करणीयं ॥ एवमुक्ते पंचशिख

2. M °triṇi mâsâr dve mâso ekamâsâm̃ yâvad vayam̃° B °shyâmaḥ | yâ° M °shyâma | yâvad bhavam̃to mahâgovim̃da ° ti | so câsmâkam api° B °vishyati e°. — 5. M evam̃m u° B °çisha mahâbrâhma mahàgovindos tâm̃° M °çikha mahâbrâhmaṇas tâm̃ shaḍ râjñam̃ eta°.

6. M °khalvedam̃ bhavam̃to ya ° jishyâmyaham̃°. — 7². M °hi tayâ° BM °hâbrâhmaṇaḥ (M °ṇa) sam̃mu ° gam̃dhâ bhâ° M °çakyam̃ agâram adhyâ ° tâ ekâm̃tasam̃li ° ekontonavadyam̃ ° lpaji ° sâm̃parâyanam̃ tasmâ ° çalam̃ nvaritavyam̃ bra°. — 7³. M °govim̃dam̃ brâhmaṇam̃m e°. — 8. M °bho govim̃da pra° BM °lehi yâvad va(M °d dha)yam̃° M °maḥ yâvad bhagavato govim̃dasya gatir bhavishyati | so alokam api°.

11. M °govim̃do brâ°shaṭ satri° B°shaṭ kshetri°. — 12. M °lvidam̃ bhagavato ya° BM °sahâ di° M °hi bhavam̃to sukhîbhavagha yasya idânîm̃ kâ°. — 14. M °govim̃do brâhmaṇâ ye° B °ndo brâhmaṇe ye ° eta vocat ‖ . — 15. M etu bhavanto entu anyadâpi u° B entu bhavato entu bhavataḥ anya dâni u ° ryepetha° M °ryyepatha yâpa mam̃trâni vâ° B °ntrâni vâ°.

16. B °yam̃ ta°. — 17². BM °hâbrâhmaṇaḥ sa(B °ṇa sam̃)mu° M °d âmagam̃dhâ bhâ° B °gam̃dhâm̃ bhâ ° kyam̃m agâramadhye vasa° M °satâ ekam̃tasam̃likhitam̃ | ekâm̃tâm̃navadyam̃° BM °sâm̃parâyo nâsti jâtasyâ(M °sya)maraṇam̃(M °ṇam̃ |) tasmâ° M °bodhavyam̃ karttavyam̃ brahmacaryyam̃ caritavyam̃ na kim̃ ° pâpam̃ karaṇîyam̃ ‖ . — 18. BM °hâsâ(M °çâ)lasahasrâ sapta(M °srâṇi saptaka) snâ° M °govidam̃ brâ°.

तानि च सप्त ब्राह्मणमहासालसहस्राणि सप्त च स्नातकशतानि महागोविन्दं ब्राह्मणमेतद्वोचत् ॥ मा भवां गोविन्दो अगारस्मानगारियं प्रव्रजतु प्रव्रज्या हि नामैषा ते महागोविन्द अल्पार्थिका च अल्पभोगा च अल्पेशाख्या च अल्पानुशंसा च ब्राह्मण्यं पि नामैतं भो महागोविन्द महार्थियं च महाभोगं च महेशाख्यं च महानुशंसं च ॥ एवमुक्ते पंचशिख महागोविन्दो तानि च सप्त ब्राह्मणसहस्राणि सप्त च स्नातकशतानि एतद्वोचत् ॥ मा भवन्तो एवं वदित्थ प्रव्रज्या हि नामैषा भवन्तो महर्द्धिया च महालाभा च महेशाख्या च महानुशंसा च ब्राह्मण्यं पि नामैतं भवन्तो अल्पार्थियं च अल्पलाभं च अल्पेशाख्यं चाल्पानुशंसं च यं पि ताव भवन्तः किंचित्संजानन्ति सर्वन्तं अस्माकमेव निदानं ॥ एवमुक्ते पंचशिख सप्त ब्राह्मणसहस्राणि सप्त च स्नातकशतानि महागोविन्दं ब्राह्मणमेतद्वोचत् ॥ एवमेतं भो उपाध्याय एवमेतं प्रव्रज्या नामैषा महर्द्धिया च महालाभा च महेशाख्या च महानुशंसा च ब्रा[333b]ह्मण्यं पि नामैतं भो उपाध्याय अल्पार्थियं चाल्पलाभं चाल्पानुशंसं च यं पि तावद्वयं किंचिदाजानाम सर्वन्तं तवोपाध्याय निदानं या च भवतो उपाध्यायस्य गतिर्भविष्यति सा अस्माकमपि गतिर्भविष्यति ॥ एवमुक्ते पंचशिख महागोविन्दो ब्राह्मणो तानि च सप्त ब्राह्मणमहाशालसहस्राणि सप्त च स्नातकशतानि एतद्वोचत ॥ तेन हि भवन्तो सुखीभवथ यस्येदानिं कालं मन्यथ ॥

2. M °vâm̃ govim̃da agârasyâ° BM °jyâ hi nâmeshân(M °shâm̃) to mahâgovindo (M °vim̃do) alpârthikâ(M °ko) ca alpabhogâ ca alpasam̃khyâ ca alpânu(M °lpâtusam̃)çâ ca brâhmam̃ṇyam̃(M °hmaṇam̃) hi nâmai(M °nâme)tam̃° M °bho mahâ bho govim̃da maharddhikam̃ ca mahâçâlam̃° B °vindam̃ maharddhiyam̃ ca mahâçâram̃ ca mahe° M °nuçâsam̃ ca ‖ B °çam̃sâ ca ‖. — 5. M evam̃m u° çisha mahâgovim̃do tâ° snânaka°.

6. M mâ bhavam̃to evam̃ carishyatha pra° B °evam̃ carittha° jyâ hi nâmeshâ° M °jyâ hi nâmeshâm̃ bhavam̃to maharddhiko yâvat mahâlâbham̃ ca mahânusam̃çâ ca mahâbrâhmaṇam̃ hi nâ° B °ṇyam̃ hi nâ° M °bhavam̃to alpârthikâm̃ ca alpalâbham̃ ca alpasam̃khyâ alpanusam̃çâ ca(*ou* va?) yam̃ pi° B °bham̃ ca alpasam̃khyâ câ° M °bhavam̃to kim̃° jânam̃ti sam̃rva° kam evam̃ ni°. — 9. M °ṇi sapta ca stâtakaça° govim̃da brâ°. — 10. B evam etam̃ bho upadhyâye evam etam̃ bho pra° M °evam̃m etam̃ bho prajyâ mesho maharddhikâ ca mahâlâbhâ° B °shâ upâdhyâya maharddhi° M °khyâ ca mahânusam̃çâ ca brâ° B °hmaṇam̃ hi nâmai° M °ṇyam̃ dvi nâmetam̃ upâdhyâyam̃ nidânam̃ yâvad bhagavato bho upâdhyâya alpârthikam̃ câlpalâ° lpânusam̃çâ ca ya pi tâva vayam̃ kim̃cid âjânima sarvâvam̃tam̃ bham̃vatam̃ evam̃ tam̃ evopâdhyâya ni° B °rvan tam̃ evopâdhyâ° M °dânam̃ | yâvacca(?) bhavam̃to upâdhyâya nidânam̃ yâvad bhavam̃to upâdhyâyasya gatir bhavishya | sâ câsmâkam̃ pitâ gatir bha° B °dânam̃ yâva bhavato upâdhyâyasya gatir bhavishyati | sâ asmâkam̃m api°.

14. M °govim̃do brâhmaṇo° hmasâmahâ°.

16. M °bhavam̃to su° tha | yasya idânî kâ° B °dânî kâla manyathâ ‖.

अथ खलु पंचशिख महागोविन्दो ब्राह्मणो येन ता चत्वारिंशत्सदृशी भार्या तेनोपसंक्रमित्वा चत्वारिंशत्सदृशीयो भार्यायो एतदवोचत् ॥ एन्तु भोतीयो या इच्छन्ति स्वकस्वकानि ज्ञातिकुलानि गच्छन्तु या इच्छन्ति अन्यं भर्तारं पर्येषन्तु या इच्छन्ति ता इमस्मिन् एव ब्राह्मणकुले वसन्तु ॥ संविद्यन्ति इमस्मिं ब्राह्मणकुले प्रभूता मानुष्यका भोगा धार्मिका धर्मलब्धा धार्मिकेन बलेनाभिसाहृता अभिसमूढा । प्रव्रजिष्याम्यहं अगारस्मानगारियं ॥ तत्कस्य हेतोः ॥ श्रुतं हि मया महाब्रह्मणः संमुखादामगन्धं भाषमाणस्य तं न शक्यं अगारमध्यावसता एकान्तसंलिखितं एकान्तानवद्यं परिशुद्धं पर्यवदातं ब्रह्मचर्यं चरितुं ॥ तत्कस्य हेतोः ॥ अल्पकं जीवितं गमनीयं सांपरायं नास्ति जातस्यामरणं तस्मात् ज्ञातव्यं प्राप्तव्यं बोद्धव्यं कर्तव्यं कुशलं चरितव्यं ब्रह्मचर्यं न किंचिल्लोके पापं कर्म करणीयं ॥ एवमुक्ते पंचशिख ताश्चत्वारिंशत्सदृशीयो भार्यायो महागोविन्दं ब्राह्मणमेतदवोचन् ॥ आर्यो खल्वस्माकं गोविन्दो भर्ता भर्ताकाले सखा सखीकाले या च आर्यस्य महागोविन्दस्य गतिर्भविष्यति सा अस्माकमपि गतिर्भविष्यति ॥ एवमुक्ते पंचशिख महागोविन्दो ब्राह्मणो तां चत्वारिंशत्सदृशीयो भार्यायो एतदवोचत् ॥ तेन हि भोतीयो सुखीभवथ यस्य दानिं कालं मन्यथ ॥

अथ खलु पंचशिख महागोविन्दो ब्राह्मणो तदहो सप्त[334ª]मे दिवसे केशश्मश्रूण्यवतारयित्वा काषायाणि वस्त्राणि आच्छादयित्वा अगारस्मानगारियं प्रव्रजितः ॥ तथा प्रव्रजितं पुनः समानं सप्त च राजानो अनुप्रव्रजेन्सुः सप्त च

1. M °govim̃do brâ° BM °yena sâ(M °so) catvârim̃çat(M °çatân) sadriçî bhâryâ te° M °kramitvâ rim̃çat bhâryân eta°. — 2. B ento bhotiyo yâvad itsati | svaka° M entu bho bhrâtriyo yâvadi svaka° BM °lâni icchantu(M °cchamtu) yo icchanti(M °cchati) anyam̃° B °ram̃ payesha° M °ram̃ preshayam̃tu yâ icchamti tâ imasmim̃ evam̃ brâ° B °smin evam̃ brâ° M °le vasam̃tu B °santu sam̃°. — 4. M sam̃vidyam̃ti | i° bhûta manu° kena cale° BM °nâbhisâhitâ abhisam̃mûḍhâ°.

6³. BM °hâbrâhmaṇaḥ° B °gandhâm̃ bhâ° M °magam̃dhâ bhâshamâṇa tan na ça° satâm̃ ekâm̃tasam̃° ekâm̃nânavadyam̃° BM °ddham̃ payavadâ°. — 8. M °hetor alpa°. — 9. B °tam̃ ramaṇîyam̃ sâm̃° BM °smât | jñâtavyam̃ prâ° M °ptavyam̃ prâptavyam̃ bo° hmacaryam̃ ca kim̃°. — 10. M °kha tâm̃ catvâ° çîyam̃ bhâryâm̃ ye mahâgovim̃da brâ°.

12. M âryya khalvasmâkam̃ mahâgovim̃do devo kâle bharttâ bharte kâlam̃ sakhâ sakhakâle yâvad ârya° B °ndo kâle bharttâ bharttakâle sakhâ | sakhî° M °govim̃dasya° B °shyati | sâ° M °sâ câsmâkam̃ pi°. — 13. M evam̃m u° govim̃do brâ° rim̃ça sadri° ryâye(?) e°. — 14. B °hi yo bhoti° tha | ya° M °sya idânîm̃ kâ° B °kâla manyathâ ‖.

16. M °govim̃do brâ° B °çmaçruṇya° M °çmaçrunyavatâ° shâyânyâcchâ° agânagâriyam̃° B °agârisyâ° M °jito. — 18. M °naḥ samâno sapta râjâ° BM °no anupravrajetsuḥ(M °tsu |) sapta ca brâ° çatâni anupravrajetsuḥ tâ (M °tsuḥ |) catvâ° ryâyo(M °ryâye) anupravrajetsuḥ | kaḥ (B °tsuḥ kaḥ) pu° M °janandye B °janatâye sâ a°.

ब्राह्मणमहाशालसहस्राणि सप्त च स्नातकशतानि अनुप्रव्रजेन्सुः ता चत्वारिंशत्सहस्रीयो भार्यायो अनुप्रव्रजेन्सुः कः पुनर्वादो अन्याये वेशालिकाये जनताये ॥ सा अभूषि परिषा अनेकशता अनेकसहस्रा ॥

महागोविन्दो खलु पुनः पंचशिख ब्राह्मणो बाहिरको कामेषु वीतरागो सो ब्रह्मलोकसहव्रताये श्रावकाणां धर्मं देशयति ॥ ये खलु पुनः पंचशिख महागोविन्दस्य ब्राह्मणस्य श्रावकाः सर्वेण सर्वं धर्मं देशितमाजानन्ति ते ब्रह्मलोकसहव्रताये उपसंपद्यन्ति ॥ ये खलु पुनः पंचशिख महागोविन्दस्य ब्राह्मणस्य श्रावका न सर्वेण सर्वं धर्मं देशितमाजानन्ति ते कामावचरेषु देवेषूपपद्यन्ति ॥ अप्येकत्या चतुर्महाराजकायिकानां सहव्रताये उपपद्यन्ति अप्येकत्या त्रयस्त्रिंशानां देवानां अप्येकत्या यामानां अप्येकत्या तुषितानां अप्येकत्या निर्माणरतीनां अप्येकत्या परनिर्मितवशवर्तीनां देवानां सहव्रताये उपसंपद्यन्ति ॥ ये खलु पुनः पंचशिख स्त्रियो वा पुरुषा वा महागोविन्दे ब्राह्मणे प्रदुष्टचित्तानि श्रावकेषु चास्य ते कायस्य भेदात्परं मरणादपायदुर्गतिविनिपातं नरकेषूपपद्यन्ति ॥ ये खलु पुनः पंचशिख स्त्रियो वा पुरुषा वा महागोविन्दे ब्राह्मणे . . . . चित्तानि श्रावकेहि चास्य ते कायस्य भेदात्परं मरणात् सुगतिं स्वर्गं कायं देवेषूपपद्यन्ति ॥ यं खलु पुनः पंचशिख महागोविन्दो ब्राह्मणो ग्रामं वा निगमं वा उपनिश्राय विहरति तत्रापि भवति राजा वा राष्ट्रस्य देवो वा गृहपतिकाये ब्रह्मा वा ब्राह्मणानां ॥ यत्रापि निष्क्रमार्गं प्रतिपद्यति तत्रापि भवति राजा वा राष्ट्रस्य देवो वा गृहपतिकाये ब्रह्मा वा ब्राह्मणानां ॥ अपि हि जितं ब्राह्मणगृहपतिका निगमजानपदा उत्सखिता इमं उदानमुदानयन्ति ॥ नमस्तस्य आर्यस्य महागोविन्दस्य नमो आर्यस्य सप्तपुरोहितस्य ॥

3. M sya abhûshi | pa° B °risho anekaça° M °çatâ anekaha° BM °srâṇi ma°. — 4. M °hâgovido kha° B °ndo ‖ kha° M °go sa bra° B °loke sa° BM °çrâvakâye dha°. — 5. M °puna pam̃ ° govim̃dasya brâ ° çrâvakâ sarve ° çitâ jânam̃ti te° B °çitâm âjâ° M °sam̃padyam̃ti | .

7. M °govim̃dasya çrâvaka sarve° B °çrâvakâm̃ sarve° M °jânam̃ti | te° B °jânanti | te° M °shûpapadyam̃te | . — 8. M °yikânâm̃ sahavratâya upapadyam̃ti | apyekanyâ tra° BM °çânâm̃ devânâm̃ apyekatyâm̃(M °kanyâ) yâmânâm̃ tushitânâm̃ apyekatyâm̃ nirmâṇarati(M °kanyâ nimâtarani)nâm̃ apyekatyâ(B °tyâm̃) para° M °sam̃padyam̃ti | .

11. M °çikha strim̃yo° BM °purusho vâ mahâ° M °govim̃de brâ° B °nde karusha° M °ṇe karusha ° câsyâm̃te kâ° B °câsyânte kâ° M °keshupapadyam̃ti | . — 13. B °çikho stri° M °çikha mahâ° (l. 16) B °purusho vâ mahâ ° ṇe cittâ°. — 15. M °govim̃do brâ ° upaviçrâ° BM °rati(M °ti |) tatra ca bhavati râjâ(M °jo) vâ râshṭra° M °patir brâhmaṇâ vâ brâhmaṇena vâ api hi° (l. 19) B °kâya brâhmâ vâ brâhmaṇena | .

17. B °dyati | tatrâpi ° patiko vâ bra ° nâm̃ vâ api°. — 19. B °tam̃ | brâ ° uskhali° M °imam udânam udânayam̃ti ‖ . — 20. M °govim̃dasya tato sapta° BM °hitasya ‖

इदमवोचद्भगवान् राजगृहे विहरन्तो गृध्रकूटे पर्वते इमस्मिंश्च पुनर्व्याकरणे भाष्यमाणे पंचशिखस्य गन्धर्वपुत्रस्य विरजं विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धं आत्तमनः पंचशिखो गन्धर्वपुत्रो भगवतो भाषितमभ्यनन्दे ॥

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवो युष्माकमेवमस्यादन्यः स तदा महागोविन्द नाम ब्राह्मणो अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स भिक्षवः तेन कालेन तेन समयेन महागोविन्दो नाम ब्राह्मणो अभूषि । तदापि मया प्रव्रजितेन महाजनकायो अनुप्रव्रजितो । एतरहिं पि मया प्रव्रजितेन महाजनकायो अनुप्रव्रजितो ॥

समाप्तं गोविन्दीयं भगवतो पूर्वेनिवाससंप्रयुक्तं सूत्रं ॥

भगवां सम्यक्संबुद्धो यदर्थं समुदागतस्तमर्थमभिसंभावयित्वा श्रावस्त्यां विहरति जेतवने अनाथपिण्डस्यारामे शास्ता देवानां च मनुष्याणां च सत्कृतो गुरुकृतो मानितो पूजितो अपचितो विस्तरेण निदानं कृत्वा यावच्चेतोवशिप्राप्ता च पुनर्बुद्धा भगवन्तो येहि येहि विहारेहि आकांक्षन्ति विहर्तुं तेहि तेहि विहारेहि

(M °sya) idam avocad bhagavân idam̃ vaditvâ [334ᵇ] sugato athâparam̃(M °pare) etad uvâca ‖ çâstâ(M °stâ ‖ ‖) bhûtapûrvam̃ çrutam̃ bho brahmadatte(M °tto) ca veçyâ abhû | (M °bhût |) atha bharatarunadhritarâshtro(M °râjño) ityete ashta bhrâtaro ‖.

1. BM °harato gri° M °ddhakute° imasmim̃ ca punar vyâ° M °sya gam̃dha° BM °virajo vigatamalam̃ dharme(M °dhame)shu° M °kshuviçu° âtamano pam̃ ° kho gam̃dharva° bhyanam̃dann iti ‖. — 4². M °d anya sa tena kâlena tena samayena mahâgovim̃do nâma mahâbrâ° B °shi | na°. — 5¹. B °lvevam̃ dra°. — 5². M °hetor aham̃°. — 5³. M °yena mahâbrâhmana a°.

7. M etarhi pi mayâ pravram̃jam̃tenâ ma° vrajate ‖. — 9. M iti çrîmahâvastuavadâne govim̃do bha° B °ndiye bha° M °pûrvani° tram̃ samâptam̃ ‖. — 10. M atha khalu bhagavân samya°. B °ddho yadartha samupâgatas ta° M °ddho yadartha samudâgatasya tam artham̃ abhi° yitvâ irâvastyâm̃° pindâdasyâ° B °çiprâpta ca punar bu° M °çitâprâpto ca puna buddhâ bhâ bhagavam̃to yehi yehi vihareti ujja° B °kâm̃kshati vihaitum̃° BM °jju(M °jja)cittâ mriducittâ(M °ducitâ) karmaniyarihâhita(M °hina)cittâ maitra-(M °tracittâ maitra)cittâ dânta(M °dâm̃ta)cittâ çânta(M °çâm̃ta)cittâ muktacittâ çuddhacittâ vimalacittâ pânda(M °pâm̃ndu)cittâ° vinîva(M °nîca)ranacittâ ri° sthitacittâ(M °sthiracitâ) supratishthi(B °tisthi)tacittâ asam̃gacittâ asa(M °ça)ktacittâ adushtacicittâ amû° prithivîsamacittâ âpa(B °âyo)samacittâ tejo° B °vâyusamacittâ ‖ kâci° M °spaçopamacittâ indrakîlopamacittâ suvimuktaprajñâ° ptapârishâ âvetîprâkârâniragaû ârya° B °ptapânikhâ âvetîprâkâ nirargada ârya° M °dharmâ dhvaja 'gramaçottamâ brâhmanotamâ ksha° BM °triyasnâta(M °snâna)kâ ve° M °tyavâdino martha° paritavâdino tathâvâdino avitatha° smâ tathâgatah avitathavâdino ti vâcati | B °t tathâgato ananyathâvâdino vuccati ‖.

विहरन्ति उज्जुचित्ता मृदुचित्ता कर्मणीयसमाहितचित्ता मैत्रचित्ता दान्तचित्ता शान्तचित्ता मुक्तचित्ता शुद्धचित्ता विमलचित्ता पाण्डुचित्ता प्रभास्वरचित्ता विनीवरणचित्ता ऋजुचित्ता स्थितचित्ता सुप्रतिष्ठितचित्ता असंगचित्ता असक्त- चित्ता अदुष्टचित्ता अमूढचित्ता पृथिवीसमचित्ता आपोसमचित्ता तेजोसमचित्ता वायुसमचित्ता काचिलिंदिकमृदुस्पर्शोपमचित्ता इन्द्रकीलोपमचित्ता सुविमुक्त- चित्ता सुविमुक्तप्रज्ञा उत्क्षिप्तपरिखा आवेठितप्राकारा निरर्गडा आर्यधर्मध्वजाश्र- मणोत्तमा ब्राह्मणोत्तमा क्षत्रिया स्नातका वेदपारगा सत्यवादिनो अर्थवादिनो न्यायवादिनो अविपरी[335ᵃ]तवादिनो अवितथवादिनो अनन्यथावादिनो (तस्मात्तथागतो अनन्यथावादीति वुच्चति) ॥

तत्र खलु भगवानायुष्मन्तमानन्दमामन्त्रयति ॥ एकपिण्डपातेणाहं आनन्द त्रैमासं निषीदिष्यं पुरिमकानां तथागतानां अर्हतां सम्यक्संबुद्धानां विहारेहि विहरिष्यं मा मे कथंचिदुपसंक्रमितव्यं अन्येन ॥ साधु भगवन्निति आयुष्माना- नन्दो भगवतः प्रत्यश्रोषीत् ॥ अथ खलु भगवांस्त्रैमासं निषीदेत् एकपिण्डपातेन पुरिमकानान्तथागतानामर्हतां सम्यक्संबुद्धानां विहारेहि विहरन्तो ॥

अथ खलु भगवां त्रैमासस्यात्ययेन सायाह्नसमये प्रतिसंलयना व्युत्थाय विहा- रातो निर्गम्य पर्यंके निषीदेत् ॥ अद्राक्षीत्खलु आयुष्मानानन्दो कुटीप्रच्छद- नायां पर्यंके निषण्णं भगवन्तं दृष्ट्वा च पुनः येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषीदि । एकान्ते निषण्णो भगवन्तमेतदवोचत् ॥ उपशान्तप्रणीतानि भगवत इन्द्रियाणि परिशुद्धो छविवर्णो शुभजातो मुखवर्णो । अथ खलु भगवां प्रणीतेहि विहारेहि विहरन्तो ॥ एवमुक्ते भगवानानन्दमेतद- वोचत् ॥ एवमेतं आनन्द आकांक्षमाणो आनन्द तथागतः एकपिण्डपातेण कल्पं

10[1]. M yan khalu ° yushmamṁtaṁ ânaṁdam âmaṁtrayati | . — 10[2]. M ekapiḍapâ° BM °trenâhaṁ° M °ânaṁda trai° B °nishidishyaṁ° M °shyaṁ pûri ° thâgatâ 'nâṁ 'rhatâṁ° B °rhatâ saṁmya° M °vyaṁ atyayâ B °vyaṁ anyeyâ sâ°.

12. M °dhu bhagavân i | â° B °shmânando° M °n ânaṁdo bhagavato pra°. — 13. B °shîdet | e° M °shîde e° B °trena pu ° rhatâ saṁmya° M °hâre viharaṁto | . — 15. M °bhagavân traimâ° B °sâyâṁhna° M °samaya pra ° yanâd vyu ° mya paryyaṅke ni°.

16. B °yushman â° M °yushmâm ânando kuṭṭipracchannâyâṁ paryyaṅke niyaṇo bhagavaṁtaṁ dṛi° B °kuṭipracchanâyâṁ paryaṅke nisha° M °punar yena bhagavan teno ° ekâṁte ni° BM °di e°. — 18. M ekâṁtanishaṇo bhagavaṁtam e° B °sharṇno bha°. — 19. M upaçâṁtapra ° gavato i° B °cchavivarṇno bhâjanatamu° M °cchavivarṇno bhâṁjanasuvarṇnem̃ (?) | . — 20[1]. M °gavân praṇî ° haraṁto | . — 20[2]. M °vân ânaṁdam e°.

21. M °m etam ânaṁda âkâṁ° B °taṁ âna âkâṁ° M °gato ekapi° B °taḥ | ekapi° M °shîditvâ kalpâ°.

आरोग्यं वार्यं वदेसि [356a] जंबुद्वीपस्मि ज्ञातयो ।
इहमेव रमिष्यामो नास्ति नो गमनं तहिं ॥

सार्थवाह आह ॥

तं खु न स्मृतिर्वो अस्ति विपर्यस्ताहो मारिष ।
राक्षसीनां तथ भक्षा नचिरेण भविष्यथ ॥
त्वचं च वसां च मान्सं च पीत्वान रुधिरं च वो ।
तुष्टा राक्षसी भेष्यन्ति आहारेण समर्पिताः ।
यं मे न कुर्वथ वचनं पश्चात्तापी भविष्यथ ॥
ततो च वाणिजका सर्वा राक्षसीयो भयानिका ।
आयसे नगरे घोरे प्रतितिष्ठे तदनन्तरं ॥
ता राक्षसीयो समागत्वा मतिं कुर्वन्सु तावता ।
अयं वाणिजको एको आगत्वान पुनर्पुनः ।
स्वस्तिना तरत पारं न तं शक्नति खादितुं ॥
ततो च राक्षसी एका पण्डिता अर्थचिन्तिका ।
बहवो वाणिजा ताय उपलोभेत्वान खादिता ॥
सा च तां अवच सर्वां मांसभक्षा सुदारुणां ।
अहं तं लोभयिष्यामि मम भक्षो भविष्यति ॥
वाणिजको सागरं तीर्णो सापि उत्तीर्ण राक्षसी ।
पृष्ठतो अनुबन्धेति अनुबद्धा पदंपदं ॥
अयं ते दहरो पुत्रो तव शोकेन मरिष्यति ।
गृह्ण त्वं किस्य उज्झ्यति ओरसो आत्मनो तव ॥

1. B °gyaṁ cârya vede° M °gyaṁ câryya vade ° dvîpesmiṁ jñâ° B °dvipesmi°. — 2. M ihaiva ca ra° BM °shyâmi nâsti vo ga°. — 4. B °khu ra smaratha nâsti° M °khu na svaratha nâsti cipa ° ho mâstrisha(?) râ° B °risha râ°. — 5. BM °nâṁ tava bha° B °kshâya ci° M °shyati || .

6. M tvacaṁ carmaṁ ca mânsaṁ ca rudhiraṁ ca pitvâ vo B °caṁ ca vartmaṁ ca mà° vo tu°. — 7. M °siyo bhavishyati || â ° rpitâ || . — 8. M °kurvetha va° B °paçyâttâ° M °ttâpi bha°. — 9. B °vâṇikâ sa ° yânkâ | . — 10. M °ghora patishṭhe tadanaṁtaraṁ | .

11. BM tâṁ râ ° mati ku° M °kurvetsu tâvatâ° B °nsu tâgatâ | . — 12. M °tvâ ca punaḥ punaḥ | B °rpunaḥ sva°. — 13. BM °çaknoti°. — 14. M °eko paṁṇḍitâ arthaciṁtikâ || B °ntitâ | . — 15. M °jâ tâye upalobhaṁna khâ°.

16. BM sâ ca taṁ ava° B °ca sarvâsâṁ mâṁ° M °ruṇâ || . — 17. BM ahaṁ na lo° M °mi mama kshâ bhavishyatha || . — 18. M vâṇijo sâga° B °rṇṇo so pi u°. — 19. M °nubaṁdheti anubaṁdhâ padaṁ° B °ti anubandhâ padaṁ°. — 20. M °çoke ma°.

21. B gṛihetva ki° M gṛihna tva kisya u – si âsare âtmanaṁ ta° B °ujhyosi o°.

धर्मलब्धो आह ॥

अप्पेहि यस्य से भार्या अपुत्रे पुत्रं भाषसि ।
मानुषा न तुवं रक्षी न मां शक्यसि खादितुं ॥
सा च ग्रामेषु निगमेषु राष्ट्रे जनपदेषु च ।
जनजनस्य आख्याति अयं उज्झति मे पति ॥
महाजनो समागम्य स्त्रियश्च पुरुषा पि च ।
पुरुषं परिभाषन्ति कस्मादुज्झेसि भार्यरां ॥
क्षत्रिया ब्राह्मणा वैश्या शूद्रा चात्र समागता ।
पुरुषं परिभाषन्ति कस्य उज्झेसि भार्यरां ॥

धर्मलब्धो आह ॥

न मे एषा मारिष भार्या राक्षस्येषा भयानिका ।
मनुष्यखादिका रौद्रा एवं जानेथ नक्तवे ॥

यत्र कालं महाजनेन उपलभ्यमानो धर्मलब्धो न इच्छति नैव मे एष पुत्रो नैव मे एषा भार्या राक्षसी एषा निशाचरा राक्षसी तं जनकायं संज्ञापयति । एदृशा एते अर्थलब्धा पुरुषा तत्रैव सारज्यन्ति तत्रैव विरज्यन्ति । यत्र कालं अर्थिका भवन्ति स्त्रीभिः सततं प्रियशतानि मन्त्रेन्ति यत्र कालं विरक्ता भवन्ति ततः राक्षसीयो च क्रियाम पिशाचिनीयो च दुःकुलीना च क्रियाम अप्रियशतेन आक्रुष्याम: ॥ सा दानि स्त्री धर्मलब्धेन अनिच्छियति ॥ अमात्येहि राज्ञो ब्रह्मद-

2. B ayaṁ hi kasya se° BM °tre putra bhâ°. — 3. B mânusho na tuvaṁ pakshî mama çakshyati khâ° M mânusho na bhavaṁ pakshî mama çakyasi° — 4. M °râshṭa jana°. — 5. BM jane janasya° M °ayama-ti me patiḥ || B °yaṁ ṛijuti me pati | .

6. BM °purusho pi°. — 7. B purusha pa° M °bhâshaṁti ka° BM °d ujhesi° B °bhâryân | M °bhâryâyâṁ || . — 8. B kshetri° M °gatâḥ || . — 9. M °bhâshaṁti ka° B °ujhyasi bhâryaraṁ || M °bhâryyaraṁ || .

11. M na maishâ° BM °kshasyaishâṁ bha° M °yânakâḥ | . — 12. M mânushâ khâditâ raudrâṁ e° B manushya khâditâ rau° M °netha hetave || . — 13. M °rmalabdhena icchati || naivaṁ me esha putro naivaṁ me eshâ bhâ° B °icchasi | naiva me esha° M °shâ piçâca râksha° B °çacarâ | râksha°. — 14. M °driço ete° shâ tatraivaṁ sâ rakshati || yatra° B °sârakshyanti tatraiva virakshyanti | . — 15. BM °rthikâ bhavati strî° M °bhiḥ satato priyaçatâni maṁtreti yatra° B °ntreti | yatra° M °ktâ bhavaṁti || tato râkshasiyo ca kriyâna piçâcanîyo ce duḥkulino ca kri° B °nti | tataḥ râkshasiyâ ca kriyâma pi° BM °priyaçate ca â°.

18[1]. M °dâniṁ strî° B °bdhena anicchayanti | M °anicchcyati. — 18[2]. B °taṁ ma°.

त्तस्य निवेदितं ॥ [356b] महाराज धर्मलब्धेन महासार्थवाहेन समुद्रपत्तनातो स्त्री आनीता प्रासादिका दर्शनीया परमेण रूपेण समन्वागता समानरूपा न ज्ञायति ॥ धर्मलब्धो केनचि कारणेन नैव भार्यां इच्छति नैव तं पुत्रं ॥ राज्ञा अमात्या आणत्ता ॥ शब्दापयथ धर्मलब्धं सार्थवाहं ॥ सो दानि अमात्यै राज्ञो सकाशं शब्दापितो शब्दापिता अपि सा स्त्री ॥ राज्ञो ब्रह्मदत्तस्य तां स्त्रियं पश्यित्वा अभिरूपां दर्शनीयां उत्तमेन रूपेण समन्वागतां राज्ञो तत्र स्त्रियं अत्यर्थं अनुरागो उत्पन्नो ॥ सो दानि तं सार्थवाहं आह ॥ यदि तव एताये स्त्रिये भार्या मम तां देहि ॥ धर्मलब्धो आह ॥ मा महाराज प्रमादं करोहि न एषा मम भार्या न ममैष पुत्रो । एषा समुद्रातो उपलोभेन्ती मम पृष्ठेन पृष्ठिमं समनुबद्धा प्रलोभनार्थं । न एषा स्त्री राक्षसी एषा मा महाराज अत्र मनं करोहि ॥ सो दानि राजा तत्र स्त्रियं अनुरक्तो तारुण्येन रूपेण च धर्मलब्धस्य न शृणोति । यथोक्तं भगवता ॥

रक्तो ह्यर्थं न जानाति रक्तो धर्मं न पश्यति ।
अन्धतमस्तदा भवति यं रागो सहते नरः ॥

तेन राक्षसी अन्तःपुरं प्रवेशिता ॥ ताये सार्धं राजा ब्रह्मदत्तो क्रीडित्वा रमित्वा प्रविचारयित्वा शयितो ॥ ताये राक्षसीये सर्वस्य राजकुलस्य ओस्वापनं कृतं । सपुत्रिकाये राजा खादितो ॥ राजानं भक्षयित्वा सो पुत्रः तत्र राक्षसीनां मूलं प्रेषितो । आगच्छथ शीघ्रं इमं राजकुलं भक्षयितव्यं ॥ आमुहूर्तस्य सो तं राक्षसीगणं गृह्यागतो ॥ ताहि ताये रात्रिये सर्वं तं राजकुलं साभ्यन्तरबाहिरं

1. M °diko da ° paramarupeṇa° BM °gatâ sagarbharûpâ°. — 3[1]. BM °labdhena kena kâra° M °ṇena mahâsârthavâhena naivaṁ bhâryâm icchati naivaṁ taṁ°. — 3[2]. M °tyâ âgatya ça° B °ttâ ça°. — 4[1]. M °bdhaṁ câhaṁ ||. — 4[2]. M so dâniṁ amâtyo râ° B °çaṁ çabdâpito apito | api sâ° M °çaṁ çabdâpitaḥ api sâ° BM °strî râ°. — 5. BM °sya taṁ striyaṁ pa° B °tâṁ râjñâ tatra striyo atya° M °jño na striyo atya ° tpannaṁ ||.

7[2]. BM °di tâvad etâ ° rtho(B °rtho |) mama taṁ dehi ||. — 8[2]. B °prasâdaṁ° M °esho mama bhâ° B °ryâ tava vâne na eshâ mama bhâryâ na mamai°. — 9. B eshâṁ samu° M °palobheṁni mama prishṭhe° B °ntî mama prishṭena prishṭemaṁ sa°. — 10. B °sî e mà mahâ° M °sî yushâ mâ°.

11. M °dâniṁ râ ° striyam anuyukto°. — 12. BM °vatâ ra°. — 13. M dakto hya° B raktâ hya ° jânâti rakto dha°. — 14. BM °ndhastamas ta° BM °bhavati(M °vani) yo râgaṁ sva sa° M °naro te°. — 15[1]. M °si aṁtaḥpu°. — 15[2]. M °hmadato kri°.

16. BM °osâpanaṁ° B °taṁ sa°. — 17[1]. BM °to râ°. — 17[2]. M °putra ta ° mûle pre° BM °to â°. — 18[2]. M °grihvâga° BM °to te°. — 19. BM tehi tâ° M °sâbhyaṁtarebâhira sastri° B °ntaraṁ bâhiraṁ° M °sahasvi sâçva jñâye râ ° ditaṁ || asthikaraṁkâni avaçeshitâni pra° B °kalaṁkâ vaçeshikri°.

सस्त्रीपुरुषं सकुमारीकं सहस्ति साश्वं ताये रात्रिये सर्वं खादितं हस्तिकरंकाणि अवशेषीकृतानि ॥

प्रभाताये रात्रीये अमात्या राजकुलं गता पश्यन्ति द्वाराणि बद्धकानि । पुरोहिता पि आगता भटबलाग्रा आगता श्रेष्ठिनैगमा धर्मलब्धसार्थवाहप्रमुखो वाणिजग्रामो आगतो सर्वे सुखरात्रीपृच्छिका यथा अन्यदापि । पश्यन्ति तानि राजकुलद्वाराणि बद्धकानि ॥ ते अमात्या परस्परं पृच्छन्ति ॥ किमेवाद्य राजकुलद्वारा न मुंचन्ति । अन्यकालं राजकुलद्वाराणि मुक्तानि भवन्ति राजकुलं सिक्तसंमृष्टं भवति आसनप्रज्ञप्ती च कृता भवति । न कस्यचिच्छब्दं श्रुणीयति स्त्रीशब्दं वा पुरुषशब्दं वा हस्तिशब्दं वाश्वशब्दं वा एवं विस्तीर्णे राजकुले एवं महाजनकाये न कस्यचिच्छब्दो श्रूयति ॥ धर्मलब्धो [357a] सार्थवाहो आह ॥ भवन्तो यूयं न राजकुलातो शब्दं श्रुणिष्यथ । सा राक्षसी अत्र दारुणा मांसशोणितभोजना प्रवेशिता । ताये अत्र महादीनवं उत्पादितं । मुंचापेथ एतानि द्वाराणि यावज्जानाम राजकुलस्य वर्तमानं ॥ अमात्येहि निश्रेणिं आनयित्वा पुरुषा आरोपिता गच्छथ द्वाराणि मुंचथ त्ति ॥ पुरुषा राजकुलं चारूढा पश्यन्ति च अत्र हस्तिकरंकाणि चाश्वकरंकाणि च । एते च निवेदयन्ति जनकायस्य ॥ सर्वं इमं राजकुलं खादितं करंकाण्येवावशेषितानि ॥ ते दानि वुच्यन्ति ओतरित्वा मुंचथ एतानि द्वाराणि ॥ ततो ओतरित्वा द्वाराणि मुक्तानि अमात्या च भटबलाग्रा च नैगमा

3[1]. M °trinîye a ° paçyaṁti dvâ°. — 3[2]. M °hitâmi âgatâ bhaṭṭabalâgrâ âgato çre° B °lâgrâ âgato | çreshṭinai ° mo âgamo | sarve° M °kharâtripṛi° BM °thâ | a(B °aṁ)nyadâpi pa°. — 5. M paçyaṁti tâ° M °ṇi buddha° B °ṇi ca baddhakâni ca te°.

6[1]. M °pṛicchaṁti || . — 6[2]. B kiṁ revâ° M cire vâdya paja° BM °dvâraṁ na° M °muṁcaṁti || . — 7. M °laṁ râjadvârâni muktâni bhavaṁti || râjakula siktasaṁsṛishṭaṁ bhavati | na ka° B °shṭaṁ bhavati | â°. — 8. BM na kasyacicchabda çruṇi° M °strîçabda purushaçabdaṁ ha ° stirṇo râ° BM °kâyo na° M °cicchabdaṁ çruya° M °bdo çruya°. — 10[1]. B °sâthavâ° M °vâha âha bha°. — 10[2]. M bhavaṁto yû° BM °yaṁ sâ râja°.

11. M °tra mahâdâ° B °tra câruṇâ mânsaçonitebho° M °bhojinâ°. — 12[1]. M °tpâdinaṁ B °ditaṁ muṁ°. — 12[2]. M puṁcâpayatha | yetâ ° sya carta° BM °naṁ a°. — 13. B °hi nihçre° M °çreṇi âna° B °ânayetvâ ° shâ ârushitâ ga° M °shâ ârupitâ gacchaṁtha dvâ ° muṁcayaṁti B °muṁcathanti pu°. — 14. B °kulaṁ câruḍhâ° M °ḍhâ paçyaṁti || tatra°. — 15[1]. BM eteshâṁ ni° M °dayaṁti ja° BM °sya sa°. — 15[2]. B sarve | i° M sarve i° B °çeshaṁtâni | .

16. M °dâniṁ buddhyaṁti o° B °ni budhyanti° BM °trâ jânatha e ° ṇi ta°. — 17. M °tyâ bhaṭṭaba° M °pravishṭo paçyaṁti° B °açvabâhiriye pi karaṁkâṇy a° M °vaçeshitâmi te° M °stimarâṭhânâṁ açvamarâṭhânâṁ pi asthim avaçeshitâni B °stimaṇṭhânâṁ açvamaṇṭhânâṁ pi°.

च बाहिरराजकुलद्वारं प्रविष्टाः पश्यन्ति च हस्तिबाहिरीये अस्थिकरंकानि अश्वबाहिरीये पि करंकान्यवशेषितानि तेषां हस्तिमेण्ठानां अश्वमेण्ठानां पि अस्थीन्यवशेषितानि । यथा श्मशानं एवन्तं बाह्यतो राजकुलं भयभैरवदुर्गन्धं ॥ अभ्यन्तरतो पि राजकुलद्वाराणि मुंचित्वा द्वारं प्रविष्टा तत्रैव राज्ञो पि देवीनां पि अस्थीन्यवशेषितानि । एवन्तं राजकुलं अभ्यन्तरबाह्यतो श्मशानभूतं भयभैरवदुर्गन्धं ॥

ततो तेहि अमात्येहि च नैगमेहि च महाजनकायं संनिपातेत्वा तं राजकुलं साभ्यन्तरबाहिरं शोधापितं सिक्तसंमृष्टं कारापितं धूपनधूपितं तस्य राज्ञो देवीनां च सर्वेषां शरीरे पूजा कृता समन्ततो नगरस्य गुल्मा स्थापिता चतुरंगबलकायं निवेशितं हस्तिकायं अश्वकायं रथकायं पत्तिकायं ॥ एवन्तं नगरं सजनपदं रक्षीयति मा कोचि राजा अपराध्येयाति ॥ ते दानि अमात्या च नैगमा च जानपदा च संनिपतित्वा मन्त्रं धारेन्ति परस्परं संमन्त्रेन्ति ॥ भवन्तो को इह अस्माकं वाराणसीये राजा भविष्यति यो शक्नोय इमं राज्यं धर्मेण परिपालयितुं ॥ तेषां सर्वेषां राजामात्यानां नैगमजनपदानां च एतदभूषि ॥ नान्यो राजा योग्यो वाराणस्यां स्थापयित्वा धर्मलब्धं सार्थवाहं । एषो पुण्यवन्तो चाप्रमत्तो च । यत्र राक्षसा अपि न शक्नुवन्ति अवतारमधिगन्तुं । तत्र निष्कुत्तं महासमुद्रं अवतीर्णः सिद्धयात्रो च सर्वकालं क्षेमेण प्रत्यागतो ॥ तेहि सो धर्मलब्धो सार्थवाहो सर्वसौवर्णमहासिंहासने निषीदापेत्वा राज्ये भिषिक्तो ॥

भगवानाह ॥ स्यात्खलु पुनः भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन

3. M °çânam evam̃ bâhya° BM °râjakulasya bha° M °durgam̃dham̃ B °ndham̃ a°. — 4. M abhyatarato pi râjakuradvâṇi muci° BM °vishṭo tam̃ sarva(M °sam̃va)râjño pi devînam̃ pi asthi(B °sthim̃)nya° M °varopitâni | B °tâni e°. — 5. M evam̃ tam̃ râhulam̃ abhyam̃tara °çânam̃ bhûta bha ° ravam̃ durgam̃dham̃ || .

7. M °tyehi nai ° pâtatvâ ° sâbhyam̃tara ° ram̃ sodhâyitam̃ si° B °dhâpitam̃ | siktasanmṛishṭam̃° M °sam̃sṛishṭa kârâpitam̃ dhupanadhûpitam̃° B °dhûpakadhû° M °devipa sarve° B °vikâya sarve° BM °çariram̃ pû° M °samam̃tam̃taro naga° B °catulam̃gavarakâyam̃ ° çitam̃ | hastikâyam açva° M °stikâyam açvakâyam̃ e°. — 10. M evam̃ tam̃ na° BM °ram̃ so ja° M °mà kvacid râjâ aparadhya yâ te° B °aparadhya yâto | .

11. M °tvâ mavam̃ dhâretti parasparam̃ samaceti || B °mantreti | . — 12. M bhavam̃to iha ° shyati | yo çakoya imam̃ ° rimâlayatum̃ te° B °pâlayatum̃ || . — 14¹. M teshâm̃ râjâ°. — 14². M °râjâ yogyaḥ vâ ° sthâyetvâ°. — 15. M °ṇyavam̃to ca apramato ca.

16¹. M °kshasa api ° knuvam̃ti ava ° dhigam̃tum̃ | . — 16². M tatra kṛishṇabhyavatirṇo siddhayânapâ ° tyâga tehi°. — 17. B °ho savasau° M °ho sauvarṇe sim̃ ° dâyetvâ râjyâbhi° B °bhisikto || . — 19². M °punar bhiksha°.

तेन समयेन धर्मलब्धो नाम सार्थवाह अभूषि । न एतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स भिक्षवः तेन कालेन तेन समयेन धर्मलब्धो नाम सार्थवाह अभूषि ॥ या सा राक्षसीमहत्तरिका एता सा मारधीता । (तदा राक्षसीनां महत्तरिका अभून्सुः) तदापि एता ममावतारार्थी अवतारंगवेषी उपसंक्रान्ता [357b] न च मम शक्ता अवतारमधिगन्तुं एतरहिं प्येता ममावतारार्थी अवतारंगवेषी उपसंक्रान्ता नो तत्र नाम मे शक्ता अवतारमधिगन्तुं ॥

अश्रोषीत्खलु यदा राजा महामात्राणमन्तिके ।
महासमुद्रपारां स्त्रीं धर्मलब्धो न इच्छति ॥
आणपेसि तदा राजा महामात्यां तदन्तरं ।
सचे एष नेच्छति स्त्रीं प्रवेशेथान्तःपुरं मम ॥
अन्तरायं विजानित्वा न सात्मं स्थायि राक्षसी ।
सा तत्र पुत्रं प्रेषेति राक्षसीणां निवेदकं ।
भक्षितो खु मया राजा क्षिप्रं आगच्छथत्तवे ॥
राक्षसीनां गता पंच रौद्रा रुधिरभोजना ।
सर्वे राजकुलं गत्वा पराक्रमेन्सु यथागतं ॥
पूर्वे निवासं भगवान्पूर्वेजातिमनुस्मरं ।
जातकमिदमाख्यासि शास्ता भिक्षूणमन्तिके ।
ते स्कन्धा ते च धातवः तानि आयतनानि च ॥

1[1]. M naitad e°. — 1[2]. B tan kasya°. — 2. B °kâlena dha° M °vâho abhûshi ‖ tat kasya hetor ahaṁ bhikshavo tena kâlena tena samayena dharmalabdho nâma sârthavâho abhûshi | . — 3[1]. M yâ so mahattarikâ râkshasî etâsâṁ mâra° B yâ sâṁ râ ° ttarikâ°. — 3[2]. M °sinâ maha ° bhûshi ‖ tadâpi° BM °etâ mamâ(M °etâṁ a)vatârârthi(B °rthi |) avatâraṁgaveshi upasaṁkrântâ ca tâṁ(M °krâṁtâ na matâ) mama çaktitâ(M °saktito) avatâram adhigantuṁ | etarahiṁ pye(M °gaṁtuṁ etarhyapi e)tâ marârthi(B °mamâvatârârthi) avatâraṁgaveshi upasaṁkrântâ to(M °krâṁto) tatra nâma ma çaktitâ(B °ktito) avatâram adhigantuṁ(M °gaṁtuṁ) ‖ .

7. BM °râjâ mâtrâṇâm anti(M °m aṁti)ke ma°. — 8. B °pâraṁ strîṁ° M °pâraṁ strîçabdalabdho° B °ti â°. — 9. B °dâ mahâ ° dantaraṁ | M °naṁtaraṁ. — 10. M sarvesha necchaṁti strî praveçâṁ yathântaḥ° B sa caisha necchati strî praveço yathântaḥpure mama a°.

11. M aṁtarâyaṁ ° sâta khâ°. — 12. B °preshati° M °preshayati râkshasînâ niveçana B °kaṁ bha°. — 13. B °kshitâ khu° M °kshitâ shu mayâ° BM °thatave ‖ (M ve). — 14. M râççashinâṁ°. — 15. BM °krameshu ya°.

16. B pûrvaṁ ni° M °n pûrvaṁ jâti samanusmaran ‖ B °raṁ jâ°. — 17. M °khyâmi çâ° B °kshûṇâṁ santike | M °bhikshuṇam aṁtike | . — 18. M te skaṁdhâ te ca ° vaḥ tâṁny âya° B °tâny âyatanâni°.

आत्मानमधिकृत्य भगवां एतमर्थं वियाकरेत् ।
अनवराग्रस्मिं संसारे यत्र मे उषितं पुरा ॥
धर्मलब्धो अहं आसि वाणिजको अर्थचिन्तको ।
मारधीतरो राक्षसी एवं धारेथ जातकं ॥
एवमपरिमितं बहुदु:खं
उच्चनीचं चरितं पुराणं ।
विगतज्वरो विगतशोको
भगवां भाषति भिक्षुसंघमध्ये ॥

धर्मलब्धस्य सार्थवाहस्य जातकं समाप्तं ॥

कालो नागराजा तहिं खु महाचंक्रमे भगवन्तं उपसंक्रान्तो ॥ सो दानि भगवत: पादौ शिरसा वन्दित्वा एकांशीकृतो प्रांजलीकृतो भगवन्तमेतदुवाच ॥ मम भगवं भवनो पुरिमकेहि सम्यक्संबुद्धेहि परिभुक्तो क्रकुच्छन्देन भगवता कोनाकमुनिना काश्यपेन साधु भगवानपि मम भवनं परिभुंजतु अनुकंपामुपादाय ॥ तत्रापि भगवां कालस्य नागराजस्य भवने चतुर्थं सप्ताहं प्रीतिसुखेन वीतिनामेति । ततो पि भगवां कालस्य नागराजस्य भवनातो चतुर्थस्य सप्ताहस्यात्ययेन उत्थितो ॥

मुचिलिन्दो नागराज: पुरिमबुद्धदर्शावी भगवत: उपसंक्रान्तो ॥ सो पि भगवत: पादौ शिरसा वंदित्वा एकान्ते प्रांजलीकृतो भगवन्तं याचति ॥ मम भगवं भवनो पुरिमकेहि सम्यक्संबुद्धेहि परिभुक्तो भगवता क्रकुच्छन्देन कोनाकमुनिना काश्यपेन साधु भगवां पि मम भवनं परिभुंजतु अनुकंपामुपादाय ॥ भगवां मुचिलिंदस्यापि नागराजस्य भवने पंचमं सप्ताहं सुनिराहार: प्रीतिसुखेन

1. B cànmâna° M °gavân eta° B °rtham̃ vyâharet | M °rtham̃ vyâhare a°. — 2. M °varâgresmi sam̃ ° tra u° B °tra me tushita purà dha°. — 3. B °bdho 'ham̃° M °aham âsi vâ ° rthacim̃tako | . — 4. M °si elam̃ dhâraya jà°. — 5. B °ṇam̃ vi°.

7. M °bhagavân bhâsha°. — 9. M iti çrîmahâvastuavadâne dharma° B °sya sâthavâ° M °vâbajà ° mâpta || . — 10[1]. M atha kâ° BM °him̃ kumarim̃ cam̃(B °ca)kra° B °nto so°. — 10[2]. M °ni bhagavato pâ° B °çilasâ ° ekâçi°.

11. M mama bhagavan mavano ° bhuktehi kra° B °bhukte kra° M °ndena bhagavato ko° BM °bhum̃jâtu°. — 14. M °lasya nâgarasya bhavane caturtha sa ° khena vithinâ°. — 15. M °syâbhyayena utthitaḥ.

16[1]. M mucilindo nâgarâjo pu ° vi bhagavato pâdau° B °nto so°. — 16[2]. M °vanditvâ° B °ti mama°. — 17. M mama bhagavan bhavanâto pu° B °vam̃ bhavanâto pu° M °kto bhagavato kra° BM °bhum̃jâtu°. — 20. M bhagavân muci° BM °nirâhâra pri° M °vithinâ°.

वोतिनामेसि ॥ ततो पि तहिं सप्ताहिकं अकालवार्दलं उत्पन्नं सप्ताहं रात्रिंदिवं देवेन वर्षितं मुचिलिंदेनापि नागराज्ञा भगवतर्धयोजनकपरिक्षेपेन सप्तकुत्तं भगवन्तं भोगेन परिक्षिपित्वा उपरि विपुलेन फणेनाच्छादेसि । यथा च भगवन्तं विषगंधेन किल्बिषगन्धेन वा न व्याबाधेय त्ति मुचिलिन्दो नाम नागराजा स्वकातो भवनातो उत्तरित्वान भोगेन आछायेसि शिरिघनसुकृतेन फणेन सप्ताहं विपुलपुण्यं प्रसूतं । [358a] विनिपातेन नागराजेन च पुण्यं प्रसूतं परिक्षिपि हि महता परिभोगेन सप्ताहं ॥

यदा भगवान्सम्यक्संबुद्धः दुष्करं चरति नद्यीये नैरंजनाये तीरे तत्र भगवां दुष्करं चरन्तो अजपालकेन दृष्टो ॥ तस्य भगवन्तं उग्रतपं तपन्तं दृष्ट्वा प्रसादमुत्पन्नं ॥ तेन दानि प्रसन्नचित्तेन भगवन्तमुद्दिश्य न्यग्रोधपोतो रोपितो ॥ सो तं न्यग्रोधपोतं रोपित्वा भगवन्तमुपसंक्रम्य प्रांजलीकृतो आह ॥ भगवं इमो मया न्यग्रोधपोतो भगवन्तमुद्दिश्य रोपितो यदा एषो न्यग्रोधपोतो संवृद्धो भवेया भगवां संपूर्णकल्पो भवेया ति । ततो मे एतं न्यग्रोधं अनुग्रहार्थं परिभुंजसि ॥ भगवता तस्याजपालस्य तूष्णीभावेनाधिवासितं । सो दानि तूष्णीभावेनाधिवासनां विदित्वा तुष्टो आत्तमना प्रमुदितो प्रीतिसौमनस्यजातो संवृत्तो ॥ सो दानि तं न्यग्रोधपोतं कालेन कालं अनुखनेति परिखनेति परिकीलेति परिकुड्डालेति कालेन च कालं शीतलेन वारिणा अभिष्यंदेति परिष्यंदेति पर्याद्रेति परिघारेति ॥ सो दानि अजपालेन न्यग्रोधपोतो क्षिप्रं प्रशाखो संवृत्तो प्रासादिको दर्शनीयो भगवतो

1. BM tato pi bhagavāṁ ta(M °vân ta)hiṁ ° kâla(M °kâra)vardalaṁ utpaṁnaṁ(M °tparaṁ) saptahi râtriṁdivaṁ deve ° râjño bhagavatar a(M °vato a)rddhayo° B °kshemena° M °rikshapeṇa saptakṛityaṁ bha° BM °geṇa parikshi° M °pureṇa phalenâcchâditâcchâdesi | B °phaṇenocchâ°. — 3. BM °dhena khitkrisigadhe(M °khikisigandhe)na vânna-(M °vâṁna) vyavaheyanti || mu° M °ndo nâgarâja svakâto u ° genâcchâye çrighanaṁ sukṛiteca pha° B °vesi çirighanaṁ su ° phaṇena sa° BM °puṇyaprasûtâ(B °tâ || ).

6. M vivipâ° BM °jena yo sutaṁ parikshiptâ parikshipi(B °pi hi) maha°. — 8. M yadâ bhagavan dushkaraṁ caranti nadi° B °vân saṁmyaksaṁbuddhaḥ dushkaraṁ ca carati | nadî° M °tra bhagavân dushka ° japâran tena ajaṁcaranona dṛishṭvâ prasâdam u° B °japâlan tena ajâṁ vâlantena dṛishṭvâ tasya°. — 9. B °prasannaṁ utpannaṁ tena°. — 10[1]. M te dâni° BM °vantaṁm u ° to vâpito so°. — 10[2]. B °vantaṁm upa° M °kṛitam âha | .

11. BM bhagavaṁ imo(M °van imâṁ) mayâ(B °yâ mayâ) nyagrodhapoto bhagava° M °gavân saṁpûrṇaṁka ° veyasi | B °lpo bhaveyâsi | . — 13[1]. M °hârtha paribhuṁjesi | . — 13[2]. M °tasya ajapârasya tû ° vâsanâṁ vi° B °sita so°. — 15. BM °parikhaneti pari(M °li)kileti parikude(M °kûdye)ti kâlena ca° M °bhishyandeti parishyandeti paripra-bheti parighareti | B °rishyaṁdeti paripradeti parighareti so°.

17. BM °kshipraçâkho° M °tejonu° BM °vena ta°.

तेजानुभावेन ॥ तस्य दानि अजपालस्य न्यग्रोधपोतं ओशाखप्रशाखं प्रासादिकं प्रसादनीयं दृष्ट्वा अतिरिव चित्तं प्रसीदति ॥ सो दानि तेन चित्तप्रसादेन च कुशलमूलेन च कायस्य भेदात्त्रयस्त्रिंशदेवनिकाये उपपन्नो न्यग्रोधो नाम देवपुत्रो महर्द्धिको महानुभावो । सो पश्चादुपपंनो समानो अन्यां पूर्वोत्पन्नांस्त्रयस्त्रिंशकायिका देवपुत्रां दिव्येहि पंचहि स्थानेहि अभिभवति दिव्येनायुषा दिव्येन वर्णेन दिव्येन सुखेन दिव्येनैश्वर्येण दिव्येन परिवारेण ॥ तस्य समनन्तरोपपन्नस्य एतदभूषि । किं मया मनुष्यभूतेन कुशलं कर्म कृतं उपचितं कस्य कर्मस्य विपाकेन इह त्रायस्त्रिंशभवने उपपन्नो हं ॥ सो दानि न्यग्रोधो देवपुत्रो कुशलमूलं समन्वाहरन्तो पश्यति भगवन्तमुद्दिश्य न्यग्रोधं नदीये नैरंजनाये तीरे रोपितं ॥ सो दानि न्यग्रोधो देवपुत्रो अनेकदेवपुत्रसहस्रेहि परिवृतः अभिक्रान्तवर्णो अभिक्रान्तवर्णेन केवलकल्पं मुचिलिंदस्य नागराज्ञो भवनं उदारेण वर्णेन ओभासेत्व येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा एकान्ते अस्थासि ॥ एकांशीकृतो प्रांजलीकृतो भ[358b]गवन्तमेतदुवाच ॥ मया भगवन्मनुष्यभूतेन अजपालेनाजानि पालेन्तेन एषो न्यग्रोधो रोपितः भगवन्तमुद्दिश्य तेनाहं कुशलमूलेन मनुष्येषु च्यवित्वा भगवन्त्रायस्त्रिंशे देवनिकाये उपपन्नो । साधु भगवानेतं न्यग्रोधं परिभुंजतु अनुकंपामुपादाय यथा मे महाफलतरं भवेया ॥ अधिवासते भगवां तस्य देवपुत्रस्य तूष्णीभावेन ॥ अथ खलु सो देवपुत्रो तूष्णीभावेनाधिवासनां विदित्वा तुष्टो हृष्टो आत्तमनो प्रीतिसौमनस्यजातो भगवतः पादौ शिरसा वन्दित्वान तृप्कृत्वो प्रदक्षिणं कृत्वा तत्रैव अन्तरहाये ॥

भगवान्मुचिलिंदस्य नागराज्ञो भवनातो उत्थिहित्वा षष्ठं सप्ताहं निराहारो प्रीतिसुखेनाजपालन्यग्रोधमूले वीतिनामेषि ॥ ततो अजपालस्य न्यग्रोधमूलातो

1. M °japârasya nya° BM °dikaṁ pràsâda° B °ttaṁ prasàdanta so° M °sidanti ‖. — 2. M °cittepra ° bhedà trayastriṁçe de° B °bhedàs trayastriṁçà de° BM °vo so°. — 4. M °d upapannaḥ sa ° nnàṁ trayastriṁ ° paṁcahi kàmehi sthà° BM °ti ‖ divyenâyu ° rṇṇe(M °rṇe)na divyena çàkhena divyenai° M °ryena di° BM °ṇa ta°.

7. M °striṁçe bha°. — 8. M °nyagrodha de° BM °gavato u°. — 9. M °trasahasrairhi pari° BM °taḥ atikràntavarṇṇo(M °rṇo) atikràntavarṇṇe(M °rne)na kevalaṁ kalpaṁ° M °cilindesya ° jño bhavanam udà ° yena bhagavânsteno ° gavato pà° B °nte àsi e°.

13[1]. B °pràṁjalikrito bha°. — 13[2]. M °jàti càrante° B °jàni vàrante° M °ropito bhagavanta° B °upanno sà°. — 15. BM °bhuṁjàtu ° dàya | yathà° M °phalaṁ bhavayo.

16. M °gavàn tasya de° BM °bhâvenâ ‖. — 17. BM °viditvà citto hṛi(M °tto tu)shṭo° M °prìtisoma ° gavato pà ° nditvà trishkṛi° B °nditvà ca tri° M °kshiṇìkṛitvà tatraivàntarahàya ‖. — 20. M °cilindesya ° to ucchihitvà ° japàranyagrodhamule vìthinà°.

21. M °pàrasya nya° B °grodhàmù ° kàvanakhaṇḍe ° devajake ce° B °ceti | ye° M °vìthinà°.

षष्ठस्य सप्ताहस्यात्ययेन क्षीरिकावनषण्डे बहुदेवतके चेतिये निराहारो प्रीतिसुखेन सप्तमं सप्ताहं वीतिनामेसि ॥ एवं भगवां सप्तसप्ताहं एकूनपंचाशद्दिवसां निराहारो ॥

उत्तरापथे उक्कलं नामाधिष्ठानं । ततो उक्कलातो अधिष्ठानातो त्रपुसो च भल्लिको च नाम सार्थवाहा आढ्या महाधना महाभोगा पुण्यवन्तो महापरिवारा दक्षिणापथातो पंचहि धुरशतेहि तेन मार्गेण आगच्छन्ति ॥ तेषां मङ्गलीयानां बलीवर्दानां पुंगवा एको सुजाताये नक्षत्रे जातको अपरो कीर्तिके । तेषां एवं नक्षत्राणां नामेन सुजातकीर्तिकनामेन ज्ञायन्ति ॥ सर्वस्य सार्थवाहस्य पुरतो सार्थवाहस्य यानकं वहन्ति । यत्र मार्गे किंचिद्भयो भवति सिंहभयो व्याघ्रभयो द्वीपिभयं वा गण्डकभयं वा हस्तिभयं वा वनदेवभयं वा उदकवाहभयं वा चौरभयं वा तत्र ते न गच्छन्ति ततः ते वाणिजका जानन्ति भयं भविष्यतीति तथा संहरित्वा चतुर्दिशं प्रधावन्ति समन्तेन अवलोकेन्ता ॥ ते दानि बलीवर्दा सुजातकीर्तिका तहिं क्षीरिकावनखण्डं चानुप्राप्ता । अत्र त्रपुषभल्लिकानां च वाणिजानां पूर्वज्ञातिसालोहितेहि देवभूतेहि तहिं क्षीरिकावनखण्डे ऋद्धिये निगृहीता न शक्नोन्ति गन्तुं ॥ तेहि स्थितेहि सर्वे ते पुरुषा सार्थातो भीता तत्र संनद्धा ॥ तेषान्ते देवता पूर्वज्ञातिसालो[359ª]हिता अन्तरीक्षगता घोषमुदीरयेन्सुः शब्दमनुश्रावयेन्सुः ॥ मा भायथ वाणिजा त्ति न भवति वो उपद्रवं । एष बुद्धो भगवानिह वनषण्डे प्रतिवसति सप्तहि असंख्येयकल्पेहि प्रादुर्भूतः बहुजनहिताय बहुजनसुखाय लोकानुकंपाय महतो जनकायस्यार्थाय हिताय सुखाय देवानां च

2. M °gavàn sapta ° haṁ ekunamaṁcâ°. — 4[1]. M °the kkalaṁ°. — 4[2]. M tataḥ u° BM °trapusâ ca bha° BM °vâho âḍhyo mahâdhano mahâbhogo pu ° rivâro da° M °ṇâyathâto paṁcabi dhûraça° B °paṁcahi puraça°.

6. M °rddânâṁ puṅgalâ° B °puṁgalâ° M °ye nakshetriyena jâ° B °kshatriyena jâ° BM °ke te°. — 7. B °jâtaṁ kî° BM °rttinâme ° nti sa°. — 8. M °purato yâna ° vâhati | B °vâhati ya°. — 9. B °rge kiñcid bhavâ bhavati | siṁ ° ṇḍakabhayaṁ vâ hasti ° caurabhayaṁ vâ | tatra° M °cchanti | tato te° BM °tîti | tathâ° M °saṁrahitvâ caturdiçaṁ saṁpra°.

12. M °prâptâḥ atra°. — 13. B atra ḍapu° M °pusabhallikâyânaṁ ca° B °lliyânaṁ ca vâṇijâṇâṁ pû° BM °devabhûte tahiṁ° M °ṛiddhi nigṛihî° B °çakno gantuṁ te° M °knoti gantuṁ te°. — 15. B °bhîtâto | tatra° M °tra sannaddhâḥ te° B °ddhâ te°.

16. M teshâṁ te de ° sârohito antarikshâga° B °hito antarikshâgato gho ° yetsuḥ ça° M °yetsuḥ ça° BM °vayetsuḥ mâ°. — 17[1]. BM °ṇijânti(B °nti |) na vâ iti na vâ u°. — 17[2]. M esho bu ° vanakhaṇḍe° BM °saptehi a° M °khyebi kalpe ° rbhûto ba ° to janakasyârthâ ° ekunapaṁcâ° BM °çaddi(M °çadi)vasam anâhârasya taṁ a°.

मनुष्याणां च तस्माद्व सप्तसप्ताहं एकूनपंचाशद्दिवसा अनाहारस्य । तमाहारेण प्रतिमानेथ ततो वः अप्रमेयं कुशलमूलं भविष्यति ॥ तेहि दानि त्रपुषभल्लिकेहि वाणिजेहि तानं देवतानां वचनं श्रुत्वा मधुसर्पिसंयुक्तं तर्पणं गृहीतं । ते देवता तेषां वाणिजकानां पुरतो गच्छन्ति । इतो आगच्छथ ॥ ते दानि वाणिजा तेहि देवतेहि भगवतो सकाशमुपनीता ॥ ते तं मधुतर्पणं गृह्य भगवन्तमुपसंक्रान्ता । इमं भगवन्मधुतर्पणं परिभुंजतु अस्माकमनुग्रहार्थं ॥ अथ खलु भगवतो एतदभूषि ॥ किं नु खलु पुरिमका सम्यक्संबुद्धा भाजनप्रतिग्राहका उताहो पाणिप्रतिग्राहका भाजनप्रतिग्राहका सम्यक्संबुद्धा ति ॥ सह चित्तोत्पादेनैव भगवतः चत्वारि महालोकपाला चत्वारि सुवर्णपात्राण्यादाय भगवन्तमुपसंक्रान्ता रतनपात्रा ति कृत्वा न प्रव्रजितसारूप्यानि भगवां न प्रतिगृह्णाति ॥ ते दानि रूप्यामयानि पात्राण्यादाय भगवन्तमुपसंक्रान्ता । तानपि भगवां रतनपात्राणीति कृत्वा न प्रतिगृह्णाति ॥ एवं मुक्तामयानि वैडूर्यामयानि स्फटिकमयानि मुसारगल्वमयानि लोहितिकामयानि तानपि भगवां रत्नपात्राणीति कृत्वा न प्रव्रजितसारूप्याणीति कृत्वा न प्रतिगृह्णाति ॥ ते दानि चत्वारो शैलपात्राणि आदाय भगवन्तमुपसंक्रान्ता ॥ अथ खलु भगवतः एतदभूषि । यदहमेकस्य लोकपालस्य पात्रं प्रतिगृह्णीष्यामि त्रयाणां भविष्यति चित्तस्यान्यथात्वं ॥ भगवता सर्वेषां चतुर्णां लोकपालानां चत्वारि पात्राणि प्रतिगृह्णित्वा अंगुष्ठेन आक्रान्तां एकपात्रो च अधिष्ठितो । ते दानि चत्वारो पात्रा एकं पात्रं सं[359[b]]जाता सर्वेषां चतुर्णां पात्राणां चत्वारि पात्रकोटीनि दृश्यन्ति । तत्र भगवता त्रपुसभल्लिकानां वाणिजानां मधुतर्पणं परिभुक्तं ॥

1. B tam anâhâ° M °mânetha ‖ tato vo apra° B °meyam̃ aku° M °çalamulam̃°. — 2. B °ni ḍapushe bha° M °trashusha° BM °devânam̃ va° B °hitam̃ te°. — 4[1]. B °cchatha te°. — 4[2]. BM °vâṇijâ(B °jâm̃) tehi devantehi bha° B °nitâ te°. — 5. M caitam̃ ma° B °krânto | .

6[1]. B °smâkam̃m a°. — 7. BM °rimakâ sam̃myaksam̃buddhâ bhâ(M °bhâm̃)janapratigrâhakâ(M °hatâ) u ° ṇipratigrâhato bhâ(B °hakâ bho)janapratigrâhakâ sam̃myaksam̃buddhâ(M °ddho) ti saha°. — 8. B °tpâdo deva(M °vam̃) bhagavataḥ(M °vato) catvâri mahâ° B °pâlo catvâri su ° sam̃krâm̃taḥ ra° M °ntâ ratnapâtrâṇi kṛitvâ ta pravra° B °trâ hi kṛi° BM °gṛihnâti | . — 10. B °krântân api°.

11. B napi bha° M °gavân ratnapâ° B °trâṇi ti kṛi° BM °gṛihnâti | . — 12. B °ryamayâni sphâṭi ° sâlagalva° M °sâgalva ° bhagavân ratna° BM °gṛihnâti ‖ . — 14. M ta dâni°. — 15[1]. M °gavato e°. — 15[2]. B °ham etasya lo°.

16. M °ṇi pratipratigṛihitvâ° B °gṛihnitvâ ° gushṭena akrâ° M °gushṭena aprakrâ°. — 18. B °ro pâtrî e° M °ro pâtro ekapâtram̃° BM °jâtam̃ sarve°. — 19. BM °bhuktam̃ bha°.

भगवां दानि त्रपुसभल्लिकानां वाणिजानां मधुतर्पणं पीत्वा प्रत्यग्रप्रणीतवर्ण-गन्धरसोपेतं दक्षिणामादिशति ॥

अनेकाकारसंपन्नं तर्पणन्ति प्रवुच्चति ।
वर्णेन चैव संपन्नं गन्धेन च रसेन च ॥
प्रत्यग्रं च प्रणीतं च एषणीयं च कल्पियं ।
तर्पणं प्रथमं शास्तु अदेन्सुः त्रपुसभल्लिया ॥
मधुसर्पिसंयुक्तं तं पिबे च पुरुषोत्तमः ।
तेहि संतर्पितो वीरो प्रतिसंलानउत्थितो ।
तर्पये धर्मवृष्टीये देवगन्धर्वमानुषां ॥
दिशे सोवत्थिकं दिव्यं मंगल्यं चार्थसाधकं ।
यं श्रुत्वा सुमना सर्वे सर्वार्थां साधयिष्यति ॥
स्वस्ति वो द्विपदे भोतु स्वस्ति वो स्तु चतुष्पदे ।
स्वस्त्यस्तु व्रजतां मार्गे स्वस्ति प्रत्यागतेषु च ॥
स्वस्ति रात्रौ दिवा स्वस्ति स्वस्ति मध्यंदिने स्थिते ।
सर्वत्र स्वस्ति वो भोतु मा च पापं समागमत् ॥
शिरी वो दक्षिणे स्कन्धे शिरी वामे प्रतिष्ठिता ।
शिरी वो अंगमंगेषु मालेव सुप्रतिष्ठिता ॥
भद्रं वो भद्रशिरी वो वाणिजा भद्रमस्तु वो ।
येन केनचित्कार्येण गच्छथ पुरिमां दिशां ॥
नक्षत्राणि वो पालेन्तु ये तां दिशमधिष्ठिता ।
कृत्तिका रोहिणी चैव मृगार्द्रा च पुनर्वसु ॥
पुष्यं च वरनक्षत्रं अश्लेषा भोति सप्तमा ॥

1. M °gavàn dâni tra ° tyagràpaṇi° B °rṇṇagaṁdhâra° M °rṇṇagandhâra° B °diçanti | . — 3. M anekakâra ° vucyati | B °ccati va°. — 4. M °caivaṁ saṁ ° ndhena va ra° B °sena ca pra°. — 5. M °lpitaṁ | .

6. BM °adetsuḥ tatra trapusa(M °sha)bhalliyâ(M °llikâ) | . — 7. M °be purushottamaṁ | . — 8. BM te ca saṁ° M °tarppato vìraḥ pratisaṁsina u°. — 9. B °vṛishìye de°. — 10. BM diçâṁ so° M °tthitaṁ di° BM °sâdhikaṁ | .

11. M °shyatha | . — 12. B °bhontu sva vo stu° M °bhontu svasti bhontu catupade | . — 14. M °trau svasti divâ°. — 15. M °bhontu mâ ca°.

16. BM çiri yo da ° ndhe çiri vâ ° B °tisthitâṁ | M °tisthitâ | . — 17. M °tisthitâ | B °tishṭitâ | . — 18. M °çiri vâṇi° B °çirî vâ vâṇi°. — 20. B °diça dhi°.

21. M °caivaṁ mṛigaçirodrâ ca pu° B °gâdrâ ca pu°. — 22. B °traṁ ca açlesho bhonti sa° M °bhontu saptamaḥ | .



IMPRIMERIE NATIONALE.

इत्येते सप्त नक्षत्रा लोकपाला यशस्विनः ।
आदिष्टा पुरिमे भागे एतेषां पुरिमा दिशा ॥
एते वो अधिपालेन्तु भूमीये भवनेन च ।
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमे ।
लब्धार्था च निवर्तेथ तेहि नक्षत्रेहि रक्षिता ॥
पुरस्तिमे दिशोभागे अष्ट देवकुमारिका ।
नन्दोत्तरा नन्दिसेना नन्दिनी नन्दिरक्षिता ॥
जयन्ती विजयन्ती च सिद्धार्था अपराजिता ।
तेषामधिपती राजा धृतराष्ट्रो ति नामतः ॥
गंधर्वाधिपती राजा देवेहि स च रक्षितः ।
सो पि वो अभिपालेतु भूमीये भवनेन च ॥
क्षेमा च वो दिशो भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ सर्वदेवेहि रक्षिता ॥
पुरिमस्मिं दिशोभागे चापालं च नाम चेतियं ।
नित्यं ज्वलति तेजेन नित्यं सत्योपयाचनं ।
सो पि वो अभिपालेतु भूमीये भवनेन च ॥
[360ᵃ] क्षेमा च वो दिशो भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ सर्वचेतियसुरक्षिता ॥
येन केनचिदर्थेन गच्छथ दक्षिणां दिशं ।
नक्षत्राण्यभिपालेन्तु ये तां दिशामधिष्ठिता ॥
मघा चोभे च फाल्गुण्यौ हस्ता चित्रा च पंचमा ।

1. B °pâlo ya°. — 2. B adi° M adishṭo purime° BM °diçâṁ | . — 4. BM kshemâ ca sadi°.

6. B °rikâṁ | . — 7. B naṁdurânandise° M mandurânandinandisenânandivarasalakshitâ | . — 8. B *omet cette ligne.* M nandirânandivarddhitâ ca siddhâ ° jitâ | tâ pi ca adhipâlentu bhumiye bhavanena ca | kshemâ ca vo diço bhontu mâ gamo pâpam âgami | labdhâthâ ca nivarttetha devakanyâhi rakshitâ | te° (*l.* 9). — 9. M °dhipati râjâ dhṛitarâshṭreti° B °dhṛitarâshṭreṇa nâ°. — 10. M gandharvâdhipati râjâ devehi ca rakshitâ | B °hi sa ca rakshataḥ | .

11. BM °pi to a°. — 12. B kshamâ ca vo di° M °gami || . — 13. BM °sarve de° kshitaṁ | . — 14. M purimesmiṁ° B °diçâbhoge câpâlaṁ° M °ge pâlaṁ ° cetiye | . — 15. M °jvarati° BM °nityâ satyo(B °sasyo)payâ°.

16. BM °leti bhûmî(B °bhûrî)ye°. — 17. B kshmâ ca vo pâ° M °gami | B °mî | la°. — 18. M °rthâya ni° BM °varttatha°. — 19. BM °kshiṇâ di°. — 20. M °ntu etâṁ dim adhi°.

21. B °ghâ câbhe° M °ghâ vobhe ca phârguṇyau°.

स्वाती चैव विशाखा च एतेषां दक्षिणा दिशा ॥
इत्येते सप्त नक्षत्रा लोकपाला यशस्विनः ।
आदिष्टा दक्षिणे भागे एतेषां दक्षिणा दिशा ॥
ते पि वो अभिपालेन्तु भूमीये भवनेन च ।
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ तेहि नक्षत्रेहि रक्षिता ॥
दक्षिणस्मिं दिशोभागे अष्ट देवकुमारियो ।
लक्ष्मीमती श्रिरीमती यशोमती यशोधरा ॥
शुभेष्ठिता सुप्रभाता सुविशुद्धा सुव्याकृता ।
ता पि वो अभिपालेन्तु भूमीये भवनेन च ॥
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ देवकन्याहि रक्षिता ॥
तासामधिपती राजा विरूढको ति नामतः ।
कुम्भाण्डाधिपती राजा यमेन सह रक्षतु ॥
क्षेमा च वो दिशो भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ कुम्भाण्डेहि सुरक्षिता ॥
दक्षिणस्मिं दिशोभागे अभिपश्यं नाम चेतियं ।
नित्यं ज्वलति तेजेन नित्यं सत्योपयाचनं ॥
सो पि वो अभिपालेतु भूमीये भवनेन च ।
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ चेतियेन सुरक्षिता ॥
येन केनचिदर्थेन गच्छथ पश्चिमां दिशं ।

1. M °caivaṁ vi° BM °kshiṇâṁ diçâṁ | . — 3. B °diçâṁ || . — 4. M te pi ca a°. — 5. M °ntu mâ ga vo pâ°.

6. B lâbdhâ cârthâ° M °rthâ va ni°. — 7. BM °kshiṇesmiṁ° M °kumârikâ | B °riye | . — 8. B lakshmîpati çirîmati yaçâmatvâ yaçodha° M lakshmîpati çirîmatâ yaçâmatî yaçodha°. — 9. B sudrasthitâ supra° M çubhesthitâ sapra ° kritâḥ | . — 10. M tâṁ pi vo abhipâsentu°.

11. B °bhonti mâ ca°. — 12. M °devakaṁnyâ°. — 13. M °virudha ° mata | . — 14. M kubhâṇḍâdhipatiḥ râjâ° B °mena sanena ca | . — 15. M so pi vâ adhipâlentu bhûmiye bhavanena ca | kshe° B °bhonti mâ°.

16. M °rthâya ni°. — 17. BM °kshiṇesmiṁ° M °çyaṁti cetiya | . — 18. M °jvarati tejena nityo sa° BM °tyopajâcano | . — 19. BM °pâlentu bhû°.

21. B °cetiye su° M °tiye ca su° B °kshitâ ye°. — 22. B ye kenaci° M ye keci yenad arthe° BM °çeimâ diçaṁ | .

नक्षत्रा वो भिपालेन्तु ये तां दिशमधिष्ठिता ॥
अनुराधा च ज्येष्ठा च मूलश्च दृढवीर्यवान् ।
उभे आषाढे भिजिञ्च श्रवणा भवति सप्तमी ॥
ते पि वो अभिपालेन्तु भूमीये भवनेन च ।
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ तेहि नक्षत्रेहि रक्षिता ॥
पश्चिमस्मिं दिशोभागे अष्टौ देवकुमारियो ।
अलंबुषा मिश्र[360b]केशी अरिष्टा सुप्रभायका ॥
. . . . . . . . कृष्णा शुक्रा च द्रौपदी ।
ता पि वो अभिपालेन्तु आरोग्येन शिवेन च ॥
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ देवकन्याहि रक्षिता ॥
तासामधिपती राजा विरूपाक्षो ति नामतः ।
स वो नागाधिपो राजा वरुणेन सह रक्षतु ॥
सो पि वो अभिपालेतु भूमीये भवनेन च ।
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ सर्वनागेहि रक्षिता ॥
पश्चिमस्मिं दिशोभागे अस्तो नामेन पर्वतो ।
आवर्तो चन्द्रसूर्याणां अस्तो अर्थं ददातु वो ॥
सो पि वो अभिपालेतु भूमीये भवनेन च ॥
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ सर्वे अस्तेन रक्षिता ॥
येन केनचिदर्थेन गच्छथ उत्तरां दिशां ।

1. B °dhishṭitâ ‖ M °shṭhitâḥ | . — 3. M °âkhâḍhe abhikshicca çravaṇe bha° B °çravaṇo bha° M °ptami ‖ . — 5. M °diço bho°.

7. B pacchimasmiṁ diçâbhâge ashṭaṁ de° M paçcimesmiṁ ° ashṭa de ° riyaṁ | B °riye | . — 8. BM alaṁvarshâ mi° M °rishṭo suprabhâsvaraḥ | . — 9. BM ekâna(B °naṁ) vâtavamikâ kṛi° M °çuklamadopati | B °çukrama opati | . — 10. B °rogena çi° M °rogyaṁna çi°.

12. M °bdhârthâṁ ya ni ° devakaṁnyâ° B °kshikâ | . — 13. M °virupâksho°. — 14. M sarvanâgâ° B sarvarâjâdhipo nâgâ varu°. — 15. M °vo adhipâ° BM °lentu bhu°.

16. M °gami | . — 17. M °rthâya ni° B °sarvaṁnâ°. — 18. M paçcimesmiṁ° B °diçâbhâ° M °ashṭanâme°. — 19. M °ndrasuryyânâṁ anto a° B °ṇâṁ anto arthaṁ dadâ bhuvo | M °dadatu me | . — 20. M °adhipâ° BM °lentu bhû°.

22. M °rthâya ni ° kshitâḥ | . — 23. BM ye kenaci ° ttarâ diçâṁ(M °çaṁ) | .

नक्षत्रा वो भिपालेन्तु ये तां दिशमधिष्ठिता ॥
धनिष्ठा शतभिषा चैव उभौ प्रोष्ठपदा पि च ।
रेवत्यथाश्विनी चैव भरणी भवति सप्तमी ॥
ता पि वो अनुपालेन्तु भूमीये भवनेन च ।
क्षेमा च वो दिशो भोन्तु मा च वो पापमागमी ।
लब्धार्थाश्च निवर्तेथ तेहि नक्षत्रेहि रक्षिता ॥
उत्तरस्मिं दिशोभागे अष्टौ देवकुमारियो ।
इला देवी सुरा देवी पृथिवी पदुमावती ॥
आशा श्रद्धा हिरी च श्री. . . . . समागता ।
ता पि वो अभिपालेन्तु भूमीये भवनेन च ॥
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्थाश्च निवर्तेथ देवकन्याहि रक्षिता ॥
तासामधिपती राजा कुवेर इति नामतः ।
सर्वयक्षाधिपो राजा राक्षसीहि सह रक्षतु ॥
सो पि वो अभिपालेतु भूमीये भवनेन च ।
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्थाश्च निवर्तेथ यक्षराक्षसरक्षिता ॥
उत्तरस्मिं दिशोभागे कैलासो नाम पर्वतः ।
आवासो यक्षसंघानां राक्षसानां निवेशनं ॥
सो पि वो अभिपालेतु भूमीये भवनेन च ।
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्थाश्च निवर्तेथ यक्षराक्षसरक्षिताः ॥
अष्टाविंशति नक्षत्रा सप्तसप्त चतुर्दिशं ।

1. B °dhishṭitâ | . — 2. M dhanesha ça° B dhanishâ ça° BM °proshṭapa° B °pi câ | .
3. BM °thâçvajâ caiva bha(B °caiva ta)ruṇi° M °ptamâ || . — 4. M °vo adhipâ°. —
5. BM °bhonti mâ° M °gami | .

6. M °rthâ ca ni ° kshitâḥ | . — 7. M uttaresmiṁ° BM °ashṭade ° riye | . —
8. B hiriṁ devî su° M hirî devî su ° mâvati || . — 9. M âsâ çârddhâ ahiriva çîtâm api samâgato | B °hiri çirî tâ pi°. — 10. M mâ ca vo a ° bhûmiye°.

11. M °gami | . — 12. M °rthâ ca ni ° devakaṁnyâ°. — 14. M °sîhi sarakshitâ || .
15. BM °pâlentu bhû°.

16. M °diço bho°. — 17. M °rthâ ca ni ° kshitâḥ | . — 18. M uttaresmiṁ° B °diçâbhâ° BM °kailâço nâ°. — 20. M °pâlentu bhû°.

22. B labdhâç cârthâ ni° M °kshitâ | . — 23. B ashṭaviṁ° M °trâ ca sapta sa°

सह चन्द्रमसूर्येहि विंशज्ञोन्ति अनून[36 1 ᵃ]कं ॥
द्वाविंशद्देवकन्यायो अष्ट अष्ट चतुर्दिशं ।
चत्वारश्च महाराजा लोकपाला यशस्विनः ।
प्रज्वलमानवर्णेन रक्षन्ति ते चतुर्दिशं ॥
अष्ट श्रमणा ब्राह्मणा अष्ट जनपदेषु क्षत्रिया ।
अष्ट सइन्द्रका देवा सदा रक्षां करोन्तु वः ॥

तेषां दानि भगवता त्रीणि शरणगमनानि दिन्नानि । गच्छथ बुद्धशरणं गच्छथ धर्मशरणं गच्छथ अनागतं च भगवतो श्रावकसंघशरणं ॥ ते दानि बुद्धशरणं गता धर्मशरणं गता संघशरणं गता ॥ ते दानि आहन्सुः । वयं भगवं वाणिजका देशदेशानि च राज्यानि च अण्वाम । साधु मं भगवां कंचिद्देय धातुं यं वयं पूजयेम ॥ भगवता दानि तेषां शीर्षातो पाणिना केशानि ओतारित्वा दिन्नानि इमं केशस्तूपं कारयेथ नखानि च ओतारित्वा दिन्नानि इमं नखस्तूपं कारापेथ शिला च आगमिष्यन्ति तां च शिलां प्रतिष्ठापेथ ॥ तेहि दानि यत्र केशस्थाली नाम अधिष्ठानो तहिं केशस्तूपं कारापितं । वालुक्षो नाम नगरं तहिं नखस्तूपं कारापितं । शिलुक्षं नामाधिष्ठानं तत्रापि शिला प्रतिष्ठापिता सा भगवता ऋद्धीये पाणिना क्षिप्ता ॥

भगवता दानि सप्तसप्ताहेहि एकूनपंचाशद्दिवसानि निराहारेण त्रपुषभल्लि-

1. M °masuryye ° bhoti anunakaṁ | . — 2. M °devakaṁnyâ vâ ashṭa a°. — 3. M °pâlo ya°. — 4. M °jvalanmânâ ° nti ca caturddiçaṁ | B °nti catuçaṁ | . — 5. BM purima(B °makâṁ) diçâṁ dhṛitarâshṭro paçcimâṁ(M °çcime ca) virupâksho(M °kshaḥ) dakshiṇâṁ ca virûḍhako kuvero u(M °ro co)ttarâṁ(B °râ) diçaṁ | ashṭa çrama(M °çrava)ṇâ ashṭa brâ° M °deshu ca | kshatriyo a° B °shu kshetriyâ | .

6. B °dà rakshâ karantu° M °ntu vo | . — 7[1]. M °dinâni | B °nnâni ga°. — 7[2]. B gacchatha | buddhaṁ çaraṇaṁ gacchatha dharmaçaraṇaṁ gacchatha | anâ° M °dharmmaçaraṇaṁ gacchatha saṁghaçaraṇaṁ anâ° BM °bhagavatâ çrâ°. — 8. BM °buddhaçaraṇaṁ gatâ saṁgha°. — 9[1]. M °hatsuḥ || . — 9[2]. B °bhagavâṁ vâ° M °bhagavan vâṇijakâ deçedeçâ° — 10. M °gavân kiṁci° B °vâṁ kiṁci° BM °d darçanahetu(M °heto) yaṁ vayaṁ pûje(B °yujaye)ma | .

11. BM ° pâṇi(M °ni)nâ keçâni otâritvâ dinnâni | imaṁ(M °nnâvi idaṁ) ke° rayetha| na ° nnâni | i° M °kârâpetha çiro va âgamishyaṁti tâṁ° B °tâṁ ca çilâ pra°. — 13. B °dâni keça° M °dâni keçasthâri nâ ° dhisthânâto tahiṁ ° paṁ kârayetha kârâpitaṁ | B °taṁ çi°. — 14. *Omis par* B. M ° kâropitaṁ || . — 15. M çilujvaṁ nâmâdhishṭhitaṁ tatrâ° B çilahvaṁ nâmâ ° naṁ | tatrâ° M °shṭhâpitâ so bha ° ṛiddhi pâ°.

17. M atha khalu bhagavân dâ° B bhagavâṁ dâ° M °ptâheti ekunapaṁ ° shabhallikânâṁ vâ ° rppaṇaṁ titaṁ tena bha° B °rpaṇam pitena bha° BM °gavato tathâ abhishanditâ(M °ndinâ) | .

कानां वाणिजकाणां मधुतर्पणं पीतं पीतेन भगवतो ते च अभिप्रस्थिता ॥ ततो शक्रेण देवानामिन्द्रेण भगवतो हरीतकी उपनामिता । धातूनां सुखं भविष्यति ॥ भगवता दानि सा हरीतकी परिभुक्ता तं च हरीतकीवृन्तकं भगवता तत्रैवोद्देशे रोपितं सा च तं दिवसमेव जातावशाखप्रशाखा महान्तं हरीतकीवृक्षं पुष्पफलोपेतं संवृत्तं । इमं भगवतो प्रथमं ऋद्धीवृक्षं । या च ततो वृक्षातो हरीतकीयो तानि अद्य चेतकीया हरीतकीप्रवाला ति वुच्यन्ति ॥

ततो भगवता उरुविल्वायां षड्वर्षाणि दुष्करं तपं चीर्णं ॥ तदा उरुविल्वायां सेनापतिग्रामातो नगरावलंबिकाये शाणपांसुकूलं भगवतो दुष्करचारिकां चरन्तस्य प्रसन्नचित्ताय उपनामितं । यदा भगवं परिपूर्णसंकल्पो [361b] भवेसि तदा इमं शाणपांसुकूलमनुग्रहार्थाय परिभुंजेसि ॥ भगवतो तूष्णींभावेनाधिवासनां विदित्वा तुष्टा आत्तमना पांसुकूलं वृक्षशाखाये ओलंबित्वा भगवतः पादौ शिरसा वन्दित्वा त्रिष्कृत्तं प्रदक्षिणीकृत्वा प्रक्रमि ॥ सा दानि नचिरस्यैव कालगता भगवतो सन्तिका प्रसन्नचित्ता तं पांसुकूलदानं समनुस्मरन्ती समनन्तरकालगता त्रयस्त्रिंशे देवनिकाये उपपन्ना अन्यतरस्य महर्द्धिकस्य महानुभावस्य देवपुत्रस्य विमान अप्सरसां शतसहस्रप्रवरा ॥ सा दानि अप्सरा समन्वाहरति । किं मया मनुष्यभूताये कुशलमूलं कृतं केवरूपा च दक्षिणा प्रतिष्ठापिता येनाहं त्रयस्त्रिंशे देवनिकाये उपपन्ना ॥ सा दानि समन्वाहरन्ती पश्यति उरुविल्वायां सेनापतिग्रामके भवा नाम नगरावलंबिका आसि दुःखिता । तं मया मरणकाले बोधिसत्वस्य दुष्करं चरन्तस्य प्रसन्नचित्ताये शाणपांसुकूलं दिन्नं तेनाहं कुशलमू-

1. M °gavatâ hari°. — 2. BM °nâm̃ sukham̃°. — 3. M °ni sâ haritaki pa ° ktâ tam̃ ca haritakîdvepikam̃ bha° B °ktâ tam̃ ca haritakirddham̃gakam̃ | bha° M °traiva udde° BM °sam eva(M °vam̃) jâtâveçâkhâ pra° M °khâ mahatâm̃ harî ° pushpam̃ pha ° vṛitto | B °vṛitta | . — 5[1]. M °ṛiddhivṛiksham̃ | B °ksham̃ yâ°. — 5[2]. M tato vṛi° B yâ ca ye tato vṛi° M °to haritakîyo ° cetiyâ haritakî pravânâti buddhyanti || B °pravânâti | buddhyanti || .

7[1]. B °uluvilvâ° M °pam̃ tîrṇṇam̃ || . — 7[2]. B °dâ uluvilvâ° M °garâm̃bikâyenâ çayâm̃sukulam̃° B °bikâyo çâ° M °ttâye upa° B °ttâya unnâmitam̃ | . — 9. B °gavâm̃ paripû° M °gavân paripûrṇṇakalpo° BM °vesi | ta° M °sukulâm̃ anu ° bhuñjasi | . — 10. B bhagavatâ tû° M bhagavatâ tûshṇîbhâ° BM °tushṭo â° B °ttamanâ yâm̃su° M °ttamanâ pâṇḍukulam̃ vṛi ° olam̃ghayitvâ bha° B °olam̃yitvâ bha° M °nditvâ triḥkṛityam̃ prada°.

12. M °bhagavatâ santi° B °ttâ teshâm̃ sukuladâ° M °tam̃ pâṇḍukulam̃ dâ ° smaranti | samananta° B °ntaro kâlagatâ | tra° M °upapannâḥ anya° B °nnâ | anya° M °vimâne apsa ° sraparivârâ || . — 15. BM so dâni apsara samanvâharati(B °nti) kim̃°.

16. M °çalamulam̃ ° rûpâ va dakshiṇîye pra° B °kshiṇâye pra° M °upapannâḥ | . — 17. M so dâni ° haranti paçya° B °uluvilvâ° M °ke çavo nâma naga° BM °valam̃bikâ | âsi (M °kâ âsit ||) duḥ° B °tâ tam̃° M °khitân tam̃ ma°. — 18. M °cittasya çâṇapam̃çu[illegible]lam̃ dinnam̃ | te° B °pâm̃sukulam̃ ° lena mânu° M °nushya çyavi ° upapann[illegible]°.

तेन मनुष्येषु च्यवित्वा इह त्रयस्त्रिंशे देवनिकाये उपपन्ना । न च मे तं देयधर्मं भगवतामद्यापि परिभुक्तं । यदिममेव देयधर्मं भगवाननुग्रहार्थं परिभुंजेया तत् मम महत्फलतरं भवेया ॥ सा दानि अप्सरशतसहस्रपरिवृता महता देवानुभावेन महता देवऋद्धीये त्रयस्त्रिंशभवनातो वृक्षशाखातो तं शाणपांसुकूलं गृह्य भगवन्तमुपसंक्रान्ता ॥ इमं मया भगवन्तं शाणपांसुकूलं मनुष्यभूताये भगवतो दुष्करं चरन्तस्य प्रसन्नचित्ताये दिन्नं यदा भगवं परिपूर्णसंकल्पो भवेसि ततो भगवन् ममानुग्रहार्थं परिभुंजेसि तेनाहं कुशलमूलेन मनुष्येषु च्यवित्वा त्रयस्त्रिंशेषु देवनिकायेषु उपपन्ना । साधु मं भगवां इमं शाणपांसुकूलं परिभुंजतु अनुकंपामुपादाय यथा मे महत्फलतरो भवेया ॥ देवा अन्तरीक्षगता भगवन्तमाहन्सुः ॥ मा भगवानिमं शाणपांशुकूलं परिगृह्णातु । वयं भगवतो दिव्यां विकल्पदूष्याणि दास्यामः ॥ भगवान्तेषां देवतानां विकल्पदूष्यप्रदानानि नाधिवास[362ᵃ]यति । तं गवाये नगरावलंबिकाये शाणपांशुकूलं प्रतिगृहीतं देवताशतसहस्रेहि च अन्तरीक्षातो चेलक्षेपाणि च भगवतः कृतानि हक्कारकिलिकिलानि च अकरेन्सुः ॥

चक्रवर्तिराज्यं परित्यक्तं किं नो पांशुकूलेषु चित्तं रमति ॥

भगवां दानि शाणपांशुकूलं धोवितुकामो । उदकेन कार्यं ॥ अथ खलु शक्रेण देवानामिन्द्रेण पाणीहि नदी खता अद्यापि च पाणिखाता नाम नदी वुच्चति ॥ शिलापट्टेन कार्यं यत्र तं शाणपांशुकूलं धोविष्यति ॥ चतुर्हि महाराजेहि चत्वारि शिलापट्टा उपनामिता । भगवता एकत्र शिलापट्टे तं शाणपांशुकूलं धौतं ॥

1. M °vatâm ayâ pi° BM °ktaṁ ya°. — 2. BM °dimevaṁ de° B °rmaṁ ‖ bha° M °jeyâ taṁ mama maha° BM °tphalaṁtaraṁ bhâveyâ | . — 3. B so dâ° BM °vṛito mahatâ devânu° M °vena mahânto ṛi° B °devariddhî° BM °striṁçe bha° M °nâto âgatvâ tataḥ vṛi ° pâṁçukulaṁ° B °sukulaṁ° M °gavantaṁ upasaṁkrânto | . — 5. BM °ntaṁ çâṇapâṁsukûlaṁ mâ(M °pâṁçukulaṁ ma)nu° M °gavato duḥkaraṁ° BM °nnaṁ | yadâ bhagavâṁ pa(M °vân pa)ripû ° vesi | tato° B °gavâ ma° M °vân ma° B °ribhujesi | te° BM °lena mânu°.

8. BM sâdhû maṁ bha° M °gavân imaṁ çâ° B °çâṇaṁpâṁ° M °pâṁçukû° BM °bhuṁjâtu°. — 9. B °rikshe gatâ ‖ bha°. — 10[1]. B °gavan emaṁ° M °gavân emaṁ çânapâṁçukulaṁ pratigṛihîtuṁ devatâçatasahasrehi pari° BM °gṛihnâtu | . — 10[2]. BM °vikalpâṁ dushyâ°.

11. M °gavâṁ teshâṁ dâni de° BM °nâṁ kalpaṁ dushya°. — 12. B °çâṇaṁ pâṁ° M °çukulaṁ ° hituṁ de ° srehi cânta ° to caulâkshepâni ca bhaveyâ | kṛi° B °to calokshepâṇi ca bhaveyâ kṛi° BM °netsuḥ | . — 14. BM °varttirâ ° kiṁ vo pâṁçukule° M °shu vittaṁ°. — 15[1]. M °gavân dâni sânapâṁçukulaṁ°. — 15[2]. M pâṁçu uda°. — 15[3]. BM °ṇî(B °ṇi)hi nadî khanâ adyâpi ca pânikhâdâ nâma° M °vucyati çi°.

17[1]. M °taṁ sânapâṁçukulaṁ° BM °ti ca°. — 17[2]. B °lâpattaṁ u° M °lâpaṭṭa u° B °mitâ bha°. — 18. M °çânapâṁçukulaṁ°.

द्वितीये शिलापट्टे तं पाशुकूलं शोषितं ॥ तृतीयं शिलापट्टं भगवता त्रपुसभल्लिकानां शिलुक्षनामनिगम आवासितानां तत्र ऋद्धीये पुरतो उत्क्षिप्तं ॥ तेहि तं शिलापट्टं तत्रैव चेतिये प्रतिष्ठापितं । अद्यापि गन्धारराज्ये अधिष्ठानं शिलानामेन ज्ञायति ॥ चतुर्थे शिलापट्टे भगवता निषीदित्वा तं शाणपांशुकूलं सीवितं । यदपि तत्र शिलापट्टं भगवतो अनुसीवननामापद्ये ॥ सर्वे चत्वारो शिलापट्टा भगवता परिभुक्ता तानि च जम्बुद्वीपे सदेवमानुषस्य लोकस्य चेतियभूता ॥

भगवां दानि तं शाणपांशुकूलं धोवित्वा सीवित्वा च पाणिखातनदीस्नायको ओकस्तो । स्नायित्वा भगवां पाणिखातातो नदीतो उत्तरिष्यतीति अकिलन्तकाया बुद्धा भगवन्तो अकिलन्तचित्ता तहिं तीरे ककुभो नाम वृक्षो ओशाखप्रशाखो प्रासादिको दर्शनीयो यंनामो च वृक्षो तंनामा च वृक्षस्य देवता ककुभो नाम देवपुत्रो प्रतिवसति । सो देवपुत्रो भगवता ततो नदीतो उत्तरन्तेन आभाष्टो ॥ आहर ककुभ हस्तं ॥ वरविमलकुण्डलधरेण ककुभेन देवपुत्रेण भगवतो बाहा प्रणामिता । भगवां ककुभस्य देवपुत्रस्य बाहां गृह्य पाणिखातातो नदीतो उत्तीर्णो समं च भगवता ततो ककुभस्य देवपुत्रस्य बाहातो हस्तं स्वकं अपनीतं तत्र च वृक्षशाखायां भगवतो पंचांगुलस्य करतलस्य पद्मं दृश्यति [362b]॥ (यं दानि अहं बोधिं आहतहस्तो च सुंदरो ककुभो नदीका च पाणिखाता शिला च देवेहि निक्षिप्ता ॥)

ततो भगवां अजपालन्यग्रोधं गतो ॥ भगवानजपालस्य न्यग्रोधमूले विहरन्तो

1[1]. M °ye pi çi ° çukulam̃° B °lam̃ soshitam̃ | . — 1[2]. B °tiye çilâpaṭṭe bhagavato trapusa° M °yam̃ pi çilâpaṭṭe bhagavato trapushabhalli° B °kshaṇâmani° M °tra riddhî ° upakshiptam̃ ‖ . — 2. B °ṭṭam̃ tatra taiva° BM °cetiyam̃ pra°. — 4. M °tvâ tâm̃ sânapâm̃çukulam̃ çobhitam̃ | B °vitam̃ ya°. — 5[1]. BM yadyapi° BM °lâpaṭṭena bha° BM °anuçivanânâ(M °vanânâm̃)padye sa°. — 5[2]. M °rve çilâpaṭṭâ catvâra bha° B °tvâra çilâpaṭṭo bhagavato pari°.

7. M °tam̃ sânapâm̃çukulam̃ gopitvâ çivitvâ ca pâṇishâtam̃ nadisnapako° B °çukulam̃ dhauvitvâ çivitvâ ca ° sto snâ°. — 8. M snâpitvâ° B °tvâ | bhagavâm̃ pâṇikhidâto nadi° M °khâdâto nadi° B °ttarishya° BM °titi | akilantakâyâ° M °bhagavato akilantakacitto tahim̃ ° khapraçâkha prâ ° ca vṛikshâ tam̃nâmo ca° B °rçaniyo ca vṛiksho tam̃nâmo ca° BM °tâ kakubhe kakubho nâma de° B °ti so°.

11. M °uttirṇṇor âbhâ°. — 12[1]. M âhaca kakubhas tam̃ B °hastam̃ cala°. — 12[2]. B calavi° bâhâm̃ pra° M °bâhi praṇâmi | B °mitâ bha°. — 13. M bhagavân kaku ° hya pâṇishâdâto nadi ° tâ tataḥ kaku° BM °vṛikshâçâ° B °pam̃cakulasya kara° M °pam̃capam̃cakulasya karatarasya pa ° B °çyati yam̃ dâ°. — 15. B ° bodhim̃ | â°. — 16. B °âha ca hasto ca sum̃° M °âha ca hastâ ca sundaro° BM °bho | nadi° M °kâ ra pâṇikhâdo çilo ca de°.

18[1]. M °gavân ajapârasya nya° BM °to bha°. — 18[2]. B °japâlapâlasya° BM °loka mimâm̃seti gam̃°.

लोकं मीमांसेति ॥ गंभीरो अयं मम धर्मः अभिसंबुद्धो निपुणो सुखुमो दुरनुबोधो अतर्कावचरो पण्डितवेदनीयो सर्वलोकविप्रत्यनीको । आलयारामो खलु पुनरयं आलयरतो आलयसमुदितो आलयारामायां च प्रजायां आलयरतायां आलयसमुदितायां दुर्दृशमिमं स्थानं यदिदंहेतु इदंप्रत्ययः प्रतीत्यसमुत्पादः सर्वोपधिप्रतिनिःसर्गो पूर्वसंस्कारसमथधर्मोपच्छेदः तृष्णाक्षयो विगतरागो निरोधो निर्वाणं अहं च न परेषां देशयेयं परे खु मे न विभावयेन्सुः सो मे स्या विघातः ॥ यं नूनाहं एको अरण्यपर्वते तूष्णीभूतो विहरेयं । इमा च गाथायो भगवतो तायं वेलायं प्रतिभायेन्सुः ॥

प्रतिश्रोतगामिनं मार्गं गम्भीरं दुर्दृशं [मम] ।
न रागरक्ता द्रक्ष्यन्ति अलं दानि प्रकाशितुं ॥
कृच्छ्रेण मे अधिगतो अलं दानि प्रकाशितुं ।
अनुश्रोतं हि वुह्यन्ति कामेषु ग्रसिता नराः ॥

भगवां उरुविल्वायां विहरे नेरंजनायास्तीरे अजपालन्यग्रोधमूले अचिराभिसंबुद्धो ॥ अथ खलु भगवतो एकस्य रहोगतस्य प्रतिसंलीनस्य एवमेवंरूपश्चेतसः परिवितर्को उदपादि ॥ अधिगतो यद्यं मया धर्मो गम्भीरो निपुणो सूक्ष्मो दुरनुबोधो अतर्कितो अतर्कावचरो पण्डितवेदनीयो सर्वलोकविप्रत्यनीको अहं चे परेषां देशयेयं परे खु च न आजानेन्सु सो मे स्या परमं विघातं । यं नूनाहं

1. M gambhîra ayam̃ dharma mamâbhisam̃buddho purimasukhu° B °dho atakâva° M °rkâvacarâ paṇḍi ° yo sarve loke pra° B °loke pratyanîyo a°. — 2. BM alayorâ(M °yo nâ)mâ khalu punar ayam̃ âlayato âlaya(M °âtmacârato âra)samuditâ âlayârâmâyam̃ ca prajâyâm̃ âlaya(B °yâm̃ ârayara)tâyâm̃ âlayasamuditâyâm̃ du° M °sthânam̃ yam idam̃ hetum̃ imam̃ pratya ° tpâdo sarvo praṇidhiḥ pratiniḥ pûrva° B °dhi pratiniḥ pûrva° BM °ccheda tṛi° B °gatarogo° M °ham̃ ca tam̃ pareshâm̃° BM °yam̃ pareshu meṃ naṃ ° vayetsuḥ so me (M °ma) syâ vighâtaḥ(M °ghâto) | .

7[1]. M °ṇyapavane tû° BM °reyâ i°. — 7[2]. BM imâm̃ ca gâthâ(M °thâm̃) ca bha° B °gavatâ tâye ve° BM °bhâshetsuḥ | . — 9. M °rgam̃ ṇastriram̃ du° B °dudṛiçam̃ na° M °çam̃ ca râ°. — 10. BM °tum̃ kṛi°.

12. M °çrotrebi vubyati kâ°. — 13. M atha bhagavân uru° BM °yâm̃ hare nai° M °janâyâ tire ajapâlasya grodhamule ° buddhâ ‖ . — 14. BM °pratisam̃ḷayaṇasya ° m evarû(M °ru)pa cetasaḥ°. — 15. M °dhigatam̃ yad a° BM °mbhîro nipuno çûkshmo duranu(B °rani)bodho atarkito(M °avitarko) atakâvacaro paṇḍi° M °lokavitarkaṇîyo a° BM °ham̃ ca pare ° yam̃ pareshu(M °shu va)ca nam̃ ajânetsu(M °tsuḥ) | so° M °syâ pareshu vacanam̃ vighâtam̃ B °ghâṭam̃ | .

17. M yan nunâ°.

एको अरण्यायतने तूष्णीं विहरेयं ॥ अथ खलु महाब्रह्मा भगवत इदमेवरूपं चेतसो परिवितर्कमाज्ञाय येन शक्रो देवानामिन्द्रो तेनोपसंक्रमित्वा शक्रं देवानामिन्द्रमेतदवोचत् ॥ एतन्मारिष कौशिक भगवता अल्पोत्सुकताये चित्तं नमेति न धर्मचक्रप्रवर्तने । किं पुनर्वयं मारिष कौशिक येन भगवांस्तेनोपसंक्रमित्वा भगवन्तं याचेम धर्मचक्रप्र[363a]वर्तनाय ॥ साधु मारिषेति शक्रो देवानामिन्द्रो महाब्रह्मणो प्रत्यश्रोषीत् ॥ अथ खलु महाब्रह्मा शक्रो देवानामिन्द्रो सुयामो देवपुत्रो सुनिर्मितो च देवपुत्रो वसवर्ती च देवपुत्रो चत्वारश्च महाराजानो इत्येते दश यक्षाधिपतयो दश यक्षमहत्तरका अनेकयक्षशतपरिवारा अतिक्रान्ताये रात्रीये केवलकल्पं न्यग्रोधमूलं वर्णेनोभासयित्वा येन भगवांस्तेनोपसंक्रान्ता भगवतः पादौ शिरसा वन्दित्वा एकमन्ते अस्थान्सुः ॥ एकान्ते स्थितो महाब्रह्मा शक्रं देवानामिन्द्रमेतदवोचत् ॥ याच मारिष कौशिक भगवन्तं धर्मचक्रप्रवर्तनाय ॥

अथ खलु शक्रो देवानामिन्द्रो एकांसमुत्तरासंगं कृत्वा येन भगवांस्तेनोपसंक्रमित्वा भगवन्तं गाथाये अध्यभाषे ॥

उत्थेहि विजितसंग्राम पूर्णभरो त्वं अनृण विचर लोके ।
चित्तं हि ते विशुद्धं यथ चन्द्रो पंचदशरात्रे ॥

अथ खलु भगवां तूष्णी अभूषि नाधिवासेति शक्रस्य देवानामिन्द्रस्य धर्मचक्रप्रवर्तने ॥ अथ खलु महाब्रह्मा शक्रं देवानामिन्द्रमेतदवोचत् ॥ न खलु मारिष कौशिक भगवन्तो अर्हन्तः सम्यक्संबुद्धा एवं याचीयन्ति धर्मचक्रप्रवर्तनाये न च पुनस्तथागता अर्हन्तः सम्यक्संबुद्धा एवं याचिता धर्मचक्रं प्रवर्तयन्ति ॥ एवमुक्ते शक्रो देवानामिन्द्रो महाब्रह्ममेतदवोचत् ॥ त्वं मारिष महाब्रह्म तेषां पुरिमकानां

1. M °hmâ bhagavato i° B °cetasâ pari° M °jñâpa yena çakro ° ndro tenâpasañ ° krañ devânâñ indro e°. — 3. B eta mâ° M °meti ra dha°. — 4. B °gavâñs te° M °sañkrasitvâ°.

6. M °mo ca devaputro sunirmi ° jânâ i° M °dhipatayo daça yakshâ mahattarako | anekayakshaçatâparivâro ati° B °ttarakâ | anekayakshaçatâpari° BM °kevalañ kalpañ (B °lyañ) nyagrodhamû(M °mu)le varṇṇenâbhâ° M °sañkrânto bhagavato pâ ° sthâsuḥ B °sthânsuḥ e°. — 10. BM °çakram indra°.

11. BM °cakrañ pra°. — 12. B °kâñçam u° M °kṛitvâ yena bhagavâns teno° B °mitvâ bhagavanta gâ° M °bhâshena u°. — 14. M °grâmo pûrṇṇatyara atûṇo vi° B °rṇṇabhâra abhûṇo vi° BM °ke ci°. — 15. BM °ttañ ca te° BM °yathâ candro° M °râtra ‖.

16. M °gavân tûshṇi ° dhivâsati ça°. — 17[2]. BM °bhagavanto(M °vato) arhantaḥ sâmmyaksañbuddho evañ yâci° M °nâye | ye ca pu ° thâgato rhasamya° B °ntaḥ sañmya° M °buddho c ° rmacakra pravarttante | B °rttante e°. — 19. B °brahmâm e°. — 20. BM tvañ mârisha mahâbrahmâ teshâñ° M °kânâñ sañmya ° brahmañ yâvad bhaga° BM °rma(M °rmma)cakrañ pra° M °nâya ‖.

भगवानाह ॥ न भिक्षवः एतरहिं एव अन्यदापि मया भिक्षवो सदेवमानुषाये परिषाये धर्मं देशितं ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥

भूतपूर्वं भिक्षवः अतीतमध्वाने नगरे वाराणसीये काशिजनपदे कलभो नाम राजा राज्यं कारयति रौद्रो निष्कृपो साहसिको ॥ सो दानि अन्तःपुरे उद्यानभूमिं निर्धाविते अन्तःपुरिकाहि सार्धं पुष्करिण्यां उदकक्रीडां क्रीडति ॥ उत्पलपदुमपुण्डरीकसौगन्धिकानि भंजित्वा क्रीडित्वा रमित्वा प्रविचारेत्वा अन्तःपुरेण सार्धं रतिक्लान्तो ॥ ओसुप्तेन राज्ञा [378[b]] अन्तःपुरो तां उद्यानभूमिं प्रविचीर्णा ॥ क्षान्तिवादो ऋषि उत्तरकुरुद्वीपातो ऋद्धीये आगत्वा तहिं उद्यानभूमीयं आसति ॥ सो दानि अन्तःपुरिकाहि तहिं उद्यानभूमियं अण्वन्तीहि दृष्टो ॥ ता दानि ऋषिं महाभागं दृष्ट्वा प्रसन्नचित्ता पर्युपासन्ति भगवं देशेहि नो धर्मं ॥ सो दानि ऋषी तासामन्तःपुरिकानां धर्मं देशयति । दानकथां शीलकथां स्वर्गकथां पुण्यकथां पुण्यविपाककथां कामेषु भयं ओकारं संकिलेशं नैष्क्रम्यानुशंसाव्यवदानं संप्रकाशयति । दश कुशलां कर्मपथां सुखोदयां लोके देवमनुजानां शुक्लां सुखविपाकां तासां ऋषिप्रवरो प्रकाशयति ॥ ता दानि अन्तःपुरिका एकाग्रचित्ता ऋषिं पर्युपासन्ति ॥ राजा च प्रतिविबुद्धो अन्तःपुरं न पश्यति । सो दानि रुषितो असिं निष्कोशं कृत्वा अन्तःपुरं पदेन अन्वेषति । पश्यति च तावो अन्तःपुरिकावो ऋषिं अग्रतो कृत्वा निषण्णा ॥

सो दानि तमृषिं दृष्ट्वा भूयो अतिरिव रुषितो इमेन मम सर्वमन्तःपुरं दुष्टं । सो दानि रुषितो प्रदुष्टचित्तो तमृषिं पृच्छति । को त्वं ॥ ऋषि आह ॥ क्षा-

1. M na bhikshavo eshatarahim evaṁ | anya° B °kiṁ evaṁ a° M °kshavaḥ sa°. — 2[1]. M bhikshu âhaṁsuḥ B °nsuḥ a°. — 3. M °kshavaḥ. — 4. M °kshavo ati ° dhvânaṁ naga° BM °re kâçijanapade vârâṇasîye kara(B °ye kâla)bho° B °hasriko | . — 5. M °bhûmi ni° BM °vito antaḥ° M °sârddha u° BM °dakaṁ kriḍyâṁ kriḍati | (M °danti).

6. M utparadu° B °bhaṁjanto kri° M °bhaṁjitâ kri ° rivâretvâ a° B °tikrânto o° M °klântâ o°. — 8. B °ro taṁ u° M °ro tam udyâ ° pratitirṇṇo B °rnno kshâ°. — 9. M °ddhîyena âgatâ tahim udyânabhûmiyaṁ°. — 10. B sâ dâ° M °bhûmiyaṁ° BM °ṇvantihi° B °dṛishṭvo | M °dṛishṭâto | .

11. B °pâsantî bhagavâṁ de° M °gavân deçe° BM °hi yo dha°. — 12[1]. M °tâsântaḥ ° dharma de°. — 12[2]. M dânakathâṁ svargakathâṁ çilakathâṁ puṇyakathâṁ pu° B °pâkakathâṁ kâyeshu° BM °okarasaṁ°. — 14. M °khodayaṁ lo° BM °khavipâkaṁ tâ°. — 15. B te dâ° M °citto ṛi° BM °pâsitaṁ ‖ ·

16. B °raṁ paçyati | M °çyasi | . — 17[1]. M sâ dâ° BM °asi nishko(M °shkro)çaṁ° M °tvâ aṁntaḥ°. — 17[2]. B °ti ca tavo antaḥ° M °rikâvo tam ṛishi anugra°. — 19. M sâ dâni taṁm ṛi°. — 20[1]. B °cittâ ta° BM °ti ko°. — 20[3]. M ṛishir âha ‖ . — 20[4]. M °vâbismiṁ nandanto | B °vâdismiṁ nandantâ | .

न्तिवादी स्मि नन्दतां ॥ सो दानि भूयस्या मात्रया दुष्टो आह ॥ यदि क्षान्तिवादी प्रणामेहि अंगुलिं ॥ ऋषिणा अंगुली प्रणामिता ॥ राज्ञा असिपट्टेन ऋषिस्य सा अंगुलि च्छिन्ना ततो यथा माताये पुत्रप्रेम्नेन स्तनेषु क्षीरं प्रवहेय एवं तस्य ऋषिस्य ततो अंगुलितो क्षीरं प्रवहति ॥ तत्र सत्वमैत्रचित्तस्य तेन तस्य एकमेकाये हस्ताये सर्वपंचाङ्गुलीयो छिंनायो सर्वतो च क्षीरं स्रवति ॥ राजा भूयो पृच्छति ॥ किंवादी भवान् ॥ ऋषि क्षान्तीमेव व्याकरोति । क्षान्तिवादी स्मि नन्दतां ॥ तेन तस्य ऋषिस्य हस्तो छिन्नो ततो पि क्षीरं स्रवति ॥ राजा ऋषिं पृच्छति ॥ किंवादी भवान् ॥ ऋषि क्षान्तिमेव व्याकरोति । क्षान्तिवादी स्मि नन्दतां ॥ तस्य दानि एवमेव द्वितीयो पि हस्तो छिन्नो अंगुलीतो उपादाय यावत्कफोणिको छिन्नो ततो पि सर्वतो क्षीरं स्रवति च्छिन्नेछिन्नेहि ॥ राजा पृच्छति । किंवादी [379a] भवान् ॥ ऋषि क्षान्तिमेव व्याकरोति । क्षान्तिवादी स्मि नन्दतां ॥ एवं पादा पि अंगुलीषु उपादाय यावज्जानुकपर्यन्ता छिन्ना ॥ राजा पृच्छति । किंवादी भवान् ॥ ऋषि क्षान्तिमेव व्याकरोति । क्षान्तिवादी स्मि नन्दतां ॥ तस्य दानि एको कर्णो छिन्नो ततः छिन्नातो क्षीरं स्रवति ॥ राजा ऋषिं पृच्छति । किंवादी भवां ॥ ऋषिः क्षान्तिमेव व्याक-

1[1]. BM °bhûmyâ mâ° B °âhâ ya°. — 1[2]. M °vâdî praçâmehi aṁjaliṁ. — 2[1]. M ṛishiṇâ aṅgulinâ pra°. — 2[2]. B râjâ asi° M râja asipatreṇa rishisya sâ aṅguliṁ cchi ° shu staneshu kshîraṁ pravâhe° BM °ya | e° M °shisya tato 'ṅgulito kshî°. — 4. BM °stâye hastâto sarva(M °rve) paṁ° M °lî cchiṁnâyo sarvatro ca kshîraṁ prasra° B °raṁ çravati ‖.

6[1]. BM kiṁvâdi bhavân ṛi(M °vâṁ ṛi)shi°. — 6[2]. B °kshântîyena vyâ° M °kshântivâdîye yena vyâ° BM °ti kshâ°. — 6[3]. BM °vâdino smiṁ nandantâ(M °nto | ) te°. — 7[1]. B °ṛishi hastâ cchinnâ tato° BM °raṁ çravati ‖. — 8[1]. B °vâdi bha° BM °vân ṛishi°. — 8[2]. M °m evaṁ vyâ°. — 8[3]. BM °dismiṁ na° M °ndakâṁ | B °ndantâṁ tena ṛishisya varṇṇâ cchinnâ tato pi kshîraṁ prasravanti ‖ bhûyaḥ râjâ pṛicchati ‖ kiṁvâdi bhavân ṛishiḥ kshântim eva vyâkaroti | kshântivâdismiṁ nandantâṁ tasya°. — 9. M bhûyo râjâ pṛicchati ṛishiṁ kiṁvâdi bhavâṁ ṛishiḥ kshântivâdismiṁ nandantâṁ ‖ tasya karṇṇo cchinno tato pi kshîraṁ prasravati | bhûyo râjâ pṛicchati kivâdi bhavâṁ ṛishi kshântim evaṁ vyâkaroti | kshântivâdismiṁ nandantâṁ tasyedâni evaṁm evaṁ dvitîye pi hasto° B °dâni | evam e° BM °aṁguli(M °li)to u° B °tkalâvita cchinno ta° M °tkalovito pi cchinnâ ta ° raṁ prasravati cchinnehi cchinnehi ‖. — 10. B °cchati ṛishi kiṁ°.

11[1]. M °bhavân ṛishiḥ kshâ° B °vâṁ ṛi°. — 11[2]. M °m evaṁ vyâ° BM °ti kshâ°. — 11[3]. BM °vâdismiṁ na° M °ndantâṁ |. — 12. BM evaṁ pâdâṁ pi aṁgu(M °aṅgu)lî° B °ya jâva° M °paryyaṁtâ cchiṁnâ |. — 13[1]. BM °ti kiṁ°. — 13[2]. M °vâdi bha° BM °vân ṛishi°. — 13[3]. M °ntivâdim eva°. — 13[4]. BM °vâdismiṁ nandantâ(B °ntâṁ) |. — 14. BM °ni dvitîyo pi e° B °rṇṇo cchinnâ tataḥ° M °rṇṇo cchinnâto kshîraṁ prasra°. — 15[1]. B °ti kiṁ°. — 15[2]. M °bhagavân ṛishi kshâ°. — 15[3]. M °m evaṁ vyâ° BM °ti kshâ°.

रोति । क्षान्तिवादी स्मि नन्दतां ॥ तेन तस्य द्वितीयो कर्णो छिन्नो ततो पि क्षीरं प्रस्रवति अप्रदुष्टचित्तस्य ॥ भूयो राजा ऋषिं पृच्छति । किंवादी भवां ॥ ऋषिः क्षान्तिमेव व्याकरोति । क्षान्तिवादी स्मि नन्दतां ॥ तेन तस्य ऋषिस्य नासा छिन्ना ततो पि अप्रदुष्टस्य क्षीरं स्रवति ॥ भूयो राजा ऋषिं पृच्छति । किंवादी भवां ॥ ऋषि क्षान्तिमेव व्याकरोति । क्षान्तिवादी स्मि नन्दतां । यदि मे इमं शरीरं पट्टशतं निक्षिपेसि पीलुशतं छित्त्वा प्रदुष्टचित्तो तदापि क्षान्तिं न विजहेयं ॥

ऋषिणा खण्डखण्डकृतेन देवनागयक्षा क्षुभिता भूता निनादमकरेन्सुः सत्त्वा च महाभयं उत्त्रासं जनयेन्सुः । नैगमजानपदा भूतानां महाभयं दृष्ट्वा निनादं नदन्तां श्रुत्वा ऋषिं प्रणिपतित्वा क्षमापेन्ति ॥

यो ते हस्तां च पादां च कर्णनासां च छिन्दति ।
तस्य कुप्य महाब्रह्मे स्वस्त्यस्तु इतरा प्रजाः ॥

ऋषि आह ॥

यो मे हस्तां च पादां च कर्णनासां च छिन्दति ।
तस्याप्यहं न कुप्यामि प्रागेव इतरा प्रजाः ॥

देवनागयक्षगन्धर्वा आहन्सुः ॥ ऋषिं क्षान्तिवादिं उत्तेजेम इमं कलभस्य राज्ञो राज्यं सराष्ट्रं सजनपदं ऋडीकर्तुं न लभ्यति ।

उद्दह्यतु जनपदो स्फीतो राष्ट्रं विनश्यतु ।
ऋषिं यत्र विहेठेन्सुः क्षान्तिवादिमहिंसकं ॥

1[1]. B °vàdismiṁ nandaṁtâ te° M °dì smiṁ nandantâ | . — 1[2]. B °ttasya bhû°. — 2[1]. BM °ti kiṁ°. — 2[2]. M °bhavân ṛishi kshâ°. — 3[1]. M °m evaṁ vyâ° B °ti kshâ°. — 3[2]. M °vâdismiṁ nandantâ B °dì smiṁ nandantâṁ | . — 3[3]. B °dushṭhasya° M °raṁ prasra°. — 4. B °ti kiṁ°. — 5[1]. M °bhavân ṛishi°. — 5[2]. M °m evaṁ vyâ° B °ti kshâ°. — 5[3]. B °ntiṁvâdismiṁ nandantâ || M °vâdismiṁ nandakâ | .

6. BM °raṁ yatra çate nikshipesi(M °peti) pilaçataṁ(B °tâṁ) cchi° M °kshânti na°.

8. B ṛishiṇâṁ khaṇḍakhaṇḍaṁ kṛi° M °khaṇḍakhaṇḍaṁ kṛi° B °ninâdaṁm a° BM °retsuḥ sa° yetsuḥ | . — 9. B °daṁ dadantâṁ° M °daṁ dantânâṁ çru° mâyenti | . — 11. M ye te° sâṁ ca cchinnâ cchindanti | B °ndanti | . — 12. M °pyati ma° prajâ || . — 13. M ṛishir âha || .

16[1]. B °âhatsuḥ | . — 16[2]. BM ṛishi kshâ° B °uṭṭasema i° M °uttamemaḥ imaṁ kâlabba° B °sya râjñâ râjyaṁ° BM °ṛishi(M °shiṁ)karoti na°. — 18. BM °padâ sphîtaṁ râshṭraṁ(B °râsṭhaṁ) vi° M °naçyatu B °syatu ṛi°. — 19. B °ṭhetsuḥ | kshântiṁ mahinsakaṁ n' M °ntiṁ ahaṁ sarvaṁ.

उड्ह्यतु इमं नगरं कालवस्तुं करीयतु ।
ऋषिं यत्र विहेठेन्सुः क्षान्तिवादिमदूषकं ॥
उड्ह्यतु अयं राजा सामात्यो सपरिषदो ।
ऋषिं यत्र विहेठेन्सुः क्षान्तिवादिमदूषकं ॥

निगमजनपदा तं भूतानां महासंक्षोभं दृष्ट्वा भीता ऋषिं प्रणिपत्य याचन्ति ॥

यो ते हस्तां च पादां च कर्णनासां च छिन्दति ।
तस्य कुप्य महाब्रह्मे स्वस्त्यस्तु इतरा प्रजाः ॥

ऋषि आह ॥

मा भायथ युष्माकं न किंचित्पीडा भविष्यति ।
यो मे हस्तां च पादां [379b] च कर्णनासां च छिन्दति ॥
तस्याप्यहं न कुप्यामि प्रागेव इतरा प्रजाः ।
राजा स्वयंकृतकर्मस्य विपाकमनुभविष्यति ॥

ऋषि देवनागयक्षगन्धर्वाणां आह ॥

काले न वर्षति देवो बीजा वुत्ता न रोहंति ।
तापदग्धा वातहता . . . . . . . . . . . ॥
एवं अभू अतीतस्मिं ऋषि क्षान्तीय दीपको ।
तं क्षान्तीये स्थितं सन्तं काशिराजा अघातये ॥
तस्य कर्मस्य परुषस्य विपाको कटुको फलो ।
यं काशिराजा वेदेसि निरयस्मिं समर्पितो ॥

1. M °ddahyaṁtuṁ | i° B °yaturi°. — 2. B ṛishi ya° M ṛishiḥ ya° BM °thetsuḥ kshâ° M °vâdim adû°. — 3. B °ricchado | . — 4. B °ṭhetsuḥ kshâ° M °vâdiṁ adû°. — 5. M °gamajânapadâ° BM °shiṁ paṇi°.

7. B °itarâ pra° M °itaro prajâḥ | râjâ *et transpose les lignes* 8-11 *après la ligne* 4. — 8. M °âhaṁsuḥ | .

11. B °kuryyâmi prâ° M °pyâsi prâg eva itarî prajâ | evam abhû° (*l.* 16, *cf. l.* 7) B °itarî prâjâḥ || . — 12. B °kṛitasya karma°. — 13. M °yakshâ gandharvânâṁ âhaṁsuḥ | B °âhatsuḥ kâ°. — 14. M kâle bhavishyati teshâṁ kâle na va° BM °rshati vijâ-(M °ja) vuttâ na rohâ(M °ha)nti. — 15. BM na tu dhatthâvatâ(M °tâṁ) hatâ | .

16. M ṛi° (*l.* 9, *cf. l.* 11) BM °tîta(B °tite)smiṁ tasmin ṛishi° M °kshântiṁ yadîyataḥ | B °dîpato | . — 18. M °rmasya puru° B °lo yaṁ°. — 19. M °kâjirâ° B °nirayaṁ sa° M °nirayaṁ sa paṁcasa°.

एवं खु अधिवा . . . . चान्तिवादी ऋषी यथा ।
अंगेषु छिद्यमानेषु न सो कुप्यति कस्य चित् ॥

सो दानि काशिराजा कलभो अग्निना दग्धो अवीचिस्मिं महानरके उपपन्नो ॥

हस्तिनापुरे अर्जुनो नाम राजा सो साधुरूपां विदित्वा प्रश्नां पृच्छति यो शक्नो चित्तमाराधयितुं सो स्वस्तिना जीवन्तो मुच्यति यो न शक्नोति राज्ञो अर्जुनस्य प्रश्नव्याकरणेन चित्तमाराधयितुं सो राज्ञा अर्जुनेन स्वयं शक्तिना हन्यति ॥ हिमवन्तपार्श्वातो गौतमो नाम ऋषि हस्तिनापुरमागतो पंचाभिज्ञो चतुर्ध्यानलाभी महर्द्धिको महानुभावो कामेषु वीतरागो ॥ सो दानि ऋषी राज्ञा अर्जुनेन प्रश्नं पृच्छितो ऋषिणा तं प्रश्नं अत्र सविषमं व्याकृतं राजा च न विजानाति । तेन सो ऋषि गौतमो महाभागो स्वयं शक्तिना हतो सो पि राजा अर्जुनो अग्निना दग्धो शक्तिशूले महानरके उपपन्नो ॥

कलिंगेषु दन्तपुरं नाम नगरं । तत्र नारीकेलो नाम राजा राज्यं कारयति दुष्टो विवर्णो रौद्रो दारुणो साहसिको ॥ सो श्रमणब्राह्मणा निमन्त्रयित्वा शुनखेहि खादयति । तेहि च खाद्यंतेहि हसति ॥ सो पि अग्निना दग्धो महानरके उपपन्नो श्यामशवलेहि अहोरात्राणि खाद्यति ॥

कंपिल्ले नगरे ब्रह्मदत्तो नाम राजा राज्यं कारयति । तस्य राज्ञो ब्रह्मदत्तस्य पुत्रशतं कुमाराणां पुरोहितस्यापि यज्ञदत्तो नाम पुत्रो माणवको पुरोहितकुमारो ॥ दक्षिणापथातो इष्वस्त्राचार्यो शृणवति । कंपिल्ले नगरे राज्ञो ब्रह्मदत्तस्य

1. BM °dhivâ kshâ° M °ntiki vâdirishim̃(?) yathâ aṅge°. — 2. M aṅgeshu°. — 3. M °jâ kâlabho agnida° B °vîcismim̃°. — 4. BM °cchati(M °ti | ) yo çakro (M °kro râjñâ) cittam̃ ârâdhayitum̃(M °tum̃ svastinam̃ ârâdhayitum̃) sâ svasti° M °cyanti yo na çakno ° jño arjjuna praçna° BM °tum̃ | so° M °rjjuṇena°.

7. BM °ntaparçveto gauttamo° M °catuddhyânalâ° B °lâbhi maha°. — 8. M °ni ṛishiḥ râjñâ arjjuṇena° B °çnam̃ asam̃visha° M °tra sam̃visha° B °kṛitam̃ ‖ râ ° nâti te°. — 9. M tena so shiḥ | gauttamo ° ktinâ to so pi° BM °çûlena mahâ°.

12[1]. M kaliṅgeshu ° nâma B °ram̃ ta°. — 12[2]. M tatra nâlike° BM °ti | du ° siko so°. — 13. M °çravaṇo brâhmaṇo ni ° khâdâpeti | . — 14[1]. B tahim̃ ca° BM °dyam̃tena ha°. — 14[2]. BM °nno çâ(M °so)maçavalehi°.

16[2]. M °tto nâma putro hitaputro mâ° BM °ko purohitakumâro da°. — 18[1]. M °ṇâyathâ° B °ishvâstrâ° M °shvashṭrâvâryyo çṛiṇoti | B °ṇvanti | . — 18[2]. M kampillanaga° B °mâro çatâ sti | .

कुमारशतो स्ति । तत्र गच्छामि कंपिल्लं नगरं तं कुमारशतं इष्वस्त्रज्ञानं शिक्षापयिष्यामि ततो मे वृत्तिर्भविष्यति ॥ सो दानि कंपिल्लमागतो पुरोहितस्याल्लीनो पुरोहितेनापि राज्ञो ब्रह्मदत्तस्य [380a] अल्लापितो ॥ ब्रह्मदत्तो तमाह ॥ इदं मम कुमारशतं इष्वस्त्रज्ञाने शिक्षापेहि । अहं ते विपुलं वित्तं दास्यामि ॥ सो दानि इष्वस्त्राचार्यो इष्वस्त्रज्ञानं शिक्षापेति पुरोहितपुत्रो पि यज्ञदत्तो तत्रैव इष्वस्त्रज्ञानं शिक्षति तेहि कुमारेहि सार्धं ॥ ते दानि सर्वावन्तं इष्वस्त्रज्ञानं शिक्षिता सर्वेषां च इष्वस्त्रज्ञानेन यज्ञदत्तो विशिष्यते ॥ ते दानि शिक्षिता सराजिकाये परिषाये पुरतो महतो जनकायस्य दर्शनं देन्ति । कुमारशतं यज्ञदत्तस्य इषुं क्षिपंति यज्ञदत्तो पि मण्डलाग्रेण तानि इषूणि कुमारशतेन क्षिपियंतानि असंप्राप्तानि शरीरे सर्वाणि छिन्दति ॥ सर्वा सा सराजिका परिषा यज्ञदत्तस्य विस्मिता । तस्य दानि शरभंग इति नाम निर्वृत्तं अभूषि ॥

वाराणस्या उत्तरेण अनुहिमवन्ते साहंजनी आश्रमपदं मूलोपेतं पत्रोपेतं पुष्पोपेतं फलोपेतं कोद्रवश्यामाकभंगप्रासादिकशाकशालूकसंपन्नं अनेकेहि वृक्षसहस्रेहि पुष्पफलोपेतेहि शोभितं पानीयसंपन्नं ॥ तहिं काश्यपो नाम ऋषिः प्रतिवसति पंचशतपरिवारो सर्वे पंचाभिज्ञा चतुर्ध्यानलाभिनो महर्द्धिका महानुभावा ॥ शरभंगो पुरोहितपुत्रो तहिं साहंजनीमाश्रमपदं गत्वा काश्यपस्य ऋषिस्य सकाशे ऋषिप्रव्रज्यां प्रव्रजितो ॥ तेनापि पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्तेन विहरन्तेन युज्यन्तेन घटन्तेन व्यायमन्तेन चत्वारि ध्यानानि उत्पादितानि पंच चाभिज्ञा साक्षीकृता चतुर्ध्यानलाभी पंचाभिज्ञो महर्द्धिको महानुभावो शरभंगो ऋषि संवृत्तो सदेवके लोके अभिज्ञातपरिज्ञातकौमारब्रह्मचारी उग्रतपस्याश्रितो

1. M °vṛiddhir bha°. — 2. B °syâlino° M °ttasyâpi allîno ‖. — 3[1]. M °tto ttam âha ‖. — 3[2]. M imaṁ me ku° B °jñâna çi° M °çikshapehi | · — 4[1]. BM °mi so°. — 4[2]. B °caryâ taṁ° M °traiva ishvastrajñânaṁ çikshanti | tehi kumâreṇa sârddhaṁ B °kumâre sârddhaṁ te°.

6. BM °ni sarvantaṁ ° kshito(M °to | ) sarve°. — 7. M °kshito sa ° puruto ma° B °rçanaṁ de° BM °nti ku°. — 8. M °shuṁ kshipanti ya° B °shuṁ kshipaṁti | ya° M °ishunâṇi ku ° piyaṁ | tâni a ° ptâni sarîre sarvâṇicchiti | . — 10. M sarvâsâṁ sarâ ° smito B °smitâ ta°.

11. BM °bhaṁ sa iti° M °nivṛittaṁ°. — 12. BM °ṇasyâṁ u° M °janî nâm âçramaṁpadaṁ mûlopetaṁ phalopetam pushpopetaṁ patropetaṁ ko ° bhaṁgaprasâdikaçâkaçâlukasampannaṁ | ane° B °dikaçâkaçâsûkasaṁpannaṁ ane° M °pâniyasampannaṁ | . — 14. M °câbhijñâ caturdhyânalâbhino° BM °bhâvâ ça°.

16. B °haṁjaniṁ â° M °jitaḥ B °jito te° (*l.* 17). — 17. B °trâpararâtraṁ yâgarikâyoyoga° M °trâpararâtra jâ ° ntena pujya° BM °vyâyâma° M °ditâni tâni paṁca câbhijñâ sâ ° tto sadevalo° B °devako lo° M °bhijñâtaparijñâto kau ° brahmaṁcâ° B °gratapasyaçri°.

महानागो ॥ सो दानि दक्षिणापथगतो ॥ अस्मकेषु गोदावरी नदी । तस्या कूले कपित्थकं नाम आश्रमं साधेत्वा प्रतिवसति ॥

काश्यपस्य ऋषिस्य शिष्यो वत्सो नाम पंचशतपरिवारो अनुहिमवन्ते गंगाकूले आश्रमे प्रतिवसति सर्वे पंचाभिज्ञा चतुर्ध्यानलाभिनो कामेषु वीतरागा उंछवृत्तिका महानुभावा । तत्र दानि वत्सस्य ऋषिस्य वातव्याधि उत्पन्नो ॥ सो अनुहिमवन्ते शीतमसहन्तो दक्षिणापथं गतो गोवर्धनं नाम नगरं ॥ तत्र दानि दण्डकी नाम राजा राज्यं कार[380b]यति अधार्मिको अधर्मराजा दृष्टिविपन्नो विषयलोलः मूढो विपरीतदर्शी अमातृज्ञो अपितृज्ञो अश्रामण्यो अब्राह्मण्यो दारुणो निष्कृपो साहसिको ॥ तेन सो वत्सो ऋषि दृष्ट्वा पांशुना आक्रमापितो अहेठको अदूषको अनपराधी ॥ तस्य दानि राज्ये विघुष्टो नामाग्रामात्यो । तेन सो ऋषी ततो पांशुराशितो शीघ्रमेव जीवन्तो उत्खनापितो प्रणिपतित्वा च अनुक्षमापितो । भगवं न मे प्रियं यं राज्ञा साहसं कृतं । साधु भगवं क्षान्तुमर्हसि ॥ ऋषि आह ॥ अमात्य गच्छाहि इतो राज्यतो शीघ्रम्ति । अहं सप्तमं दिवसं कालं करिष्यामि मया कालगते इह राज्ये महादारुणभयं भविष्यति ॥ सो दानि अमात्यो वत्सस्य ऋषिस्य श्रुत्वा सपुत्रदारो सपरिवारो सर्वेण ज्ञातिगणेन सार्धं दण्डकिस्य राज्यतो अन्यं राज्यं संक्रमति ॥ सप्तरात्रस्यात्ययेन वत्सो ऋषि कालगतो समनन्तरकालगतस्य ऋषिस्य भूतानां महासंक्षोभं अभूषि तेहि सराज्यं रात्रीये भस्मीकृतं नगरं ॥

गंगाय च यमुनाया च अन्तरा काश्यपो ऋषि यज्ञं यजति । तत्र अष्टानवति

1[1]. BM °pathâga° B °to a°. — 1[2]. M asmâkeshu godâvali na° BM °dî ta°. — 1[3]. B tasya kûle kasittha° M tasya kule kapiṁsthakaṁ°. — 3. M °tso nânâma paṁcaça° BM °ro | anuhi ° gaṁgâkule â ° vasati | sarve° M °lâbhino ° vîtarâgâ dracchavṛi° B °vîtarâgâ drakshaṁ vṛi ° bhâvâ ta°. — 5[1]. M °ni vatsâṛishisya bhodavyo vyâdhir utpa° BM °nno so°. — 5[2]. M °çîtaṁ asa° B °thaṁ gataṁ go° BM °raṁ tatra°.

6. BM °yati | adhâ° M °lolo mûḍhâ vi ° mâtṛijño açrâmaṇyo abrahma° B °çrâmaṇyo abrahmaṇyâ dâ° M °nikṛipo sâ°. — 9. B tena sâ vatso° M °tso nâma ṛi ° âkrâmamâpi° B °kramâyito ahethake adû°. — 10[1]. BM °râjye nâmagrâmâtyo(B °mâbhyo) te°. — 10[2]. M °ṛishiḥ ta °çito çrighra° B °tkharâpito pra ° anumâpito bha°.

12[1]. BM °gavâṁ na° M °râjño sâ°. — 12[2]. M °gavâṁ kshântu° B °gavâṁ kshântum ahasi ||. — 13[1]. M ṛishir âha ||. — 13[2]. B amâtyâ ga° M amâtyo ga° BM °çighravan ti |. — 13[3]. M °lagataṁ na i°. — 14. B °ni amâtyâ vatsyasya ṛi° M °kisya râjyato a° BM °saṁkrâmanto°| .

16. M °trasyâsayena vatso ° kshobham abhûshi | te° BM °hi so râjâ râtri° M °kṛitaṁ sanagaraṁ ||. — 19[1]. M °nâva ca a ° ṛishir yajñaṁ°. — 19[2]. M °tâpasahasrâṇi sannipati° BM °lâbhino°.

तापससहस्रियो संनिपतितावो पंचाभिज्ञा चतुर्ध्यानलाभिनो सर्वे महर्द्धिका महानुभावा ॥

कलिंगेषु दन्तपुरं नाम नगरं तत्र उग्गतो नाम राजा सो तेषां राज्ञां दारुणां इमां महाभयां महाविपत्तिं दृष्ट्वा संजयन्तीमध्यगात् ऋषयो दर्शनाय ॥ संजयन्तीयं भीमरथो नाम राजा । सो पि तेषां राज्ञां विपत्तिं दृष्ट्वा संविग्नो सो तं कलिंगराजं पृच्छति । कहिं गमिष्यसि ॥ सो तमाह ॥ गमिष्यामि ऋषयो दर्शनाय ॥ हस्तिनापुरे अष्टमको नाम राजा राज्यं कारयति । सो पि तेषां चतुर्णां राज्ञां दारुणां विपत्तिं दृष्ट्वा त्रस्तो संविग्नो सो पि प्रस्थितो ऋषयो दर्शनाय ॥ शक्रो पि देवानामिन्द्रो तेषां चतुर्णां अधार्मिकानां अधर्मराज्ञां दृष्टिविपन्नानां निष्कृपानां दारुणानां साहसिकानां विपत्तिं दृष्ट्वा आगतः महता देवतानुभावेन ऋषयो दर्शनाय ॥

पंच शतानि हिमवन्तपार्श्वे
मूलफलाहारा ऋषयः पर्शेन्सुः ।
उंछरता तापसा शुद्धलूखा
सुसंयता उग्रतपा उदारा ॥
ए[381ᵃ]को अत्र आसी ऋषि वत्सगोत्रो
वातेहि आबाधेहि कृशो अभूषि ।
हिमवन्तपार्श्वे असहन्तो शीतं
वनातो सो ओसरे राजधानीं ॥
तत्र अभूद् दण्डकी नाम राजा
अधर्मचारी . . . . निविष्टो ।
दृष्टिं ग्रहेत्वा विपरीतसंख्यो

3. M °tra udgato nâma râjâ so saṁjayaṁtî madhyena ṛishayo darçanâya âgacchati | teshâṁ° B °so saṁjayatî madhyena ṛishayo darçanâya ‖ ‖ so âha ‖ râjâ bhimaratho ahaṁ pi gamishyâmiti ‖ ṛishayo darçanâya âgacchati ‖ teshâṁ° BM °râjñâṁ nânâ imaṁ mahau-(M °had)bhayaṁ mahâvi ° shṭvâ saṁja°. — 4. M °saṁjayântîyaṁ° BM °jâ so°. — 5. M °pattiṁ dṛi° B °cchati ka°.

6³. M °nâya ‖ so âha ‖ râjâ bhimaratho ahaṁ pi gamishyâmiti hasti°. — 7¹. B °shṭanako°. — 7². M °turṇṇâ râ°. — 8. M °pi devânâmm indro teshâṁ varṇṇâṁ a° B °rṇṇâṁ âdhâ° BM °shṭvâ âgataḥ(M °to) ṛishayo darçanâya(B °ya | ) maha° M °devânu°.

12. BM °rçvena mû ° çyetsuḥ dra°. — 14. B dracchiratâtâpa° M draṁcchiratâ tâpasâ çuddhalukhâ svayaṁtâ ugra° B °khâ svasaṁjanatâ ugra° BM °dârâ e°.

16. M eko tra âsi | ṛi° B °âsi ṛi°. — 18. BM °hanta çi° M °dhâniṁ B °niṁ ta°. — 20. M °d dantaki râ° B °kî râ° M °câriṇî nivishṭo B °ri nirvishṭo dṛi°.

22. M °ritasâṁkoso tam ṛi° B °ritasâkoso | so° BM °nâ akrametsuḥ ta(M °tsus ta)°.

सो तं ऋषिं पांशुना आक्रमेति ॥
तस्यैव राज्ञो अभु अग्रमात्यो
नामेन विघुष्टो अभूषि राज्ये ।
सो तं ऋषिं उड्डरिय अवोचत्
न मे प्रियं साधु चमाहि ब्रह्मे ॥
वत्सो ऋषी तं अवच अमात्यं
गच्छ इतो मा ते सिया अनर्थः ।
सप्तराचीयेन इतो त्ययेन
महद्भयं भविष्यति घोररूपं ॥
ऋषिस्य च कालगतस्य तत्र
भूतानां संचोभो महा अभूषि ।
तन्तस्य राज्यं सधनं सराष्ट्रं
एकाय राचीय करेन्सु भस्मं ॥
अथाब्रवीच्छरभंगो तपस्वी
समागता ऋषयो . . . . ।
न साधुरूपं कृतं दण्डकीना
गच्छाम वत्सस्य करोम पूजां ॥
अथाष्टमको भीमरथो च राजा
कलिंगराजा अथ उद्गतो च ।
संविग्ना संहृष्टा इदं उवाच
गच्छामथ ऋषयो दर्शनाय
पृच्छामथ येन हि तं भवेय ॥
ते दानि अल्लीना चयो नरेन्द्रा
संतुष्टा संविग्ना ऋषीणां समीपं ।

2. B °jño abhû | agra° M °jño abhûd agramâtyo nyamena vidyushṭo abhûshi | râ° B °jye so°. — 4. BM °riya abodha na me°.

6. B vatsâ ṛi° M | vatmo mṛishî° B °ccha | i ° nartheḥ M °narthe | . — 8. BM saptânarâtrî(B °tri)yena i°. — 10. B ṛishi ca kâ° M ṛishiçca kâ ° kshobha abhûshi | B °shi ta°.

12. B °dhane sarâ° M °dhana sarâ ° rensuḥ bha° B °retsu bha° BM °smâm̃ ca ‖ . — 14. B °vîcchanabham̃ so ta° M °bham̃ so ta ° gatâ vishaye | B °gato vishayo | .

16. BM na sâdhurûpâya ° kînâ âcâryaḥ(M °ryyo) âga°. — 18. BM °kalim̃ga(M °linga)râjâ | atha uma(M °udga)ko ca sam̃vi°. — 20. B °gnâ sam̃dṛishṭo idam uvâ° M °idam uvâ° BM °gacchamatha ṛi° B °nâya | pṛi°.

23. B °llîno tra° M °shṭâsi sam̃vigno ṛi° BM °mipam̃ a°.

अलंकृता कुण्डलिनो सुवस्त्रा
वेडूर्यमुक्तात्सरखड्गपाणी ॥

ऋषयो आहन्सुः ॥

राजा ऋषिं भाषथ के व यूयं
कथं वो जानन्ति मनुष्यलोके ॥

राजानो आहन्सुः ॥

अष्टमको भीमरथो च राजा
कलिंगराजा पुनरञ्जतो यं ।
सुसंयता ऋषयो दर्शनाय
इहागता पृच्छितुकामा प्रश्नां ॥

ऋषयो शक्रं अन्तरीक्षगतं पृच्छन्ति ॥

वेहायसं तिष्ठसि अन्तरीक्षे
ओभासयं पञ्चदशीव चन्द्रो ।
पृच्छाम ते देव महानुभाव
कथं ति जानन्ति मनुष्यलोके ॥

शक्रो आह ॥

देवा मे जानन्ति शचीपतीति
मघवन्ति मे आहु मनुष्यलोके ।
सो आगतो देव महानुभाव
सुसंयतां ऋषयो दर्शनाये ॥

1. BM °linâ su° B °vaidûrya° M °muktâḥ tara ° ḍgapâṇi || B °ḍgapâṇi ṛi°. — 4. B râjaṁ ṛishiṁ âbhâ° M râjan ṛishiṁ mâ bhâyatha | ke yû° B °kena yû° M °thaṁ bho jânaṁti ma°.

6. B râjâ âhatsuḥ || . — 7. B °tho ṇâ yaṁ kaliṁ° M °tho nâyakaṁ kaliṁ° B °to yaṁ su°. — 9. M susaṁyato ṛi° B °saṁyato risha ° tukâma pra° BM °çnâṁ ṛi°.

11. M °shayoḥ ça ° rikshe ga° BM °cchati | . — 12. M °hâyaṁsaṁ ti ° çi ca radro | B °çi ca candro pri°. — 14. M °bhâvo kathati jona ° nushyâloke | .

16. M çakra âha | . — 17. M devo me jâ ° pati iti maghavânti me â° B °tîti || maghavânti me âhuḥ | ma ° ke so°. — 19. M °bhâvaḥ su° BM °saṁyatâm risha°.

ऋषयो आहन्सुः ॥

पुरंदरो भूतपती पुनर्यां
देवानामिन्द्रो चिद्शानमीश्वरो ।
सो आगतो असुरगणप्रमर्दको
ओकाशमाकांक्षति प्रश्नं प्रष्टुं ॥
दूरा श्रुता मो ऋषयो समागता
सुसंयता वो ऋषयो स्म आगता ।
पादवन्दका आर्यप्रसन्नचित्ता
अयं सर्वलोके मनुष्यश्रेष्ठो ॥

ऋषि आहन्सुः ॥

ऋषीणां गन्धो चिरभाविताना
उपवायति एरितो मारुतेन ।
इतो अपक्रम्य निषीद शक्र
न एष गन्धो सुसहो देवतेहि ॥

शक्रो आह ॥

ऋषीणां गन्धो चि[381b]रभाविताना
उपवायति एरितो मारुतेन ।
शुचिः सुगन्धो चिरभाविताना
न एष गन्धो प्रतिकूल मह्यं ॥

ऋषयो आहन्सुः ॥

अयं ऋषिः सरभंगो उदारो
यतो जातो विरतो मैथुनातो ।

2. M purandaro° BM °tî punâyaṁ de° M °m îçvaraḥ. — 4. M °okâsam âkrâṁkshati° B °kshati | praçnaṁ prashṭum dû°.

6. B °râ sutâ mo ° saṁyatânâṁ vo rishayo samâgatâ | M °samyatânâṁ vo ṛishîṇâṁ | . — 8. B susaṁyatâ vo rishîṇâṁ pâda° BM °ndakâ vo â ° citto yaṁ sa ° ke tvaṁ ma° M °çreshṭo | B °çreshṭa || . — 10. M ṛishayo âha | B °hatsuḥ || .

11. BM °gandha ci° B °upâvânyati eritâ | mâ° M °upâyati etaritâ mâ° B °na i°. — 13. B °aprakra ° çakreṇa e° M °çakraṁ na esha gandhâ su° B °gandhâ su°.

16. B °gandhe ci° M °gandha ci ° upâyati uttarita mâ° B °ti | etarite mârutena çu°. — 18. M çuciṁ sugandhaḥ ci ° nâṁ sugandhati vimalena eshaḥ gandha pra° B °nâṁ sugati sumalo na e ° kûlaṁ ma° M °kûla mokshaṁ | ayaṁ°.

21. M °ṛishi sa° B °udârâ yato jâto cira° M °yataḥ jâ° BM °nâto â°.

आचार्य बुद्धो सुविनीतरूपो
सो विह प्रश्नानि वियाकरोतु ॥

[ऋषयो आहंसुः ॥]

वाशिष्ठ प्रश्नानि वियाकरोहि
याचन्ति त्वां ऋषयो साधुरूपा ।
एषो हि धर्मो मनुजेहि पण्डिते
यं वृद्धमाकांक्षति तस्य भारो ॥

[शरभंग आह ॥]

यत्किंचि प्रश्नं मनसाभिकांक्षथ
कृतावकाशानि वदेथ यूयं ।
अहं वो प्रश्नानि वियाकरिष्यं
दृष्टं हि मे तत्वमिदं परं च ॥

राजा दानि पृच्छति ॥

यथा अभूद्दण्डकि नालिकेरो
अर्जुनो च कलभो च राजा ।
तेषां गतिं ब्रूहि सुपापकर्मणां
कुत्रोपपन्ना ऋषयो विहेठिय ॥

शरभंगो आह ॥

यथा अभूद्दण्डकि नालिकेरो
अर्जुनो च कलभो च राजा ।
तेषां गतिं बुध्य सुपापकर्मणां

1. M °po sâviha ° viyâvaro° B °ni viyovaro° BM °tu ‖ vâ°. — 4. BM °çishṭo pra ° karo(B °rohi) yâvanti tvam̃ ṛi° M °dhurupam̃ | B °rûpo e°.

6. M °dharmam̃ ma ° ṇḍito yam̃° B °ṇḍitâ | yam̃° BM °bhârâ yat kim̃°. — 9. BM °cin praçnam̃ ° tha | kṛi° B °tâ ca kâni va° BM °yam̃ a°.

11. BM °praçnam̃ viyâm̃(M °vipâ)ka° B °shyam̃ | dṛi° BM °me tatva idam̃ ca pa°. — 14. M °ṇḍaki nâlikelo arjju°.

16. BM °tim̃ kruhi° M °supâyakarmaṇâm̃ | kṛitopapannâ ° heṭhayaḥ | B °heṭhiyo ‖. — 19. M °ṇḍaki nâlikelo arjju° B °rjunâ ca ka°.

21. M °tim̃ supâ° B °budhyati su°.

यत्रोपपन्ना ऋषीणां विहेठका ॥
ऋषी पांशुनाक्रमि येन दण्डकी
उच्छिन्नमूलो सधनो सराष्ट्रो ।
कुक्कुलं नाम नरकं प्रपन्नो
स्फुलिंगजाला व ततो समुच्छ्रयाः ॥
अर्जुनो नरकं शक्तिशूलं
अधोशिरो ऊर्धपादो प्रपन्नो ।
आंगीरसं गौतमं हेठयित्वा
ऋषिं तपस्विं चिरब्रह्मचारिं ॥
यो संयतां प्रव्रजितां विहिंसे
अन्नेन पानेन निमन्त्रयित्वा ।
तं नालिकेरं शुनखा परत्र
प्रसह्य खादन्ति विचेष्टमानं ॥
यो खण्डसो प्रव्रजितं प्रघातयेद्
ऋषिं चान्तीवादिं श्रमणं अदूषकं ।
कलभो अवीचिं नरकं प्रपन्नो
महाभितापं कटुकं भयानकं ॥
एतादृशानि नरकानि श्रुत्वा
दृष्ट्वा च राज्ञानि समूहतानि ।
धर्मं चरे श्रमणब्राह्मणेषु
एवंकरो स्वर्गमुपेय स्थानं ॥

राजानो आहन्सुः ॥

यन्ते अपृच्छे इममभिभवेसि
अन्यन्ते पृच्छामि तदिह ब्रूहि ।

2. BM ṛishî(B °shi) pam̃ca vatsâ â° M °krami so na daṇḍa° B °krami so ne daṇḍaki u°. — 4. B kukulam̃° M kukkule nâ ° nno sphalim̃°.

6. M °çiro urddhapâ ° pannâḥ. — 8. B âm̃gira° M am̃girasam̃ gauttamam̃ ° pasvî ci°. — 10. M yo | sam̃yatâ pra° B °jito vi°.

12. M °kelo sunakhâ pa° BM °ratram̃ prasahya sukhâda ° nam̃ yo°. — 14. B °so vravrajitâm̃ praghâ° M °jitâm̃ praghâtaye | ṛi° BM °kshântivâ° M °çravaṇam̃°.

16. B °vîcikam̃ na° M °vîcikam̃ kalabho avîcikam̃ na° hâvipâkam̃ ka°. — 18. B °dṛiçâ na° M °dṛiçâm̃ na° BM °tâni dha°. — 20. M °çravaṇa° BM °evam̃ sva° B °m upayam̃ sthâ°.

23. M yam̃ te apṛiccheyam̃ abhibhavasi a ° mi yad ihâ kruhi B yan te apṛiccham̃ ham̃ abhibhayasi anyan te tadihâ kruhi kim̃°.

किं सो वधित्वा न कदाचि सोचति
कस्स प्रहाणिं ऋषयो वर्णयन्ति ॥

शरभंगो आह ॥

क्रोधं वधित्वा न कदाचि सोचति
ईर्ष्याप्रहाणिं ऋषयो वर्णयन्ति ।
सर्वस्य उक्तं परुषं क्षमेया
एतं बलं दुर्जयमाहु सन्तो ॥

राजानो [382a] आहन्सुः ॥

शक्यं हि छिन्नं वचनं क्षमेतुं
श्रेष्ठस्य वा अथ वा सदृशस्य ।
कथं हि हीनस्य वचं क्षमेया
आख्याहि मे कौण्डिन्य एतमर्थं ॥

शरभंगो आह ॥

भया हि श्रेष्ठस्य वचः क्षमेन्ति
संरंभहेतोः पन सदृशस्य ।
यो चेह हीनस्य वचं क्षमेया
एतद्बलं उत्तममाहु सन्तो ॥
कथं जानेथ चतुच्छन्नरूपं
सदृशं च श्रेष्ठं अथ वा च हीनं ।
विरूपरूपेण चरन्ति सन्तो

1. BM kim̃ | so vadi(M °vandi)tvâ ° dâcit soca° M °hâniṁ ṛi ° yati | . — 4. BM çreshṭha(B °shṭa)sya va ca(M °ca na) santi kro ° dâcicchocati | îrshyâ(M °irshyâm̃)pra° M °hâniṁ ṛi°.

6. BM °sya yukto purusham̃ kshami(M °mî)yâ° M °hu sam̃to || . — 9. B çakshmâhi° M çlakshṇâhi° BM °tum̃ | çre° M °tha vâ dṛiçasyâ.

11. B °cam̃ ksheme° M °cam̃ kramayânitâni âkhyâhi me konya ° tam a B °kauṇḍi e°. — 13. M çara°. — 14. M bhavâm̃ çre° B bhayâcchreshṭasya° M °vacanaḥ kramanti sarabhahetoḥ sadṛi° B °kshamanti sam̃rambhaheto çadṛiçasya ya°.

16. B yâ ce° M yâveha °sya cam̃krama | yân etad varam̃ u° B °yâ || e° M °sanno || . — 18. BM râjâ(M °jâno) âhansuḥ || kathaṁ jânecchatha(M °ccheva) macchavarû° B °çreshṭam̃ a° M °çreshṭam̃ | a° BM °nam̃ vi° — 20. BM °nto || ṭasmâ° M °sya ca cam̃krameyâ B °sya tacam̃ kshakshameyâ na°.

तस्माद्धि सर्वस्य वचं क्षमेया ॥
न एतमर्थं महती पि सेना
सराजिका युध्यमानी करेया ।
यं क्षान्तिमां सत्पुरुषो करोति
क्षान्तीमता वोपसमन्ति वीरा: ॥

राजानो आहन्सु: ॥

सुभाषितन्ते अनुमोदयामो
अन्यन्ते पृच्छामि तदिह ब्रूहि ।
कतिविधं शीलवन्तं वदेसि
कतिविधं प्रज्ञावन्तं वदेसि ।
कतिविधं सत्पुरुषं वदेसि
कतिविधं च श्रिरि न जहाति ॥

सरभंगो आह ॥

कायेन वाचाय सुसंवृतो य:
मनसा च नो किंचि करोति पापं ।
न चापि लोके अहितं करोति
तथाविधं शीलवन्तं वदामि ॥
सर्वाणि अर्थानि पुनर्विनश्यन्ति
कालागतं च न प्रयाति अर्थं ।
न चात्महेतो . . विधं चरेया
तथाविधं प्रज्ञावन्तं वदेमि ॥
यो वै कृतज्ञो कृतविद्दि धीरो
कल्याणमित्रो दृढभक्तिरूपो ।

2. B °hatiṁ pi° M °senâḥ sa ° yuddhamâ° B °karayâ | . — 4. M ya kshântimâ satpu° BM °rushâ karonti kshântiṁmatâ vo pra(B °vyopa)sa°.

7. M °shitaṁ te ° yamaḥ anya te pṛi° B °yâme | anya ° d idâ kruhi | M °d idâniṁ kruhi. — 9. M °çîlaṁvantaṁ vadâmi kati° B °jñâvantaṁ | taṁ deçi kati°.

11. B °shaṁ vâ deçi kati° M °shaṁ vadesi | katividhaṁ sa çiri na° B °najjahâti ‖ . — 13. M çara°. — 14. BM °kiṁcit karo° B °paṁ na°.

16. B °hita ka° M °vantaṁ karoti | . — 18. BM °kâlaga° M °taṁ ca prâyati | arthaṁ B °na prâyeti | arthaṁ na°. — 20. BM °to vidhaṁ°.

22. BM yo cet kṛitajñâ yo cet kṛitavedino vo so ka° B °rûpo vya°.

व्यसनस्मिं सत्कृत्य करोति कार्यं
तथाविधं सत्पुरुषं वदेमि ॥
एतेहि धर्मेहि त्रिहि यो उपेतो
संमोदको सखिलो श्लक्ष्णवाचो ।
सगारवो सप्रतीशो हिरीमां
तथाविधं व शिरि न जहाति ॥

राजानो आहन्सुः ॥

सुभाषितन्ते अनुमोदयाम
अन्यन्ते पृच्छामि तदिह ब्रूहि ।
शीलप्रज्ञाशिरिकृतज्ञतानां
किं व नु श्रेष्ठं कुशला वदन्ति ॥

सरभंगो आह ॥

प्रज्ञां खु श्रेष्ठां कुशला वदन्ति
नक्षत्रराजा इव तारकाणां ।
शीलं शिरि चैव कृतज्ञता च
प्रज्ञोपका तु प्रवरा भवन्ति ॥

राजानो आहन्सुः ॥

सुभाषितन्ते अनुमोदयामः
अन्यन्ते पृच्छामि तदिह ब्रूहि ।
किमाचरन्तो किमासेवमानो
कथंकरो प्रज्ञावां भोति मन्ये ॥

1. M °sanesmim̃ ° kârya tathâ°. — 3. M °rmehi trîhi yo ° vâcâ | B °vâcâ sagâ°. — 5. M sagauravâ sapra° B °ravâ sapra ° hirimâm̃° M °hirimân tathâ° BM °dham̃ vâ çi° B °najjahâti ‖.

8. M °yâmaḥ ayan te° B °yâma | anya° BM °ha kruhi ‖. — 10. BM çîlasya prajñâya çiri(M °ri)kṛitasajñâtâ kim anuçreshtam̃ ku°.

12. M çara°. — 13. BM °çreshṭâm̃ kuçalâm̃ va ° nâm̃ çi°. — 15. B °çirim̃ cai° M °çirim̃ caivam̃ kṛitam̃jñatâm̃ ca âjñâpakâ pra° B °jñatâm̃ ca âjñopakâ pra°.

17. M °jâ â°. — 18. B °maḥ anyam̃ pṛi° M °maḥ anyaḥ pṛi ° d ida kruhi B °ha kruhi ‖. — 20. M °nto kim̃ âsava° B °prajñâm̃ vâ bhonti ma° M °vâm̃ bhâshitam anyo ça°.

सरभंगो आह ॥

सेवन्तो वृद्धा निपुणो बहुश्रुतो
ओग्राहको च परिपृच्छमानो ।
शृणन्तो सत्कृत्य सुभाषितानि
एवंकरो प्रज्ञावां भोति मन्ये ॥
सो प्रज्ञानां कामगुणं विपश्यति
दुःखं अनित्यं [382^b] विपरिणामधर्मं ।
एवं विपश्यं प्रजहाति छन्दं
महद्भयेषु वधकोपमेषु ॥
सो वीतरागो सुविनीतदोषो
मैत्राभावनां भावये अप्रमत्तो ।
मैत्रेण चित्तेन हितानुकम्पी
एवंकरो स्वर्गमुपेति स्थानं ॥
सुभाषितार्थं इदमेवरूपा
गाथा इमा सत्पुरुषेण भाषिता ।
यो पि इमां सम्म समाचरेया
अदर्शनं मृत्युराजस्य गच्छे ॥
सुभाषितत्थं अनुमोदमाना
ब्रह्मा च इन्द्रो त्रिदशा च देवास् ।
ते वेगजाता मुदिता कृतांजली
गच्छेन्सु तद्देवपुरं यशस्विनो ॥
महार्थियं आगमनं अभूषि
अष्टमकस्य भीमरथस्य चैव ।

1. M çara°. — 2. M °nipuno ba° B °nipunar ba° BM °çrutânâm̃ çîlaçirim̃ ogrâ° B °mânâm̃ | . — 4. M çriṇvanto ca sa° B °nto so sa ° bhonti manyo | M °manyo | .

6. BM °guṇo vi° B °ti | duḥ° M °pariṇâ°. — 8. B °koyameshu | . — 10. B °trâsanam̃ bhâ° M °trâsana bhâ°.

12. M °nukam̃pi e° B °kampi e° BM °m upati°. — 14. M subhâshitârtha ida ° rûpâm̃ gâthâm imâm̃ sa° B °thâ imâm̃ sa°.

16. BM yo vi mâm̃ skandha samâ ° yâ âda ° cche su°. — 18. BM °shitam̃ ‖ te a ° devâs ta°. — 20. B ta ve° M ta vegajânâ | adi ° jali gacchensu devâḥ devapu° B °cchetsus tad eva pu°.

22. BM kim arthiyam̃ â(M °yam â)ga° B °shî ‖ ashṭhamaka° M °caivam̃.

कलिंगराजस्स च उन्नतस्स
सर्वैषां वा कामरागो प्रहीणो ॥

राजाणो आहन्सुः ॥

एवं हि एतं परचित्तवेदि
सर्वैषां नो कामरागो प्रहीणो ।
करोहि ओकाशमनुग्रहाये
यथा गतिन्ते अभिसंभुणेम ॥

सरभंगो आह ॥

करोमि ओकाशमनुग्रहाये
सर्वैषां वो कामरागो प्रहीणो ।
फरेथ कायं विपुलाय प्रीतये
यथा गतिं मे अभिसंभुणेथ ॥

राजाणो आहन्सुः ॥

सर्वं करिष्याम तवेदं वाक्यं
यं यं च नो वक्ष्यसि भूरिप्रज्ञ ।
फरेम कायं विपुलाय प्रीतिया
यथा गतिन्ते अभिसंभुणेम ॥
कृता च वत्सस्य ऋषिस्य पूजा
गच्छन्तु ते ऋषयो साधुरूपा ।
ध्याने रता आश्रमे आवसेथ
एतं धनं प्रव्रजितस्य श्रेष्ठं ॥

3. B râjâ â° M °âhaṁsuḥ ‖. — 4. BM °paricittavedi sarveshâṁ kâ° M °hîno | B °ṇo ka°.

6. BM °hi ekâ(M °kâṁ)çam anubodhanâye | yathâgatan te° M °bhuṇanti. — 8. M çara°. — 9. BM °mi ekâṁçam a°.

11. BM hare° M °tha kâmaṁ vipulâ ca prî °gataṁ me° B °gatî me° M °ṇemah ‖. — 13. M râjâ âhaṁsuḥ ‖. — 14. M °vâkya yaṁ paṁcamâ va° B °ca mâṁ va° BM °si | bhûyaḥ prajñâ ha°.

16. BM hare° M °kâmaṁ vi° M °yâ yatothâgatan te abhiṇaṁbhu° B °gataṁ te a°. — 18. M °vatsyasyashṭa shi° B °gacchaṁtu ca ṛisha° M °ntu ca ṛishayo so sâ° BM °pâ dhyâ°. — 20. M °âvasatha | e ° çreshṭaṁ |.

पूर्वेनिवासं भगवां पूर्वेजातिमनुस्मरन् ।
जातकमिदमाख्यासि शास्ता भिक्षूणमन्तिके ॥
ते च स्कन्धास्ते च धातवो तानि आयतनानि च ।
आत्मानमधिकृत्य भगवानेतमर्थं वियाकरेत् ॥
अनवराग्रस्मिं संसारे यत्र मे उषितं पुरा ।
अनाथपिण्डिको शक्रो देवराजा शचीपतिः ।
कलिंगराजा आनन्दो शारिपुत्रो च अष्टको ॥
अथ भीमरथो राजा मौद्गल्यायनो महर्द्धिको ।
सरभंगो अहं अभूषि एवं धारेथ जातकं ॥

तदापि मया सदेवमानुषाये परिषाये धर्मं देशितं एतरहिं पि मया सदेवमानुषाये परिषाये धर्मं देशितं ॥

सरभंगजातकं समाप्तं ॥

वाराणस्यां त्रिंशगोष्ठिका उद्यानभूमिं निर्गता एषां एकस्य माता कालगता सा देवीहि उपपन्ना । ताये धर्मचक्रप्रवर्तने धर्मो अभिगमितो ॥ सा तं पुत्रं स्म-[383ᵃ]रति । तस्य दानि सर्वेहि तेहि गोष्ठिकेहि पुत्रस्य प्रेक्षकेन पुत्रप्रेक्षं ॥ वाराणस्यां काशिका च नाम गणिका उपलब्धा । काशिका च केन कारणेन सा गणिका काशिका त्ति वुच्चति ॥ तादृशं सुकर्मविपाकाभिनिर्वृत्तं शुभं रूपगतं । सा सर्वां काशिभूमिं चमति तस्मात्सा काशिका ति वुच्चति ॥ उपार्धकाशिका तस्या एव काशिकाये भगिनी तस्या पि पूर्वकर्माभिनिर्वृत्तं शुभं रूपगतं यथैव काशिकाये

1. M °nivâsa bha°. — 2. B °çântâ bhi° M °bhikshuṇa santi°. — 3. B te ca skaṁdhâs te° M °dhâtava tânyâya° B °vo tanyâya°. — 4. BM °rthaṁ vyâka°. — 5. B °tra me tushi°.

6. BM °kro ca râ° M °jâ saci°. — 7. BM °çâlipu°. — 8. BM °mauṅgalyâ°. — 9. M çara°. — 10. M tadâpi mayâ sadevamânushâye parishâye dharmma deçitaṁ | e° dharma de°.

12. M iti çrîmahâvastuavadâne çarabhajâ° B sarabhajâ°. — 13. M atha vâ° çadgoshṭikâ u° B °bhûmi ni° M °bhûmiṁ nirgato e° BM °nnâ tâ°. — 14[1]. M °cakraṁ pravarttano dharma a° B °ne dharmâ a° BM °to sâ°. — 14[2]. B °rati ta°. — 15[1]. BM tasya dâ° goshṭike°. — 15[2]. BM °çiko ca° labdhaṁ.

16. BM kâçiko ca ke° M °ṇikânti vu° B °çikânti vu°. — 17[1]. B °çaṁ sakarma° M °çaṁ carkarma° BM °çubharûpagataṁ sâ°. — 17[2]. BM sâ sarvam kâçibhû° M °tsâ kâçika ti vu°. — 18. BM evaṁ kâçikâṁ(B °çikaṁ) dâni uparddha° M °evaṁ kâçikâye bha° BM °rmâbhiḥ nirvṛi° M °taṁ | yathaivaṁ kâçi° B °taṁ yathai kâçi° BM °lo puraso eko akshi te°.

पिङ्गलो पुनरस्या एको अच्चि । तेन सा कारणेन उपार्धकाशिं चमति ॥ तेहि गोष्ठिकेहि सा काशिका वुच्चति । आगच्छ अस्माकं उपस्थानकारी । सा च ताये देवताये अधिष्ठिता न गच्छति अस्ति मे किंचिद्गृहकार्यं न शक्यं आगन्तुं ॥ ते दानि उपार्धकाशिकां आदाय तामुद्यानभूमिं गता ॥ सापि देवता काशिकाये वेषेण तेषां गोष्ठिकानां दर्शनपथेन देशे अभिक्रमति ॥ ते तां दृष्ट्वा येन काशिका तेन प्रधाविता । देवता अपरिमिताये गतीये गच्छति गच्छन्ती दृश्यति । सा दानि देवता तां गोष्ठिकान्ततो उद्यानभूमीतो ऋषिवदनं प्रवेशित्वा भगवतो समीपे अन्तर्हिता ॥ ते दानि गोष्ठिका भगवतः पादवन्दा उपसंक्रान्ता ॥

भगवानाह ॥

का नु क्रीडा का नु रती एवं प्रज्वलिते सदा ।
अन्धकारस्मिं प्रक्षिप्ता प्रदीपं न गवेषथ ॥
को नु हर्षो को नु आनन्दो एवं प्रज्वलिते सदा ।
अन्धकारस्मिं प्रक्षिप्ता आलोकं न प्रकाशथ ॥

ते दानि भगवता सर्वे बलवशीभावे विनीता एहिभिक्षुकाये च प्रव्राजिता उपसंपादिता ॥ एषा आयुष्मतां त्रिंशद्गोष्ठिकानां प्रव्रज्या च उपसंपदा भिक्षुभावो ॥

समाप्तं त्रिंशगोष्ठिकानां प्रव्रज्या ॥

1[1]. BM °uparddhakâçi ksha°. — 1[2]. BM °goshṭike°. — 2[1]. BM °kârî sâ°. — 2[2]. B °dhisthitâ ° sti mo kam̃ci° M °sti me na kim̃cit griha°. — 3. BM °uparddham̃ kâçikâm̃ â(M °kâm â)dâya tam u° B °gatâ sâ° M, *après* bhûmim̃, *remplace* gatâ *par* na *et omet ici la suite jusques et y compris* gacchantî (*l.* 6). — 4. B °goshṭikâye da° M °goshṭikânâm̃ da° thena tena deçe° B °atikramati te°. — 5. BM te tam̃ dri ° pravâdhitâ(M °tâḥ) de°.

6[1]. M °vatâm̃ aparimitâye gatiye gacchati B °tiye gacchati ° gacchâtam̃ dṛi° BM °çyanti |. — 6[2]. B so dâ ° goshṭikân tato u° M °goshṭikâm̃ tato u ° bhûmito ṛishipattanam̃ praviçi°. — 8. BM °goshṭikâ° M °gavato pâdau çirasâ vanditâḥ | sâ pi de° M *transpose ici le passage depuis* sâpi devatâ (*l.* 4) *jusques et y compris* gacchati (*l.* 6) *et continue :* sâ tam̃ driçyati | yam̃ dâni na driçyanti sâ dâni devakâçikâya goshṭikâye tato udyânabhûmito ṛishivadanam̃ praviçitvâ antarhitâ | te dâni goshṭikâ bhagavato pâdâm̃ vandâ upasam̃krântâḥ || bha° (*l.* 9). — 10. M °ratim̃ e°.

11. M °kshiptâḥ pra°. — 12. M kâ nu ha° B ko nu basho ko°. — 13. M andhakâlasmim̃° B °prakâçyatha | . — 14. M °rve varavaṇibhâ° BM °pravrajitâ ° ditâ e°. — 15. BM esha âyushmantam̃ trim̃çadgo(M °trim̃ṇago)shṭikâ pra°.

16. M iti çrimahâvastuavadâne trim̃çagoshṭikâ° B °trimçayûthânâm̃° M °jyâ samâptam̃ || .

भगवां वाराणस्यां विहरति शास्ता देवानां च मनुष्याणां च विस्तरेण निदानं कृत्वा अपरे दानि त्रिंश जना ऋषिवदनस्य नातिदूरेण मार्गेण गच्छन्ति । भगवां दानि तेषामनुग्रहार्थाय मार्गस्य समीपे निषण्णो । ते दानि भगवन्तं दृष्ट्वा भगवतः पादवन्दा उपसंक्रान्ता भगवता च सर्वे बलवशीभावेन विनीता एहिभिक्षुकाये च प्रव्राजिता उपसंपादिता । एषा आयुष्मतां त्रिंशानां जनानां प्रव्रज्या उपसंपदा [383b] भिक्षुभावो ॥

भगवां वाराणस्यां विहरति ऋषिवदने मृगदावे शास्ता देवानां च मनुष्याणां च विस्तरेण निदानं कृत्वा कोशलेषु द्रोणवस्तुकं नाम ग्रामं तहिं अपरो ब्राह्मणमहाशालो आढ्यो महाधनो महाभोगो प्रभूतभोगो प्रभूतस्वापतेयो प्रभूतधनधान्यकोशकोष्ठागारो प्रभूतजातरूपरजतवित्तोपकरणो प्रभूतदासीदासकर्मकरपौरुषेयो प्रभूतहस्त्यश्वाजगवेडको । तस्य दानि ब्राह्मणमहाशालस्य मैत्रायणी नाम ब्राह्मणी भार्या प्रासादिका दर्शनीया अक्षुद्रावकाशा परमाये शुभवर्णपुष्कलतया समन्वागता ॥ तस्या दानि मैत्रायणीये पूर्णो नाम माणवो पुत्रो प्रासादिको दर्शनीयो तरुणाभिरूपो कृतपुण्यो महेशाख्यो कृताधिकारो पुरिमकेहि सम्यक्संबुद्धेहि च्छिन्नबन्धनो आघ्रातभूतो आर्यधर्माणां चरमभविको ॥ सो शृणोति । राज्ञो शुद्धोदनस्य सर्वार्थसिद्धो नाम कुमारो द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतो येहि द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतस्य महापुरुषस्य द्वे गतीयो भवन्ति न तृतीया । सचेदगारमध्यावसति राजा भवति चक्रवर्ती चतुर्द्वीपेश्वरो विजितावी धार्मिको धर्मराजा सप्तरत्नसमन्वागतो । तस्य इमानि सप्त रत्नानि भवन्ति तद्यथा चक्ररत्नं हस्तिरत्नं अश्वरत्नं मणिरत्नं गृहपतिरत्नं स्त्रीरत्नं परिणायकरत्नं सप्तमं पूरं चास्य भवति सहस्रं पुत्राणां शूराणां वीराणां वरां-

1. M atha bha° B °trimçayajñâ | ri° M °trimçayajñâ ṛishipattanasya°. — 2. M bhagavân dâni te° BM °pe nisharṇṇo | . — 3. BM °taḥ pâdâvandâ(M °vaṁdâ) upasaṁkrâ ° ditâ e°. — 5. BM esha âyushmantâṁ triṁ° M °çânâṁ kramânâṁ pra°.

7. M atha bhâga ° ṛishipattane mṛi ° ṇâṁ ca vimâre ° brâhmaṇo mahâçâ ° B °dhano mahâbhogo pra° M °dhano mahâbhogo prabhûtadhanadhânyo koshṭâgâro prabhûtadhanadhânyakoçakoshṭâro prabhûtadhanadhânyajâtarûrajatavitto° B °çakoshṭâgâro prabhûtajâtarûpavitto° M °raṇaḥ pra° BM °sheyâ prabhûtahastyaçvagajaveḍa°.

11. BM °lasya mitrâ° B °drâvakâçaṁ pa° M °shkaratayâ samanvâgatâḥ | B °gatâ ta°. — 13. BM tasya dâ ° ṇî pûrṇṇo ° ṇyo kṛitamahe° M °kehi saṁmya° BM °ndhano râjânabhû° B °viko so°. — 15. M sâ çṛi°.

16. BM râjâ çu° M °ro dvâtriṁçatihi mâhâpurushalakshaṇehi samanvâgatâ ye° B °yehi dvâtriṁçatihi mahâpurushalakshaṇehi samatvâga° BM °tṛitîyâ sa°. — 18. B °gârasya madhyo vasati | râ° M °kravatti ca° BM °tudvipe° M °rmarâjo sa° B °nvâgatâ bhavanti || . — 19. B tadyathâ° BM °câsya bhavati | sa° M °çûlânâṁ vî° BM °rddakânâṁ so°.

गर्द्धपिणां परसैन्यप्रमर्दकानां । सो इमानि चत्वारि महाद्वीपानि अध्यावसति तद्यथा जंबुद्वीपं पूर्वविदेहं अपरगोदानिकं उत्तरकुरुं इमां महापृथिवीं सागरगिरिपर्यन्तामखिलामकण्टकामदण्डेनाशस्त्रेणानुत्पीडेन धर्मेणैवाभिनिर्जित्वा अध्यावसति । सचेत्पुनः अगारतो अनगारियं प्रव्रजति तथागतो भवति अर्हं सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च विघुष्टशब्दो विघुष्टकीर्तिरेखो अनन्यनेयो अभिभू अनभिभूतो आज्ञार्थदर्शी वशी वशवर्ती सो च ऋषिणा महर्द्धिकेन महानुभावेन चतुर्हि कारणेहि एकांशेन [384ᵃ] व्याकृतो बुद्धो लोके भविष्यतीति अथान्येहि पि नैमित्तिकेहि ॥ यदा भगवानभिनिष्क्रान्तो सो पि तदहो येव अभिनिष्क्रान्तो अनुहिमवन्तं आश्रमं गत्वा ऋषिप्रव्रज्यां प्रव्रजितो चतुर्ध्यानलाभी पंचाभिज्ञो महर्द्धिको महानुभावो ऋषि संवृत्तो ॥

तस्य दानि एकूनत्रिंश ऋषिकुमारा शिष्या सर्वे षडंगवेदपारगाः चतुर्ध्यानलाभिनः पंचाभिज्ञा महर्द्धिका महानुभावा ॥ सो तेषां शिष्याणामाह ॥ बुद्धो लोके समुत्पन्नो वाराणस्यां विहरति ऋषिवदने मृगदावे मनुष्याणां धर्मं देशयति आदौ कल्याणं मध्ये कल्याणं पर्यवसाने कल्याणं स्वर्थं सुव्यंजनं केवलपरिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं संप्रकाशयति ॥

सर्वे अशरणा स्कंधाः अभितप्ता महाभया ।
अविश्वासिका च असारा च इति भाषति गौतमो ॥

यं नूनं वयं माणवकाहो येन वाराणसीमृषिवदनं मृगदावं तेनोपसंक्रमेयाम

1. BM °tvâra mahâdvipâni adhyâvaseti || tadya° M °thâ jambudvî ° godâvarikaṁ u° BM °kuruṁ(M °ru) sâga ° ṫâm akaṇṭhakâ° M °bhinirmiṇitvâ°. — 4. M sacen punar agârito anagâri° BM °tathâgato bhavati | ahaṁ sa(M °saṁ)myaksaṁ° M °ṇasampanno su° BM °myaçârathiḥ° M °ṇâṁ ca vidyushṭaçabdo° B °rttirekhâ ananya° M °rttireshâ ananyanena abhibhûtenâbhibhûtena ajñânârtha° B °to ajñânârtha° BM °darçâ vaçî vaça(M °sa)vartti° B °titi | athâ° M °titi anye° BM °kehi yadâ°.

9. M °bhagavân abhinishkranto | so° BM °ho ye ca abhini° M °himavantam âçra ° lâbhino paṁ° B °lâbhi paṁ° M °bhâvâ so te° (*l.* 131).

12. B °gâḥ | catudhyâna ° bhâvâ so°. — 13². B buddho lo samutpaṁno vâ ° harati | ṛi° M °ṛishipattane mṛi ° ṇâṁ ca dharma de° BM °çayati || || â° B °madhyakalyâṇaṁ paryavasâ° M °svartha su° BM °kevalaṁ paripûrṇṇaṁ(M °rṇṇa) pariçu° B °ddhaṁ paryavatâtaṁ° M °dâbha brahmacarya saṁ°.

17. M °ṇâ skandhâḥ a° B °yâ a°. — 18. M °râ ca ti bhâshati || gauttamî B °tamâ ||. — 19. M °mâṇavakâ ye° ṛishipattanaṁ mṛi° B °dâve teno° M °krameyâ | taṁ° BM °gauttamaṁ darçanâya sâ°.

तं भगवन्तं गौतमं दर्शनाय । साधु खलु पुनर्भवति तथारूपाणां तथागतानां अर्हन्तानां सम्यक्संबुद्धानां दर्शनाय उपसंक्रमणं पर्युपासना च ॥ साधूपाध्याय त्ति ते माणवका पूर्णस्य . . . . . . . . . . . ब्रह्मचर्यं संप्रकाशयन्तं द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतं अशीतिहि अनुव्यंजनेहि उपशोभितशरीरं अष्टादशेहि आवेणिकेहि बुद्धधर्मेहि समन्वागतं दशहि तथागतबलेहि बलवां चतुर्हि वैशारद्येहि सुविशारदो शान्तेन्द्रियो शान्तमानसो उत्तमदमशमथपारमिप्राप्तो परमदमशमथपारमिप्राप्तः अन्तर्गतेहि इन्द्रियेहि अवहिर्गतेन मानसेन स्थितेन धर्मताप्राप्तेन ह्रदमिवाच्छो अनाविलो विप्रसन्नो रतनयूपमिवाभ्युद्गतो सुवर्णयूपं वा प्रभासमानं तेजसा श्रियाये ज्वलमानं असेचनकं अप्रतिकूलं दर्शनाये । दृष्ट्वा च पुनरस्य अतिरिव मनं प्रसीदे ॥ प्रसन्नचित्तो च पुनर्येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वंदित्वा भगवन्तमेतदुवाच ॥ प्रव्राजेहि मां भगवं उपसंपादेहि मां सुगत ॥ अथ खलु भगवां पूर्णं ऋ[384b]षिं मैत्रायणीपुत्रं आत्मत्रिंशं एहिभिक्षुकाये अभिभाषे ॥ एथ भिक्षवश्चरथ तथागते ब्रह्मचर्यं ॥ तेषां दानि भगवता एहिभिक्षुकाये आभाष्टानां यत्किंचिदृषिलिंगं ऋषिगुप्ति ऋषिध्वजं ऋषिकल्पं सर्वं समन्तरहितं त्रिचीवरं च प्रादुर्भूतं सुंभका च पात्रा प्रकृतिस्वभावसंस्थिता केशा ईर्यापथो च सानं संस्थिहे सय्यथापि नाम वर्षशतोपसंपन्नानां भिक्षूणां । एषा आयुष्मतः पूर्णस्य मैत्रायणीपुत्रस्य आत्मत्रिंशस्य प्रव्रज्या उपसंपदा भिक्षुभावो ॥

सो दानि आत्मत्रिंशो भगवता बलवशीभावे विनीतो । सो दानि बलवशीभावप्राप्तो भगवन्तं सम्मुखं इमाहि सारूप्याहि गाथाहि अभिस्तवे ॥

1. BM °bhavati | tathârû° M °ntânâm sammya° BM °sanâya | . — 2. BM °dhyâyanti te ° pûrṇṇasya bra° B °samprakâçayati | tam dvâ° BM °kshaṇehi samanvâgatam || açî° M °dyehi suviçâlado çântendriyâm çântamânasam uttamadamaçamathapâramiprâptaḥ antarga° B °ptaḥ arhantagatehi indriyehi avahigatena mânasena sthi° BM °hradamavâcch-anâvilo(B °vira) viprasanno° M °ratanayûtham ivâbhyudgataḥ suvarṇṇayûtham vâ prabhâ° kam apratikulam da°.

9. BM °sîde pra°. — 10. M °ryena bhagavânsteno ° tvâ bhagavato pâdau°.

11. B pravâje° M pravraje ° bhagavan upa° BM °gataḥ || . — 12. M °gavân pûrṇam° BM °ṛishi mai° M °ṇîpûvam âtmatrimça yehi° B °trimça ehi° M °abhishâshe | . — 13. BM etad bhi(M °tam bhi)ksha °. — 14. BM °gavato c °M °d ṛishilingam ṛishiguptim ṛishidhva° B °guptim ṛishidhva° BM °jam ṛishiâkalpam° B °hitam | tricîvarâ ca prâdurbhûto çumbha° M °rbhûtam subhakâra pâtrâ° BM °svabhâvasamsthitâ(M °sthihe) keçâ ca sânam ° he || sayya° M °topasampannânâm bhikshuṇâm B °kshûṇâm e°.

17. BM esha â° M °shmato pû° BM °maitryâya ° trasya ekûnatrim° M °çasya vra°. — 19[1]. M °bhâva vinîtâ B °nîto so°. — 19[2]. M °prâptaḥ bhagavantam samu° BM °imehi sâ(M °sa)rûpyehi gâthehi a° M °stavehi yo°.

यं तुषितभवने सन्तो हिमशिखरनिभो गजो भवित्वान ।
अन्तिममुपेसि गर्भं दशशतरश्मिसगोत्र तं प्रियं मे ॥
यं च उभयतो उपेतरूपा तव जननी च पिता लोके ।
महिपतिकुलसंभवो अभू दशशतरश्मिसगोत्र तं प्रियं मे ॥
यं प्रतिमुखसन्तो परिच्यवसि जगं न कस्य चि स्पृशन्तो ।
पित्तरुधिरश्लेष्मणा अलिप्तो दशशतरश्मिसगोत्र तं प्रियं मे ॥
यं च कनकवर्णं पश्यमाना परमप्रीतं मनो अनुजनेन्ति ।
फणिका अनुगता व रक्तसूत्रं दशशतरश्मिसगोत्र तं प्रियं मे ॥
यं च प्रकम्पयन्तो वसुधां जायेसि बहुजनहिताय ।
जातो पादानि सप्त क्रमेसि दशशतरश्मिसगोत्र तं प्रियं मे ॥
यं पि च जातस्य मुने छत्त्रं धारयेन्सु गुह्यकाधिपती ।
उभयतो च वीजनीयो दशशतरश्मिसगोत्र तं प्रियं मे ॥
यं पि च ते जातमात्र उदुपाना उद्गमे उदकधारा ।
उष्णा च शीतला च दशशतरश्मिसगोत्र तं प्रियं मे ॥
यं प्रव्रजेसि प्रहाय कामगुणां येव सप्त च रतना ।
चतुरो च महाद्वीपां दशशतरश्मिसगोत्र तं प्रियं मे ॥
अवहाय महीं च ज्ञातयो अथ रत्नानि प्रहाय सप्त वरा ।
जातीमरणस्य कासि अन्तं दशशतरश्मिसगोत्र तं प्रियं मे ॥

1. BM yo tu ° bhavana sa° M °khalani° BM °tvâna a°. — 2. B antimam̃ upeyi ga° M °peti garbha da ° rasmim̃ sagrotram̃ piya me B °gotram̃ tam̃ priya me yam̃°. — 3. M yam ubha ° rûpo ja° BM °pitâ ca lokanâtha ma°. — 4. M mahîpatikulam̃ sam̃° BM °bhavam̃ abhûshi | da° M °raçmisagotram̃ pri° B °tra priya me yam̃°. — 5. BM °pari ca ṛishi jagam̃(M °jayam̃) akasya cit spṛiha(M °cin spriça)nto pi°.

6. M °shmanâ a° BM °liptam̃ da° M °raçmisagotram̃ tam̃° B °tran tam̃ pri° M °yam̃m me | . — 7. M °varṇṇa paçyamâno pa° B °rṇṇam̃ yasyemâno pa° BM °prîtamano(B °nâ) a° M °janeti B °janetrî pha°. — 8. BM phali(M °ṇi)kam anugatâ ca rakta° M °raçmisagotram̃ tam̃° B °gotram̃ pri° M °yam̃ mo. — 9. BM °jâyet sa ba ° ya jâ°. — 10. M °to yadâ° BM °krame da° M °raçmisa° BM °gotram̃ tam̃°.

11. BM °pi jâ° M °muna ccha° BM °dhârayetsuḥ gu° M °pati B °pati u°. — 12. M ubhaye ca ° gotro tam̃° B °tran tam̃ pri°. — 13. M yam̃ priyam̃ te° B °matrâ udu° M °mâtro udupâno udgamensuḥ uda° B °dgametsuḥ udakadhârâm̃ M °dhârâm̃ u°. — 14. M gotram̃ tam̃° B °gotran tam̃ pri°. — 15. B °vrajen prahâ° M °vrajet prahâ° BM °ṇâm̃ ye ca sa° M °pta ratnâ ca catu°.

16. BM cature va ma° M °gotram̃ tam̃° B °tran tam̃ pri°. — 17. M yam̃ ava° BM °yo caratha(B °tha | ) ratnâni(M °tnâyam̃) pra° M °saptam̃ dhirâḥ B °pta dhîrâ | . — 18. M jâtimara° BM °kâçi anto da° M °gotram̃ tam̃° B °tran tam̃ pri°.

वीर महाआभा उद्गमासि भगवतो चित्ते तदा विमुच्यमाने ।
एकान्तसुखी भवेन्सु दशशतरश्मिसगोत्र तं प्रियं मे ॥
अथ सु[385a]विनीता जिनेन शान्ता परमप्रीतमना आर्या परिषा ।
शत्रुदमने उपेसि कालं दशशतरश्मिसगोत्र तं प्रियं मे ॥
यथा तव प्रणिधी अभूत्पुरस्तात्यथ समुदागतो असि लोकनाथ ।
प्रणिधी आगमो च ते समृद्धो दशशतरश्मिसगोत्र तं प्रियं मे ॥
तव दशदिशतां गतो प्रणादो जनविषयेषु च नास्ति कोचि तुल्यो ।
परमगतिगतो सि धर्मताये दशशतरश्मिसगोत्र तं प्रियं मे ॥
दिष्ट्या भगवान्सुखी अरोगी दिष्ट्या कार्यं इदं तव समृद्धं ।
दिष्ट्या नमुचि हतो त्वया ससैन्यो दिष्ट्या ते विदितमिमं च परं च ॥
दिष्ट्या ते सहंपति याचेसि दिष्ट्या चास्य प्रतिशृणोषि वीर ।
दिष्ट्या धर्मेण धर्मचक्रं दिष्ट्या प्रवर्तये द्वादशांगुपेतं ॥
दिष्ट्या नदितो ते सिंहनादो दिष्ट्या ते प्रतिवादो नास्ति क्वचित् ।
दिष्ट्या यं जिनेन धर्मं प्राप्ते दिष्ट्या ते मात्सर्यं नास्ति वर ॥
दिष्ट्या मे अभूषि दिव्यचक्षुः दिष्ट्या श्रोत्रममानुषमभूषि मे ।
दृष्ट्वा हिमवन्ते मृत्युं वा दिष्ट्या ते समिती दृष्टा ॥

1. BM vira mahi(M °hî) â° M °bhâsa unamâsi bha° B °udânam âsi bha° BM °cinte ta° ne e°. — 2. BM °vetsuḥ da° M °raçmisagotram̃ tam̃° B °gotran tam̃ pri°. — 3. B °sunihitâ jane° M °sunihitâ ji° BM °na çakrapara° B °mapratîtamanâ ca âryapari° M °nâ ca âryyapari°. — 4. BM çakradamana upesi kola(M °kâlaḥ) da° M °raçmisagotre tam̃° B °tran tam̃ pri°. — 5. M °ṇidhânam̃ me abhû° B °bhûta purastâd yathâ samadâ° M °bhût pûrastâ yathâ samâdâ° BM °gato âsi | lo ° tha pra°.

6. BM °ṇidhi agamo° M °raçmisagotram̃ tam̃° B °tran tam̃ pri°. — 7. M tava diçatâm̃° BM °gato | praṇâ(M °praçâ)do° M °sti kvaci° B °cit tulyo pa°. — 8. M °raçmisagotram̃ tam̃° B °tran tam̃ pri°. — 9. BM drishṭvâ bha ° gî drishṭvâ kâ° BM °tava sam̃vriddhyam̃ | (M °ddham̃ | ). — 10. BM drishṭvâ na° M °mu vidhu° BM °sainyo(M °nyâ) prishṭvâ ca te viditam̃ imam̃ ° ram̃ ca dri°.

11. BM drishṭva te saham̃pa(M °te mahampa)tîye âtmâpi drishṭvâ câ° M °ṇomi vîram̃ B °vîra dri°. — 12. BM drishṭvâ dharme ° cakram̃(M °kra) drishṭvâ vartta ° daçâm̃gupetâ | (M °peto). — 13. B drishṭyâ nadîto° M drishṭvâ nadîto° BM °do drishṭvâ te prîtivâdi nâsti kaçcit || . — 14. B drishṭvâ yajitena dharma yo so drishṭhyâ te sâtsa° M drishṭvâ ye jinena dharmayâ so drishṭvâ te sâtsa ° sti varaḥ B °sti vîraḥ dri°. — 15. B drishṭyâ me° M drishṭvâ me ° divyam̃ cakshuḥ drishṭhvâ çro° B °kshuḥ drishṭhyâ çotra° BM °nushâ abhûshi dri°.

16. BM drishṭvâ(B °shṭyâ) hi° B °mrityu vâ drishṭyâ te samiti drishṭyâ i° M °tyum̃ vâ | drishṭvâ te sasmritim̃ drishṭvâ te i°.

इह मे अभूषि पंचाभिज्ञा दिष्ट्या शिष्याण विधेयता अभू ।
दिष्ट्या मो न पापसंगता स्म दिष्ट्या अनुभोमो धर्मराजानं ॥
दिष्ट्या शरणं उपगता स्म दिष्ट्या अभिसमित चतस्रो सत्या ।
दिष्ट्या सुविसारदा ते धर्मे दिष्ट्या स्म वशीभावमनुप्राप्ता ॥
एवं खु तदा जिनस्य पुरतो आयुष्मां पूर्णो कथितमार्गो ।
वाराणस्यां मृगदावस्मिं आत्तमनो अनुमोदे धर्मप्राप्तो ॥

आयुष्मतो पूर्णस्य मैत्रायणीपुत्रस्य वस्तु समाप्तं ॥

भगवान्सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थं अभिसंभावयित्वा वाराणस्यां विहरति ऋषिवदने मृगदावे शास्ता देवानां च मनुष्याणां च विस्तरेण निदानं कृत्वा अवन्तीषु मर्कटं नाम निगमं तत्र ब्राह्मणमहाशालो राज्ञो उज्झेभकस्य तोणेहारकस्य पुरोहितः राजाचार्यो महाधनो महाभोगो प्रभूतभोगो प्रभूतस्वापतेयो प्रभूतधनधान्यकोशकोष्ठागारो प्रभूतजातरूपरजतवित्तोपकरणो प्रभूतदासीदासकर्मकरपौरुषेयो प्रभूतहस्त्यश्वाजगवेडको वात्स्यायनसगोत्रो [385$^{b}$] । तस्य दानि द्वे पुत्रा एको नालको नामेन द्वितीयो च उत्तरो । उत्तरो ज्येष्ठः नालको कनीयसो पण्डितो निपुणो मेधावी उद्घटितज्ञो तीक्ष्णबुद्धिको ॥ तेषां मातुलो असितो नाम ऋषी अवन्तीषु विंध्यपर्वते आश्रमपदे प्रतिवसति पंचशिष्यशतपरिवारो मूलफलमकृष्टउंछवृत्तिको पंच माणवकशतानि मन्त्रवेदां वाचयति ॥

1. M iha ma bhûshim̃ pam̃° B °me bhûshi pam̃° BM °jñâ drishtyâ(M °shtvâ) çishyâ vidhe° abhûshi | . — 2. B drishtyâ me na° M drishtvâ mâ na° sma | drishtvâ yam̃ a° B °sma drishtyâ yam̃ a° BM °bhomam̃ dharmarâjâ(M °jâ | ). — 3. M drishtvâ ça° B °drishtyâ ça° sma drishtyâ a° M °sma drishtvâ a° BM °same catasro(B °sra) satyâm̃ dri. — 4. B drisma vi° M drishtvâ sma viçâra° B °dharmà drishtyâ sma vaçibhâ° M °dharmâ drishtvâ sma vasibhâvânu°. — 5. BM °jinishya pu° B °kathitamâgro vâ° M °tamârbha vâ°.
6. BM °dâve âttamanânumodya dharmapâtram̃ ||. — 7. M iti çrimahâvastuavadâne âyushmatâ pûrṇnamai° B °maitryâya° M °sya jâtakam̃ sa°. — 8. M atha khalu bha° BM °vàn sam̃myaksam̃buddhasya ya° M °tam̃ artha abhi° ti | rishipattane mri° vanti | punaḥ karttakam̃ nâma ni° B °ntishu | marka° M °çâlâ râjño° B °ujhe(?)bhakasya tone° M °purojâcâryyo âdyo mahâdhano mahâbhogo prabhûtakoço prabhûtabhogo prabhûtapadeyo prabhûtadhanadhâ° B °svâpadeyo prabhûtadhanadhânyo koçakoshṭâgâro° M °çakoshṭâgâro °jâtaruparaja° tyâgayanasa° B °tro ta°.
13. BM °putro eko nâmena dvi° M °yo ca uttaro jye° B °ro u°. — 14. M °jyeshṭho nâ° B °jyeshṭhaḥ nâ° M °nîyaço padito nipuno medhâvi upaghaṭṭitajño° B °vî ughaṭitajño M °buddhiḥ B °ko te°. — 15. BM °mâturo asi° M °rishiḥ avantishu vindhyaparvata â° BM °de rishi prativasati | pam̃caçi° krishṭa(M °shṭam̃)dram̃ccha° B °çatâni | ma° BM °dâm̃ vâca(B °cya)nti utta°.

उत्तरेण तहिं गत्वा वेदा अधीता । सो दानि संगीतिं कृत्वा पितुः सकाशमागतो ॥ सो दानि पितुः पुरतो परेषां च ब्राह्मणानां वेदपारगाणां अनुयोगं देति । तस्यानुयोगं देन्तस्य तानि वेदानि नालकेन सर्वाणि ओगृहीतानि ॥ तेनापि पितुस्य तेषां ब्राह्मणानां वेदपारगाणां पुरतो तस्य भ्रातुः सकाशातो वेदानि श्रुत्वा अनुयोगो दिन्नो । तस्य सो पिता ते च ब्राह्मणा वेदपारगा विस्मिता अहो माणवकस्य बुद्धीति ॥ सो दानि मातापितृहि वुच्चति बुद्धो लोके उत्पन्नो गच्छ प्रव्रजाहीति ॥ सो विन्ध्यपर्वतं गत्वा मातुलस्य असितस्य ऋषिस्याश्रमे ऋषिप्रव्रज्यां प्रव्रजितो । तेन युज्यन्तेन घटन्तेन व्यायमन्तेन पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्तेन विहरन्तेन चत्वारि ध्यानान्युत्पादितानि पंचाभिज्ञा साक्षीकृता ॥

यदा भगवाननुत्तरां सम्यक्संबोधिमभिसंबुद्धो प्रवृत्तप्रवरधर्मचक्रो वाराणस्यां विहरति ऋषिवदने मृगदावे देवमनुष्याणां अर्थचर्यां चरमाणो प्राणशतसहस्राणि अमृतं प्रापयन्तो तदान्तेवासिको असितेन ऋषिणा वुच्चति । बुद्धो लोके उत्पन्नो गच्छ प्राचीनं प्रव्रजाहि ॥ सो दानि ऋषिस्याश्रमातो अनुपूर्वेण वाराणसीमागतो ॥ वाराणस्यां षट् शास्तारप्रतिज्ञा प्रतिवसेन्सुः काश्यपो पूरणो मस्करी गोसालिकापुत्रो अजितो केशकम्बली ककुदो कात्यायनो संजयी वैरट्टिकापुत्रो निर्ग्रन्थो च ज्ञातिपुत्रो ॥ तेषां नालको षण्णां शास्तारप्रतिज्ञानां उपसंक्रान्तो न चास्य चित्तमाराध्यति ॥ चत्वारो महानिधयो संखो वाराणस्यां मिथिलायां पदुमो कलिंगेषु पिंगलो तक्षशिलायां एलपत्रो ॥ वाराणस्यां संखस्य मासिको समाजो वर्तति । तहिं निधानाधिपतयो नागराजानो निमन्त्रितका आगता ॥

1[1]. M °ṇa (vakraçatâni mam̃ntravedâ *effacé*) tahim̃ gatvâ yadâ°. — 1[2]. B °gato so°. — 2. M °to apare ° ṇâmâm̃ ve° B °gânâm̃ anu°. — 3[1]. BM °ntasya nâtive°. — 3[2]. BM te câpi pitu ° to tasyâ bhrâ° M °dinnâ | B °dinnâ ta°.

7. M so vindhyâparva° BM °mâturasya asi°. — 8. M tena pûjyamânena ghaṭam̃tena vyâ° BM °rvarâtrâ(M °tro)pararâtrâpararâtram̃ jâ° M °dhyânâni u° BM °ditâni tâni pam̃°.

11. M °ttarâ sam̃mya° BM °syâm̃ viharanti | ṛishivada(M °rati | ṛishipatta)ne mṛi° rthacaryâ ca ° nto | tadâtavâsiko ako asi° B °nto | tadântavâsiko ° ccati bu°. — 13. M °loke utpa°. — 14. BM °ṛishi(B °shi) yathâto a° B °gato vâ°. — 15. M °stâro pratijñâ° B °stârah pratijñâ ° setsuḥ | kâçya° M °setsuḥ kâçya° B °skari gosâlikaputro aji° M °goçâlikaputro aji ° keṇakambari kakuṭo kâtyâ° B °keçakampali ° verañgikaputro ni° M °ṭṭikaputro nigrattho ca jñâ° BM °tro te°.

17. M °nto narâsya ° râdhyenti | B °râdhyanti | . — 18. M °sam̃kha vâ ° sho piṅgalo° B °yâm̃ ekaputro vâ°. — 20. M tahi nidhâ ° âgatâḥ.

तत्र च एलपत्रेण नागराज्ञा प्रश्ना स्थापिता एतां यो प्रश्नां विसर्जेति तस्य [386a]
धीता च दीयति सुवर्णसहस्रं च ॥

किं स्व अधिपती राजा कथं भोति रजस्वरो ।
कथं स्व विरजो भोति कथं बालो ति वुच्चति ॥

भगवानाह ॥

षष्ठो अधिपती राजा राज्ये भोति रजस्वरो ।
अरक्तो विरजो भवति रक्तो बालो ति वुच्चति ॥

एलपत्रो आह ॥

केन सो वुह्यति बालो किं सु नुदति पण्डितो ।
योगक्षेमी कथं भोति तं मे आख्याहि पृच्छितो ॥

भगवानाह ॥

योगेहि वुह्यति बालो योगं नुदति पण्डितः ।
सर्वयोगअसंयुक्तो योगक्षेमीति वुच्चति ॥

एलपत्रो आह ॥

बुद्धबुद्धेति वुच्चसि किं स्वप्नं अथ दर्शनं ।
निरीक्ष्य भाषेसि तत्वं उदीरय छिन्द संशयं ॥

देवता आह ॥

साक्षं दृष्टो महावीरो मृगदावान्तराश्रितो ।
धर्मश्रेष्ठं प्रकाशेन्तो सिंहो व गिरिकन्दरे ॥

1. M °ṇa nâgayajñena praçnâm̃ pitâ | e° B °garâjñe praçnâm̃ pitâ e ° tasyâ dîptyâ ca diçiti su° M °tasyâ dîptyâ ca digi(?)ti su°. — 3. B kim adhi° M kim̃ adhi° BM °bhoti râja(M °jâ)svaro ka°. — 4. BM °jo katham̃°.

6. B shashṭo adhipati râ ° ro a°. — 7. M °bâro ti vu°. — 9. BM °vuccati bâlo kim̃ nuda°. — 10. B yogacchemi ka° M °kshesi katham̃ bhonti tam̃ ° khyâsi pṛicchati ||.

12. B °vuhyehi bâ° M °bâro yogam̃ ° ṇḍito | . — 13. M sarvayogam̃ sam̃° B sarvayagasam̃ ° gacchemî° M °kshemeti°. — 15. BM buddho buddhe vuccasi jânâsi kim̃ svapnam̃ ca na me darçanam̃ |.

16. BM svapnam̃ ca niriksha bhâ° M °cchinde sam̃°. — 18. BM svakshyam̃ dṛishṭo (B °shṭvo) ma ° dâyânta(M °yâm̃ta)rosṛito. — 19. M dharme çreshṭo pra° B °çreshṭam̃ pra°.

चिरस्य वत द्रक्ष्याम तारकैरिव लक्षणैः ।
विचित्रगात्रं .... बुद्धस्य वरबुद्धिनो ॥
चिरस्य वत श्रोष्याम वाणिं ब्रह्मस्वरोपमां ।
अनित्यं दुःखमनात्मेति सर्वक्लेशप्रदारणीं ॥
एतां श्रुत्वा नवघोषां वाणिं ब्रह्मस्वरोपमां ।
मोक्षं प्राप्स्याम तीर्थेभ्यः आसादेत्व नरर्षभं ॥
दृष्टान लोकार्थचरं महर्षिं
महायशं काश्यप अर्थदर्शिं ।
..... सर्वस्य शुभस्य मूलं
शीलं रक्ष्यामो चमरीव बालं ॥
छित्वान पन्थं कुवनान्तरस्मिं
यथा शास्तारं मुनिं नो च छत्वा ।
खण्डित्व शिक्षां परमार्थदर्शिनो
मार्गा च्युतो वीचिमुपेति कृच्छ्रं ॥
पतन्ति गात्रेषु गिरिप्रकाशा
.....वृष्टिरनन्तविद्धिः ।
शाटेति गात्राणि दुःखार्दितस्य
ततो प्रमोचेहि विशालकीर्ते ॥
शृणोमि धर्मं न च श्रद्दधामि
मेघोद्धृतः सूर्यमिवोदयन्तं ।
आश्वासयादित्यमरीचितेज

1. B °sya yata dra° BM °ṇaiḥ vi°. — 2. BM °traṁ buddha° B °sya parabuddhino ci° M °ddhinâ vi°. — 3. M vira° BM °sya vada çroshyâmi vâ° B °mâṁ a°. — 4. BM °nitya duḥ°. B °dâraṇi ha° M °dârani | . — 5. BM hantuṁ çrutvâ ghoshâṁ navâṁ ghoshâṁ vâṇi bra°.

6. B °psyâma târyebhyaḥ âsâdetvâ na° M °tiryebhyaḥ âtmâ devâ nararshabhaḥ | B °bhaṁ dṛi°. — 7. B °lokârthaṁcaraṁ° BM °darçi | . — 9. BM sarva ° mûla(M °le) çîlaṁ ca rakshaṁ ca(B °kshaṁ cama)mariva bâlaṁ(M °lâṁ) cchi°.

11. B cchitvâna yatrako vanantarasmiṁ ya° M cchitvâna patrekâ vanântaraçmiṁ ya° BM °munino akṛitvâ(M °kṛishṭâ) kha°. — 13. B °çikshâṁ | pa° M °ramârthaṁdarçino svargâ cyu° B °rçinâ svargâ cyuto viryam upeha kṛi° M °tovîryyam upaha kṛi° — 15. M °gâtrasya yiripra° BM °kâçâ sâbâlikâ vṛishṭim anantabuddhiḥ | (M °ddhiḥ).

17. M çateti gâ ° kirtti(?) B °kirtteḥ | . — 19. M °dharmma na° BM °trodhṛitaḥ° M °ryam ivâdayaṁntaṁ.

21. M âsvâsayâdi ° ricatejaḥ | mo° B °shyati | tirya ° shu i°.



IMPRIMERIE NATIONALE.

मोक्षो कदा भेष्यति तिर्यग्योनिषु ॥
इमं विकृतसंदेहं दृष्ट्वा दुःशीलसंभवं ।
अश्रुकण्ठो रुदन्तो पि को शीलं न समाचरेत् ॥
स वै प्रमोदेषु रतो न ....
भवे सुशीलेष्वचलो ऽचलोपमो ।
व्याकर्ष त्वं अर्थदृशो मतीमां
मैत्रेयगोत्रो भवरागसूदनो ॥

नालको कात्यायनो भगवतः पादौ शिरसा वन्दित्वा भगवन्तमेतदुवाच ॥

पुरोहितो मह्यं पिता तोणेहारस्य राजिनो ।
उत्पादेषु विद्यायुक्तो नक्षत्रेषु गतिंगतो ॥
तम्मे पिता अवचासि अर्थकामानुकम्पको ।
बुद्धो खु पुत्र उत्पन्नो गच्छ प्राचीन प्रव्रज ॥
सो हं भगवन् अनुप्राप्तो साधु त्वं प्रव्रा[386ᵇ]जेहि मां ।
वैशारद्येहि संपन्नां वाचां भाषे तथागतो ॥
कात्यायनं ब्राह्मणं च एहि भिक्षूति आलपे ।
सा एतस्य प्रव्रज्या हि अभू च उपसंपदा ॥

आयुष्मां कात्यायनो आह ॥

अञ्ञासि एतं वचनं असितस्य यथातथं ।
त्वां तु गौतम पृच्छामि सर्वधर्माण पारग ॥

2. B °kritam̃ sam̃de ° vam̃ a°. — 3. BM °pi kà çi(M °çi)lam̃ na çubhâcaret | . — 4. BM sa ca pramodo purato na(M °na yam̃) bha° B °ve svaçileshvabalabalopamo | M °vet svaçîleshu calâcalopame | .

6. B °rshate tvatha dri° M °rsha tvarthadri° B °matimâm̃ maitraya ° danâ | . — 8. B °no bhagavaḥ pâ° M °no bhagavato pâ°. — 9. M °hitâ mahya pi° B° mahya pi° M °tonihâ° BM °no u°. — 10. M °tpâdishu vineyuko na° B °vinayukto° M °tim̃gataḥ | B °to ta°.

11. M tam̃ me pi° BM °avacasi° M °nukam̃pako | . — 12. M buddheshu tram utpa° B °ccha yâcî ° vrajà so° M °vraje | . — 13. M °bhavân anu° B °gavân anu° M °prâpte sâdhu ca prajâhi nâm̃ | B °dhu pravrajâhi°. — 14. BM °sam̃panno vâ°. — 15. M °tyâyaṇam̃ brâ° B °ṇam̃ e° M °laye | .

16. B °vrajyo abhû° M °bhûvanupa°. — 17. BM °yano anyâ°. — 18. BM anyâsi e° M °vacanaḥ asi° BM °thâtathà tvam̃°. — 19. BM tvam̃ tu° B °gauttama pricchâmi | sarve dha° M °gauttamam̃ pricchasi | kâtyâyanam̃ brâhmaṇânâm̃ sarvadharmeṇa pâragaḥ | B °gaḥ auâ°.

अनगारं उपेतस्य भिक्षाजीवं चिकीर्षतो ।
मुनि प्रव्याहर धर्मं मौनेयं उत्तमं पदं ॥

भगवानाह ॥

मौनेयं च पृच्छसि नाल दुःकरं दुरभिसंभुखं ।
हन्त ते तं च वक्ष्यामि संस्तभस्व दृढो भव ॥
समानभागं कुर्यासि ग्रामे आक्रुष्टवन्दितं ।
मनोप्रदोषं रक्षेसि शान्तो चानुमतो भव ॥
उच्चावचा निश्चरन्ति दावे अग्निशिखा इव ।
नारी मुनिप्रलोभाये ताव तं मा प्रलोभये ॥
विरतो मैथुना धर्मा हित्वा कामं परोवरं ।
अविरुद्धो असंरुद्धो ये सत्वा त्रसस्थावराः ॥
यथात्मनो तथान्येषां यथान्येषां तथात्मनो ।
आत्मानं उपमां कृत्वा नैव हिंसे न घातये ॥
हित्वामिह अल्पिच्छां पि अनिच्छो मोहि निर्वृतो ।
त्यज इच्छां च लोभं च यत्र सक्ता पृथग्जनाः ।
पण्डितो प्रतिपज्जेय सो तरे नरकं इमं ॥
ततो रात्रिविवासातो ग्रामं पिण्डाय ओतरे ।
आह्वयं नाभिनन्देय अभिहारं च ग्रामतो ॥
न मुनि ग्राममासाद्य कुलेषु सहसा चरे ।

1. B anâgâ° M anâgâram upe° BM °sya çikshâ° M °cikirshitâ | B °kîrshito | . — 2. M muninâ pratyahaṁ dharma maune° B °pratyâhâraṁ dharmaṁ mâne°. — 4. M °pricchâmi nâla kinti bhagavân dushkaraṁ° B °nâla kiṁti bhagavâṁ duḥ° M °bhisantunaṁ. — 5. M °taṁ vakshyâ° BM °saṁstavasya dṛi°.

6. M °na bhogaṁ° BM °ryâsi ti(M °si i)me âkrushṭa vinde(M °nda)ti | . — 7. B °rakshasi° BM °kshânte câ°. — 8. BM °ccaranti devâṁ(M °vâ) agniçikhâṁ iyaṁ nâ°. — 9. M °niprarobhâye tâ° BM °va te mâṁ pra°. — 10. BM °thuno dharmo hi° B °kâmaparoyacet | M °kâmaparopayet | .

11. M avabuddho asaṁ ° tvâ tatra sthâvarât || B °trase sthâ°. — 12. B athâtmanâ tathânyeshâṁ tathâtmano â° M athâtmanâ tathânyeshâṁ tamamoca â°. — 13. M âtmanâṁ | u° BM °hiṁsa na ghâ° M °taye na hiṁsaye. — 14. BM hitvâm i(M °tvâ i)ha anicchâsya aniccho° M °bhoti ni°. — 15. BM °tra çaktâ° B °prigjanâḥ | .

16. B paṇḍitâ parivarjeyâ so tare tara° M °to parivarjjeyâmo tare tara°. — 17. B °râtriṁ nivâsato° M °râtriṁ nivâsitvâ grâ°. — 18. BM °bhinandoyâ a°. — 19. M °muni grâmasâdya° B °muninâ grâ ° dya shuleshu sahasaṁvaro | M °hasaṁvaro | .

घासेषी न च्छिन्नकथो न वाचा प्रेप्सुतां भणे ॥
स पात्रपाणी विचरेया अमूगो मूगसंमतो ।
तं तं दानं न निंदिया दातारं नावजानिया ॥
अदासि इति ते साधु नादासि भद्रमस्तु ते ।
उभयेनैव सदृशो रुक्षलं विनिवर्तये ॥
सो पिण्डचारं चरित्वा वनान्तं अभिरक्षये ।
ऊनोदरो मिताहारो अल्पेच्छो स्वादलोलुपः ॥
सो वृक्षमूलोपगतो आसनोपगतो मुनि ।
ध्यापयति अतो भव्यं आत्मानं नातितोषये ॥
यस्यात्र सरिता नास्ति च्छिन्नश्रोतस्य भिक्षवः ।
कृत्याकृत्यप्रहीणस्य परिदाघो न विज्जति ॥
एवं लयनमाख्यातं संबुद्धेन प्रजानता ।
एको व अभिरमिष्यसि एवं गमिष्यसि दिशो दश ॥
एवं मौनेयं उपेष्यसि क्षुरधारोपमो भव ।
जिह्वाय तालुमासाद्य तादृशो संयतो भव ॥
निरामगन्धो असितो वृक्षमूलपरायणो, ।
एकासनस्य शिक्षासि श्रमणोपासनस्य च ॥
श्रुत्वा ऋजुरहं ध्यानं ध्यायिनां कामचागिनां ।

1. M ghâtesi no cchinnaghâto na° B ghâsesiṇo cchinnaghâso na vâcâ prâpnu bhaṇe | M °câ prâpnutâm̃°. — 2. M °trapâṇî vicareyâ grâme amukasam̃tato | B °reyâ grâme amuko amukasam̃gato | . — 3. B tam̃ dâna nim̃diyâ dâtârâ bhavatyayam̃ | M tam̃ dâna ninditâ dâtâ | dârâlâbha bhavatyayam̃ | . — 4. B °iti te sâdhvanadako bha° M °sâdhuḥ nandakâ bha° stu vo | . — 5. B °yeneva sadriço° M °naivam asadṛi°.

6. BM so pi piṇḍa° B °caritha vanantam° M °cariya carante a° B °raksheye û°. — 7. M unnodaro pi trâso alpa° B °daro pi tâso | alpa° BM °syâlpalo° B °lupa۱so°. — 8. B °lopagato | â° M °muniḥ B °muni dhyâ°. — 9. B dhyâyeti | ato bhayâ â° M °yanti ato bhavyâ â° B °ye ya°. — 10. M yasya tra° B °sti | cchi° BM °çrotrasya bhikshava(M °vaḥ) kṛi°.

11. BM kṛityo kṛityaprahîṇa(B °na)sya paridâgha(B °ghe)nam acyutaḥ || . — 12. M °khyâsi buddhena ca pra°. — 13. B eko ca a° M eko abhi° BM °ramishyâmi evam̃ gamishyâmi(M °shyati) daça diçâ | . — 14. B vâyau nam̃ yam̃ upe° M kshuradhâropamâm̃ savâm̃ jaineyam̃ ca upeshyasi | bhave ji°B °mo || bhava ji°. — 15. M °hvâya tâlaçcam âsâ° BM °dṛiçam̃ sam̃yyato bhava(M °va | ).

16. M nicâmagandhe asito ca vṛikshamûle pa°. — 17. B ekâçanasya çikshasi° M °çishyasi° BM °çrama(M °çrava)ṇopasâna°. — 18. M °ham̃ vyânam̃ dhyâyinâm̃ kâmatyâgiṇâm̃ | B °ham̃ dhyâna dhyâyinâm̃ kâmarâginâm̃ | .

ततो ह्रिरिं च श्रद्धां च भूयो [387ᵃ] शिक्षेय मामको ॥
न पारं द्विगुणायति नापि चैवं गुणायति ।
उच्चावचा प्रतिपदा श्रामण्येन प्रकाशिता ॥
तं नदीषु विजानाति रन्ध्रेषु प्रदरेषु च ।
सन्नादयति खु ओघो शान्त एव महोदधिः ॥
यं ऊनकं तं स्वनति यं पूरं शान्तमेव तं ।
ऊनकुम्भोपमो बालो ह्रदपूरो व पण्डितः ॥
यो मुनी बहु भाषति उपेतं अर्थसंहितं ।
निर्वाणं साक्षात्कुर्याय जानन्तो बहु भाषति ॥
यो च धीरो मितभाणी जानन्तो न बहु भाषति ।
स मुनी मौनमर्हति स मुनी मौनमध्यगात्ति ॥

नालकप्रश्नं समाप्तं ॥

भगवा सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थं अभिसंभावयित्वा वाराणस्यां विहरति ऋषिवदने मृगदावे शास्ता देवानां च मनुष्याणां च विस्तरेण णिदानं कृत्वा मथुरायां श्रेष्ठि आढ्यो महाधनो महाभोगो प्रभूतस्वापदेयो प्रभूतधनधान्यकोशकोष्ठागारो प्रभूतजातरूपरजतवित्तोपकरणो प्रभूतहस्त्यश्वाजगवेडको प्रभूतदासीदासकर्मकरपौरुषेयो । तस्य दानि श्रेष्ठिस्य त्रियन्तरा दारिका जाता ॥ सा दानि अमंगला ति कृत्वा परिव्राजिकाये दिन्ना । यदा संवृद्धा भवति ततो

1. B tato rirhi ca çuddhâm̃° M tato ṛishim̃ ca çuddhâm̃ ca bhûyo nâmena çikshiya | çikshâ parimânena na° B °çikshiya mâmeta na°. — 2. BM na pâra dviguṇâyati(B °ti | ) nâ° M °pi câra guṇâyato B °ṇâyatâ uccâ°. — 3. M °câ pratipadyatâ | . — 4. M °nâti grâmaṇyena prakâçitâ || B °nâti andheshu pracareshu ca sa°. — 5. M sam̃nâdayati punar ghosham̃ çabdam̃ caivam̃ mahodadhe | B °ti kunagho çatam eva ma°.

6. M yam̃ mûlam̃ na tataḥ çatâpi yam̃ pû° B yam̃ ûnarkatam̃ çatam̃tiyam̃ puram̃°. — 7. BC °pûro ca pa° M °ṇḍito | . — 8. BM °bahû bhâsha(M °she)ti u° M °sam̃hati | . — 9. M °kshâ kurvanti yânanto°. — 10. M °ro mṛitâbhaṇitam̃ ba° B °bhâṇitam̃ ba ° shati sa° M °shanti.

11. M so muniḥ | maunam arha° B °rhati | sa° M °muniḥ mau° BM °gânti bhagavâm̃ (M °vân) || . — 12. M iti çrîmahâvastuavadâne nâ° BM °praçnâ sa°. — 13. M athânantaram̃ bhagavân sa° B °vâm̃ sam̃mya ° harati | ṛi° M °ṛishipattane mṛi° B °çreshṭi â° M °çreshṭiḥ âdyo mahâdhano° BM °dhânyo koçakoshṭâgâro° M °ttopakarahaṇastya° B °çvâjagaḍako° M °paurûsheyâ | B °sheyâ | .

17. BM °çreshṭisya° M °triyam̃tarâ ° jâtâḥ. — $18^{1}$. B °nnâ ya°. — $18^{2}$. M °sam̃vṛitto bha° B °sam̃vṛiddho bhavati | tato nam̃ pravraje° M °to tam̃ pravrajehi ca vallikâ te bheshyanti B °ca vallikâ te bhavanti dho°.

नां प्रव्राजेहि व वृत्तिका ते भेष्यति । धात्री च दिन्ना या तां दारिकां संवर्धेति यं च किंचिद् व्ययकर्म तं श्रेष्ठिना निष्यन्दितं ॥ सा दानि यथा उत्पलं वा पदुमं वा पुण्डरीकं वा तथा संवर्धीयति यत्र काले विज्ञप्राप्ता ततो ताये परिव्राजिकाये प्रव्राजिता ऋषिसेखिता सर्वाणि परिव्राजकशास्त्राणि प्रबोधिता ॥

सा दानि अन्यमन्याहि परिव्राजिकाहि सार्धं समुल्लापं करोति न चास्या कोचित् शक्नोति उत्तरं संधितुं । सा एव अग्रमाख्यायति वादिप्रवादी सर्वशास्त्रविशारदा ॥ अपरो च ब्राह्मणो वेदपारगो सर्वशास्त्रविशारदो वैयाकरणो गतिंगतो वादिप्रवादी दक्षिणापथातो मथुरां आगतो ताम्रपात्रेण पार्श्वं वेठयित्वा महन्तीं उल्कां प्रज्वालेत्वा मथुरां प्रविशति । मध्येन अन्तरापणवीथीये चेतं प्रदिशासि । अस्ति स वर्णकुशलो यो अस्मेहि सार्धं कथयेय ॥ सो दानि माथुरकेहि वुच्चति ॥ निर्वापेहि एतामुल्कान्ति इहास्माकं प्रव्राजिका अस्तीति बाला दहरा सा त्वया सा[387b]र्धं सप्तमं दिवसं कथयिष्यति यदि शक्नोसि ताये सार्धं कथयितुं ततः वादी ॥ सो दानि आह ॥ एवमस्तु अहं ताये परिव्राजिकाये सार्धं सप्तमं दिवसं कथयिष्यामि । तत्रभवन्तेहि मध्येहि भवितव्यं ॥ तेहि माथुरकेहि नैगमजानपदेहि सा परिव्राजिका शब्दाविता वुच्चति ॥ दक्षिणापथातो ब्राह्मणो आगतो वादी वेदपारगो व्याकरणे वादाभिप्रायो शक्यसि तेन ब्राह्मणेन सार्धं सप्तमं दिवसं कथयितुं ॥ सा दानि आह ॥ बाढं शक्यामि तेन वा अन्येन वा सार्धं कथयितुं । अहमपि वादाभिप्राया ॥ नैगमेहि परिव्राजिकाय श्रुत्वा मथुरायां चत्वरशृंगाटकवीथीमुखश्रवणामुखेषु घण्टा घोषापि-

1. BM dhotrî° M °nnâ vâ tâm̃ dârikâ sam̃ ° ti pam̃ ca kim̃ ° rman tam̃ çreshṭino nisyam̃vitam̃ ‖ B °çreshṭina niḥsam̃citam̃ | . — 2. M °tparam̃ vâ padu° B °dumam vâ pu ° ptâ | tato° M °ptâm iti tato tâye velâye parivrâjakâye pravrâjito lishim̃ se° B °jjto ṛishim̃ sakhi° M °jakâni çâstrâ° B °strâṇi prabâdhitâ | . — 5. BM so dâni anyama(M °m am̃)nyehi parivrâjakâhi sâ° B °roti na vâsya ko° M °roti na vâsya kecicchaknoti | u° B °ram̃ | sam̃° M °ram̃ sadhi° BM °tum̃ sâ°.

6. BM °pravâdi sarva° B °çâladâ | . — 7. M °dipravâdi da ° ṇa pârçve veṭayi° BM °hantam̃ ulkâ prajvâ ° M °râm̃ praveçati | B °çati ma°. — 9. M °vîthim̃ cemam̃ praviçâmi | B °thîye tamam̃ praviçâsi | . — 10[1]. B asti sarvakarṇṇako çirâ yo a° M asti sarvakoçilâryâ âtmehi sâ ° thamayeyam̃ B °yeyam̃ ‖ . — 10[2]. BM °ti ni°.

11. B nirvâyehi° M °tvayâ sârddha sapta ° sam̃ kathayishyâmi yadi çaknoti ‖ tâ ° tum̃ tato vâdî ‖ . — 13[2]. M °vrâjakâ ° yishyami | . — 14. BM °vyam̃ te°. — 15[1]. B °dehi | sâ M °vrâjakâ°. — 15[2]. B °kshiṇapathâ° M °to vâdipravâdi ve° M °sârddha sapta°.

17[1]. M °âhatsuḥ ‖ . — 17[2]. M çakyâma te ° sârddha ka°. — 18[1]. M °dâhiprâ° BM °yâ nai°. — 18[2]. BM °vrâjakâya(M °ye) çru° M ° çrim̃gâdakavithîmukham̃çra° B °çrim̃gâm̃ṭakavîthim̃ mukha° B °shâyitâ | .

ता । सप्तमं दिवसं अमुकाये परिव्राजिकाये दक्षिणापथिकेन ब्राह्मणेन वादिना सार्धं कथासंलापं भविष्यति ॥ यो श्रोतुकामो सो संनिपततु ॥ तत्र रंगेन समन्तेन मंचा बद्धा । महाजनकायो जनपदातो श्रुत्वा मथुरां आगच्छति ॥

तस्य ब्राह्मणस्य एतदभूषि । कीदृशी सा परिव्राजिका या मया सार्धं कथयिष्यति । यं नूनमहं तां परिव्राजिकां पश्येयं ॥ सो दानि कौतूहलेन पृच्छपरिपृच्छिकाये तन्तं परिव्राजिकानां आवसथं गतो गत्वा पृच्छति ॥ कतमा सा परिव्राजिका या सा तेन दक्षिणापथिकेन ब्राह्मणेन सार्धं महतीये परिषाये मध्ये कथयिष्यति ॥ तेन ये पृच्छिता तेहि सा परिव्राजिका उपदर्शिता स्वके परिवेणे विसृष्टेन स्वरेणाभिसंस्कारेण स्वाध्यायं करोन्ती ॥ सो ब्राह्मणो तां परिव्राजिकामुपसंक्रम्य पृच्छति ॥ भवन्ति त्वं मया सार्धं परिषामध्ये कथयसि ॥ सा दानि आह ॥ वाढं कः संदेहः अहं त्वया सार्धं परिषामध्ये कथयिष्यामि अन्येन वा अन्नावादिना ॥ सो दानि ब्राह्मणो तरुणो अभिरूपो सापि तरुणा परिव्राजिका अभिरूपा तेषां परस्परस्य मूले सह दर्शनेनातो प्रेमं निपतितं ॥ सो दानि ब्राह्मणो तां परिव्राजिकामाह ॥ भवति अहं त्वया अर्थिको ॥ सा परिव्राजिका आह ॥ अहं त्वया अर्थिका ॥ ब्राह्मणो आह ॥ भवति यद्येवं तथा करोम यथास्माकं परस्परस्य समागमं च भवे परो च न जानेय । वयं तत्र [388ᵃ] परिषामध्ये अभिसमयं कृत्वा सल्लपिष्याम । यो अस्माकं निगृह्येय तेन तस्य शिष्यत्वं उपगन्तव्यं । नाश्चार्यं एतं यं पुरुषेहि स्त्री निगृहीता । अथ पुनर्भवती मम निगृह्णेय ततः अहं सर्वलोकस्य कुत्सितो च परिभूतो च भवेयं द्व्यंगुलप्रज्ञाये स्त्रीमात्राये त्वं निगृहीतो ति । भवति तथा करोहि यथाहं भवति निगृह्णेयं ततो त्वं मम शिष्या

1. BM °vrâjakâye° B °ṇâpathena brâ° M °ditena sârddha ka°. — 2[1]. M °patatuṁ | . — 2[2]. M °ntena pañcâ° B °câ buddhâ ma°. — 4[1]. M °ṇasyaitad a° B °shi kî°. — 4[2]. M °vrâjakâ ° thayati | . — 5[1]. B yaṁ dûram aha tâṁ° M yaṁ dûraṁm aha tâṁ° BM °vrâjakâṁ°. — 5[2]. M °ni kotû° B °hareṇa pṛicchaparipṛicchakâ° M °cchikâya taṁ parivrâjakânâm âvasatha gato° B °nâṁ avasa°.

6. B °mâ so parivrâjako yâ ° M °vrâjakâ sâ te ° ṇâpathake ° sârddha maha°. — 8. M °rçitâ purimantena vi° B °svake purimante vi° BM °yaṁ karoti || . — 9. M °hmaṇoṁ tâṁ ° vrâjakâṁ° BM °ti bha°. — 10[1]. BM °rishama° M °thayishyati || .

11. BM °rishamadhye° M °mi | anayavyayena çra° B °mi | anyena vâ çuddhâ°. — 12. M °po so pi taruṇo parivrâjako abhirûpâ° B °sâpi taruṇo parivrâji abhirûpâ°. — 13. BM °vrâjakâ(M °ka)m â°. — 14[2]. B so pa° BM °vrâjakâ° M °âsî. — 15[3] B °karoma | yathâ° M °karoma | yathâlokaṁ ° maṁ ca jâneyaṁ B °ro ca jâneya va°.

16. M °bhisamaṁ kṛi ° llayishyati | B °llayishyâma | . — 17. M °hyeyena tasya°. — 18[1]. M °ryyaṁ evaṁ yaṁ ° strîhi nigṛihîto | . — 18[2]. M atha khalu pu ° vati sama ni° B °vati mama ni° M °tato sarva ° tsido ca pa ° yaṁ vyaṅgula ° hîteti | B °hîto tí. — 20. B bhavati | tathâ ka ° çishyo bhavishyati | M °çishyo bhavati.

भविष्यसि । तदेवमस्माकं परस्परसमागमं भविष्यति । न च नं कोचि जानिष्यति ॥ सा दानि परिव्राजिका आह ॥ एवं भवतु ॥ सो दानि ब्राह्मणो एवं ताये परिव्राजिकाये सार्धं संमन्त्रेत्वा निर्धावितो ॥

ततो सप्तमे च दिवसे तत्र चतुरङ्गे बहूनि प्राणिसहस्राणि समागतानि राजा माथुरो समागतो कुमारामात्या समागता श्रेष्ठिप्रमुखं नैगमं समागतं सार्थवाहप्रमुखो वाणिजग्रामो समागतो पुरोहितप्रमुखा ब्राह्मणपरिषा समागता अष्टादश श्रेणीयो समागतावो श्रमणब्राह्मणतीर्थिकगणिका समागतानि ॥ सो पि ब्राह्मणो समागतो सापि परिव्राजिका अनेकाहि परिव्राजिकाहि सार्धं समागता । समागत्वा परिषामध्ये स्वकस्वकेषु आसनेषु निषण्णानि ॥ ब्राह्मणो उत्थित्वा सराजिकां परिषां विज्ञपेति ॥ भवन्तो ऽस्माभिर्वटुकचापल्यं कृतं यमस्माभिः स्त्रीभिः सार्धं संलापमभ्युपागतं । अनाश्चर्यं च भवेय यदहमेतां परिव्राजिकां निगृह्णेयं वदेन्सुः किमत्राश्चर्यं यं पुरुषेण स्त्री निगृहीता ति । अथ खलु यं एषा परिव्राजिका मम निगृह्णेया ततो हं सर्वलोकस्य कुत्सितो च परिभूतो च भवेयं द्व्यंगुलप्रज्ञाये स्त्रीमात्राये त्वं निगृहीतो त्ति । ततः मम एषा सराजिका परिषा विज्ञप्ता । यदि एषा परिव्राजिका परिषामध्ये मम शक्नेय निगृहीतुं ततो मया एतस्या परिव्राजिकाये शिष्येण भवितव्यं अथाहं एतां परिव्राजिकां परिषामध्ये निगृह्णेयं ततो एताये मम शिष्यत्वमुपगन्तव्यं ॥ सा दानि परिव्राजिका ताये परिषाये पृच्छीयति ।

1[1]. BM °sparam̃ sa°. — 1[2]. B °ca mam̃ ko° M °ca mam̃ kvacij jâni°. — 2[1]. B so dâ° vrâjakâm âha || M °vrâjakâ°. — 2[2]. M etam̃ bhavatum̃ | . — 2[3]. M °hmaṇaivam̃° BM °vrâjakâ ° rddham̃ samantre° B °to sa ca tato°. — 4. M sa ca tato° B °ptamo ca divaso ta° BM °bahuni prâ ° kumârâmâtyâ(M °tya) âgatâ çreshṭipramukhà nigamam̃ (B °mukhâni naigama samâgatam̃) sârtha(M °rtham̃)vâhapramukhâ(M °kham̃) vâṇija° M °grâmam̃ samâgato pu ° shâ samâgatâḥ ashṭâ ° çreṇiyo samâgatovo çravaṇabrâ° B °çramaṇabrâhmaṇo tirthikagaṇi sa°.

7. M so brâ° BM °to so pi parivrâjakâ anekâkâ(M °nekehi) parivrâjikâ(M °jake)hi sâ° M °gato B °gatâ sa°. — 8. B °tvâ | pa° BM °rishamadhye° M °kasvakehi â ° sharṇṇâni B °ṇṇâni brâ°. — 9. M °rishâ vi° B °peti bha°. — 10. B °r vaṭkacâ° M °câpam̃lpam̃ kṛi ° stribhi sârddha sam̃°.

11. B °bhaveyam̃ ya° BM °vrâjakâm̃° M °nirgṛihneyam̃ vadetsuḥ | ki° B °gṛihneyam̃ vadetsuḥ ki° M °shena strî nigṛihîtam̃ ti || . — 12. B °esho pa° BM °vrâjakâ ° gṛihneyâ° M °tato yam̃ sa ° veyam̃ vyam̃gu ° hîto ti | B °hîto nti | . — 14[1]. M tato ma° BM °esha sa° M °jñapto B °jñaptâ ya°. — 14[2]. BM yadâ esha(M °eva) parivrâji(M °ja)kâ parishâparishamadhye ° gṛihîtum̃ tato(M °tum̃ | tataḥ) mayâ | eta(M °yâ eka)sya parivrâji-(M °ja)kâye ° tavyam̃ || athâham̃ etam̃ parivrâji(M °ja)kâm̃ parishamadhye nigṛihneyam̃ | (M °hnîyam̃) tato° M °çishyam̃ upa°.

17. B so dâni mama pari° M °parivrâjakâ°.

एष ब्राह्मण एवं जल्पति कथं तव उत्पद्यति ॥ सा दानि आह ॥ एवं भवतूति ॥

ब्राह्मणेन एवं समयं कृत्वा प[388b]रिव्राजिकाये दण्डकं प्रयुक्तं परिव्राजिकापि तं ब्राह्मणं समज्याप्रत्यनुभावार्थं उत्तरं प्रत्युद्धारेति । एवन्तेहि वाक्यप्रतिवाक्येहि तं दिवसं क्षपितं नैव एको एकस्य शक्नोति निग्रहीतुं नैव अपरो अपरस्य ॥ एवं यथा एकं दिवसं तथा सप्तरात्रं गच्छति । न च एको एकस्य शक्नोति निगृह्णितुं नापि अपरो अपरस्य ॥ ते मनुष्या ततो परिषातो विकाले विकाले गृहं गता सन्तो स्त्रीभिः पृच्छीयन्ति कुतो यूयं अद्य सप्तरात्रं उपादाय विकाले विकाले आगच्छथ ॥ ते आहन्सुः ॥ न जानथ कस्यार्थाय वयं विकाले आगच्छाम । दक्षिणापथातो ब्राह्मणो आगतो षडङ्गवेदपारगो सर्वशास्त्रेषु गतिंगतो वैयाकरणो अद्य सप्तमं दिवसं ताये परिव्राजिकाये सार्धं संलपति न च शक्नोति निगृह्णितुं ॥ ता दानि तेषां स्वामिकानां आहंसुः ॥ एवं पण्डितायो स्त्रीयो को पुरुषो स्त्रिये अग्रतो बुद्धीये च मीमांसाये ॥ तेषां मनुष्याणां भवति ॥ यदि केनचिदुपायेन सो ब्राह्मणो ताये परिव्राजिकाये परिगृह्णीयेय ततो इमा अस्माकं स्त्रियः सर्वकालं परिभवेन्सुः तृणसंज्ञां पि ता उत्पादयेन्सुः ॥ एवन्तं नगरं सर्वं योभूयेन तस्य परिव्राजकस्य योभूयेन तस्या परिव्राजिकाये अनुकूलकं संवृत्तं ॥ अपरं दिवसं परिषाये समागताये ब्राह्मणेन परिव्राजिकाये उत्तरं दिन्नं ताये च इच्छन्तिये तमुत्तरं न प्रत्यनुभाष्टुं ततः जनेन हक्कारा क्षिप्ता ब्राह्मणस्य जयो परिव्राजिका निगृहीता ॥ तेन दानि ब्राह्मणेन सा परिव्राजिका त्रिदण्डं आरूपयित्वा छत्रोपानहां च गृह्णापेत्वा ततो परिषामध्यातो शिष्यधर्मेण निष्कासिता ॥ ब्राह्मणो पि परि-

1[1]. M °udyadyati ‖ . — 1[3]. BM °tûti brâ°. — 2. M °tvâ parivrâjakâye daṇḍa ° ktam̃ | parivrâjakâ pi ° B °majya pra° M °majya pratyâbabhâvam̃° BM °ttara pratyuddharehi | - — 3. M evam̃ tehi ° pitam̃ eko ° knoti nigṛihîtum̃ naivam̃ aparo parasya B °grahetum̃ | nai ° sya e°. — 5[1]. M °eka di°. — 5[2]. B °gṛihnitum̃ ‖ nâ° M °gṛihitum̃ | nâ° BM °sya te°.

6. M °shyâ te parishâte vikâle avikâle gṛihai gatâ° B °gatâ santâ strî° BM °yûyam̃ asya sa° M °ya vikâle avikâle â°. — 8[2]. M °syârthâ va ° gacchâmaḥ. — 8[3]. M °tâye çreshṭidhîtâye pari° BM °rddham̃ sam̃llapati(M °ti | ) na ca° M °nigṛihnitum̃ | B °knoti gṛihnitum̃ | .

11[1]. M so dâ° B te dâ° M °mikân âhansuḥ | . — 11[2]. B °ṇḍitâye strî° M °ṇḍitâye striye ko ° sho striye a ° buddhiye vâ mî° B °ddhîye câ mî° BM °sâye te°. — 12[2]. M °pâyena brâ ° gṛihnîyetam̃ | tato° B °gṛihnîyeyam̃ tato° BM °imâm̃ asmâ° M °rvakâle pa° B °vetsuḥ | triṇa° BM °sam̃jñâpita u° B °yetsuḥ | . — 14. BM °ram̃ sarva yobhûyena tasya parivrâjakâ bhûyo(B °vrâjikâ yo bhûyaḥ) na tasya parivrâjakâye akâra(M °kâla)kâ sam̃vṛittâ(M °vṛitto) | . — 15. M °ṇeṇa parivrâjakâye uttaram̃ di ° cchanti etam̃ uram̃ na pra° B °pratyubhâ° M °bhâshyam̃ | tato jane° BM °na ukkâ° M °vrâjakâ nigṛihîto | .

18. M °daṇḍam ârapayi° BM °cchatropâ° B °gṛihnâpe° M °gṛihnâyetvâ ta° BM °rishamadhyâ°. — 19. M °vrâjakâye âvasatha gacchati°.

व्राजिकाये आवसथं गच्छति परोपरं च यथाभिप्रायं समागच्छन्ति ॥ अभीक्ष्णसंनिपातेन सा परिव्राजिका आपन्नसत्वसंपन्ना संवृत्ता ॥

ते दानि मथुराया निर्गम्य दक्षिणापथे जनपदचारिकां चरमाणा नवानां वा दशानां वा मासानामत्ययेन श्वेतवलाकामनुप्राप्ता तहिं श्वेतवलाकायां रात्रिं आवासिता ॥ तत्र सभायां सा परिव्राजिका प्रजाता । दारको जातो प्रासादिको दर्शनीयो परमाये शुभवर्णपुष्कलतया स[389a]मन्वागतो ॥ तेहि तस्य माणवकस्य सभाये जातो ति सभिको त्ति नाम कृतं ॥ तेहि दानि मातापितृहि सो माणवको संवर्धियति ॥ यत्र काले सो माणवको विज्ञप्राप्तो संवृत्तो ततो पि लिपिं शिक्षापितो गणनां धारणं निक्षेपणं सर्वाणि च परिव्राजकशास्त्राणि अधीयापितो वादिप्रवादी ॥ सो दानि समुद्रकुक्षिं प्रविष्टो अबुद्धे बुद्धं मार्गति । सो दानि षोडश महाजनपदानि अण्वन्तो वाराणसीं आगतो ऋषिवदनं मृगदावं भगवन्तमुपसंक्रान्तो ॥

अथ खलु सभिको परिव्राजको भगवता सार्धं संमोदनीयां कथां संमोदयित्वा सारायणीयां कथां व्यतिसारयित्वा एकान्ते निषण्णो । सभिको परिव्राजको भगवन्तं प्रश्नं पृच्छे ॥

कंक्षाविचिकित्सो आगतो स्मि
प्रश्नं पृच्छितुं अभिकांक्षमाणो ।
तस्य सभिकस्य प्रश्नमेवं पृष्टं
भगवं अनुपूर्वमनुलोममनुसन्धिमनुधर्मं व्याकरोहि ॥

भगवानाह ॥

1. BM °satvâ saṁ° M °vṛitto | . — 3. M °râyâṁ ni° B °mya daṇiṇâpathaṁ ja° M °pathaṁ ja° caramânâṁ navânâṁ vâ da° BM °tavalâkam a(M °kaṁ a)nu° M °prâpto ta° sito | B °sitâ ta°. — 5[1]. BM °yâṁ so pa° BM °vrâji(M °ja)kâ prâjâtâ dâ°. — 5[2]. M °jâtaḥ prâ° mâye pushkalatâye çubhavarṇṇatâyo samaṁnvâ° BM °gato te°.

6. M °bhâryâye jâto ti sâbhi° BM °konti nâ°. — 7. B tehi dâni dâni mâ° M °dâvi mâ° saṁvarddhâyati | B °saṁvarddhayati | . — 8. B °kâlaṁ so° M °kâlaṁ sa mâṇavako vijñâprâ° BM °nâṁ vâraṇaṁ ni° M °kshepanaṁ sa° B °to vâdipra°. — 10[1]. M °ddhe buddha mâ°. — 10[2]. B °janapadâni akaṇṭhato vâ° M °shipattanaṁ mṛi°.

13. M °bhagavato sârddha maṁmodanî° dayitvâ sâropaṇiyâṁ kathaṁ vya° B °nîyâṁ kathâṁ saṁmodayitvâ sâropaniyâṁ sâropayitvâ e° BM °sharṇno sa°. — 14. B °vrâjiko° BM °cche kâṁ°.

16. B kâṁkâcit kiṁcit sâ â° M kâṁkshâyicikitsâ° BM °smi iti(M °ti | ) sabhiko praçnaṁ pṛicchatum abhi° M °mâno B °ṇo ta°. — 18. BM °praçnaṁ me pṛishṭâ || bhagavâm anu(M °vân a)pûrvem anulomam a(M °maṁ a)nusandhim a(B °saṁdhi a)nudha°.

दूरा सभिका तुवमागतो सि
प्रश्नं प्रष्टुमिहाभिकांक्षमाणो ।
प्रश्नान्तकरो भवामि ते हं
अनुपूर्वमनुलोममनुसंधिमनुधर्मं व्याकरिष्यामि ॥

एवमुक्ते सभियो परिव्राजको भगवन्तं गाथाये प्रत्यभाषि ॥

किंप्राप्तमाहु भिक्षुणं
सुव्रतं किं सु कथं च दान्तमाहु ।
बुद्धो ति कथं प्रवुच्चति
पृष्टो मे भगवं अनुपूर्वमनुलोमं अनुसंधिमनुधर्मं व्याकरोहि ॥

एवमुक्ते भगवां सभिकं परिव्राजकमेतदुवाच ॥

पदेन कृतेन आत्मना
अभिनिर्वाणगतो वितीर्णकांक्षो ।
विभवं च भवं च ज्ञात्व लोके
उषितवां क्षीणपुनर्भवो स भिक्षुः ॥
सर्वत्रउपेक्षो स्मृतिमां
न च सो हिंसति कंचि लोके ।
तीर्णो श्रमणो अनाविलो
उत्सन्नो यो न करोति आश्रवं ॥
यस्येन्द्रियाणि भावितानि

1. B °sabhikaḥ tvam âga° M °sabhikas tvam âga° BM °si praçnaṁ(M °çnâṁ) prashṭuṁ ihâ kâṁ ° ṇo pra°. — 3. BM praçnâ(M °çnâṁ)ntekaro bhavâmi(M °vâpi) te aham anupûrvem a(M °rvaṁ a)nulo° M °anudharma vyâ°. — 5. M °bhiko pa° B °shi kiṁ°.

6. BM °prâptaṁ mahâbhikshuṇâ iti sabhiko suvrato praçnaṁ | te sabhi(M °sati)ka prishṭo(M °shṭho) kiṁ su kathaṁ vadanti(M °nte)m âhuṁ bu°. — 8. B buddho ti su kathaṁ vuccati || prishṭaṁ me° M buddho ti su kathaṁ pravuccati | priccha me bhagavan prishṭo anupûrvaṁ anulo° B °vaṁ prishṭo anupûrva anulo° M °nusandhi anu ° roti | . — 10. M evaṁm u ° gavân sabhiko pa ° tad avocat | .

11. B yaṁ yena kri° M jayena kri° BM °tmano sabhiyo hi(M °yo bhi) bhagavâṁ(B °vaṁ) abhinirvâṇaṁ gato vistîrṇṇa(M °rṇṇe)kâṁksho(M °kshâ) vi°. — 13. BM °jñâtvâ loke ushitaṁ vâ kshi° M °vo si kshu B °si | bhikshuḥ sa°. — 15. BM °pekshâṁ smri ° ca se arhanta ciṁki(M °nta kiṁci)lloke tî°.

17. M °rṇṇo çravaṇo° BM °tsanto yena karoti(B °ti | ) âçravaṁ(B °çramaṁ) pa°. — 19. BM paçyendriyâṇi(M °yâni) bhâ° M °rddhâ ca sarvaloke B °loke ni°.

अध्यात्मं वहिर्धा च लोके ।
निर्विध्य इमं परं च लोकं
कालं रचति भावितो स दान्तो ॥
कल्पानि विकीर्य केवलानि
संसारदुःखानि चतूपपातं ।
विगतमलं विरजं अनंगणं
प्राप्तं जातिचयन्तमाहु भिक्षुं ॥

अथ खलु [$389^b$] सभिको परिव्राजको भगवतो भाषितमभिनन्दित्वा भगवन्तमेव उत्तरिं प्रश्नं पृच्छे ॥

किंप्राप्तिनमाहु ब्राह्मणं
श्रमणो किं सु कथं सुस्नातको त्ति ।
विशुद्धो नागो ति कथं प्रवुच्चति
प्रश्नं मे भगवं पृष्टो अनुपूर्वमनुलोमं अनुसन्धिमनुधर्मं व्याकरोहि ॥

एवमुक्ते भगवां सभिकं परिव्राजकमेतदुवाच ॥

बाहेत्व सर्वपापकानि
विमलो साधुसमाहितो स्थितात्मा ।
संसारमवेत्य केवलं
उषितवां क्षीणपुनर्भवो स ब्रह्मा ॥
समितावि प्रहाय पुण्यविपाकं
विरतो ज्ञात्व इमं परं च लोकं ।

2. B nividya imam̃ pam̃caraloke kâlam̃° M °rvidya imam̃ pam̃cacalokakâcam̃ raksha°. — 4. M kalpâṇi vi° B °vivikîrya ° catoyapâdam̃ | M °carâyapâdam̃ | .

6. B vigatamalajo anam̃gaṇo prâ° M vigatam̃ alajam̃ anaṅgaprâ ° kshayam̃ ta° BM °m âha bhikshum̃ ‖ . — 8. B °lu sa sabhikâ pa° M °tvâ bhagavam evam utta ° çnam̃ paripṛi°. — 10. BM °prâptenam âhu brâ(M °na âhur brâ)hmaṇo ti sabhiko çrama(M °çrava)ṇo kim̃ suḥ ka ° takonti vi°.

12. BM °tham̃ nâgo ti vuccati | pra° M °çnam̃ bha° BM °gavâm̃ pṛi°. — 14. M °gavân sabhi ° jakam̃ eta°. — 15. BM vâhi(M °him̃)tvam̃ sarvapâpâni sabhikonti bhagavâm̃ vi° B °dhumohito | sthi° M °hitaḥ | sthitânmâ B °tmâ sam̃°.

17. M sam̃mâram ayatya ° shitamaya kshînapunarbhava sa hmâ B °shita te yam̃ kshîṇam̃ punarbhava | sa brahmâ sa°. — 19. M sapitâvi prabhâye pu° B °prabhâve puṇyâvi° BM °pâkam̃ nirato jñâtvâ i ° lokam̃ jñâ°.

जातीमरणं उपातिवृत्तो
श्रमणो तादि प्रवुचति तथत्वा ॥
विस्नापिय सर्वपापकानि
अध्यात्म वहिर्धा च सर्वलोके ।
देवमनुष्येहि कल्पितानि
कल्पं नेति पुनर् स्नातको मे ॥
अगुं न करोति किंचि लोके
सर्वयोगेहि विसृज्य बन्धनानि ।
सर्वत्र अनिश्रितो विमुक्तो
नागो तायि प्रवुचति तथत्वा ।

अथ खलु सभिको परिव्राजको भगवन्तमेतदुवाच ॥

किंप्राप्तिनमाहु वेदको ति
अनुविदितं किन्ति कथन्ति वीर्यवा ति ।
आजानेयो कहिन्ति नाम भोति
प्रश्नं मे भगवं पृष्टो अनुपूर्वमनुलोममनुसंधिमनुधर्मं व्याकरोहि ॥

एवमुक्ते भगवां सभिकं परिव्राजकमेतदुवाच ॥

वेदानि विचार्य केवलानि
श्रमणानां . . . . . . ।
सो सर्ववेदनासु वीतरागो
सर्ववेदनामतीत्य वेदको ति ॥

1. BM jñâtimaraṇam̃ ‖ upâdâbhivṛitto çrama( M °çrava)ṇo bhâvayi pra°. — 3. BM kim̃ snâ° M °pâpâni a° B °ni | a° BM °loke de°. — 5. BM °ni kalpa ne° M °punaḥ snâ° BM °ko me aṅge°.

7. BM aṅgena ka ° cilloke ° dhanâni sa°. — 9. BM °anisṛito( B °to | ) vimukto bhâgo tâye pra°.

12. BM °ptinâma vedako ti sabhiko anuvidenti ki° M °katham̃ titi iyam̃ vâdî B °than titiryavâdî â°. — 14. BM °yo kâhinti(B °hiti) kâma° B °bhoti ‖ pra ° gavâm̃ pṛi° M °gavân pṛishṭo° B °pûrvem anu° M °anusandhim a° B °nudharma vyâ°.

16. M evam̃m u ° gavân sabhi° B °jakam̃m e° M °vâcat ‖ . — 17. BM °lâni sabhiyatti(M °bhîyati) bhagavâm̃ çrama(M °vân çrava)ṇânâm̃ | . — 19. B so sacaivam̃ vedanâ° M so sarve ve° BM °su tîvrarâgo ° nâm adhîtya° M °vedako B ° ko ca abhâ°.

अभावित्व प्रपंचनामरूपं
अध्यात्मं वहिर्धा च रागभूतं ।
यो समानो रागमूले बंधनप्रमुक्तो
अनुविदितो तायि प्रवुच्चति तथत्वा ॥
यः प्रहीणबन्धनो प्रहाणवां
सर्वदुःखक्षयं जनेत्वा ।
नान्यान् सर्वत्र न रक्षति
विरजो वीर्यवान्प्रवुच्चति तथत्वा ॥
यस्य बन्धनानि संछृत्तानि
अध्यात्म वहिर्धा च सर्वलोके ।
सर्वरागबन्धनप्रमुक्तो
आजानेयो ति तमाहु भूरिप्रज्ञा ॥

अथ खलु सभिको परिव्राजको भगवन्तं प्रश्नं पृच्छति ॥

क्षेत्रज्ञो खलु पुनर्नाम भवति
इति सभिको प्रश्नं पृच्छेत् मुनिं ।
तत्ते मुनी नाम कथं प्रवुच्चति
प्रश्नं मे भगवं पृष्टो अनुपूर्वमनुलोमं अनुसंधिमनुधर्मं व्याकरोहि ॥

एवमुक्ते भगवान् सभिकं परिव्राजकमेतदुवाच ॥

क्षेत्राणि सं[390ª]यम केवलानि
दिव्यं मानुषं यं च ब्राह्मं क्षेत्रं ।

1. B abhavitva ca nâmarû° M âbhavitva yantamarû ° tmam̃ ca vahirddhâ° B °rddhâra rogabhû° BM °tam̃ yo°. — 3. B °no râgasûre bam̃dhanaprayukto anunihito taye pravu° M °no râgasu evam̃ bandhana ° nuhîtitâtaye pra° BM °ti ‖ tathatvâ ya°. — 5. BM ya prahînaba ° hâṇam̃ ca sarva ° yam̃ jñâne nâ°.

7. BM nârye(M °ryye)ṇa sarva° B °kshati cirajo vi ° ti | tathâ tra° M °ti | tathâ 'tra°. — 9. BM °bandhâ(B °ndhâni) sam̃vṛittâni ° ke sa°.

11. BM °rvarâ(M °ro)galobhadoshamoha(M °ho)mânamrakshaba ° neyo(M °neya) tam âhur bhû(M °hu | bhû)riprajño ‖. — 13. M °jaka bha°. — 14. B kshetrejño ° bhavati | i° BM °bhiko bhagavantam̃ pra° B °çnam̃ pracche° M °pṛicchetsuḥ mu°.

16. M °muni nâma kathâm̃ pravu° BM °gavâm̃ pṛi° M °lomam anu°. — 19. M ketrâṇi sam̃yama kabalâni ‖ ‖ sabbiko âha ‖ bhagavân divyam̃° B kshetrâṇi sam̃[f° 390ª]-yyama kam̃balâni ‖ ‖ sabhiko âha ‖ bhagavâm̃ di ° sham̃ pam̃ ca brâ° M °brâhmaṇam̃ kshe° BM °tram̃ sa sa°.

स सर्वमूलक्षेत्रबन्धनात्प्रमुक्तो
क्षेत्रज्ञो तायि प्रवुच्चति तथत्वा ॥
कोशानि विचार्य केवलानि
दिव्यं मानुषं यं च ब्रह्मकोशं ।
स सर्वकोशबन्धनात्प्रमुक्तो
कुशलो तायि प्रवुच्चति तथात्वा ॥
विचार्य उभयानि प्रहीणानि
अध्यात्म वहिर्धा च शुक्लमूलं ।
कृष्णमूलमुपातिवृत्तो
पण्डितो तायि प्रवुच्चति तथात्वा ॥
सतां च असतां च ज्ञात्व धर्मं
अध्यात्म वहिर्धा च मुक्तचित्तो ।
देवमनुष्येहि पूजियो सो
संगमलमतीत्य सो मुनि ॥

अथ खलु सभिको परिव्राजको भगवन्तमेतदुवाच ॥

श्रोत्रियो . . . . . . . .
. . . . . . . . . . . . . ।
. . . . . किं सु नाम भोति
प्रश्नं मे भगवं पृष्टो अनुपूर्वमनुलोममनुसन्धिमनुधर्मं व्याकरोहि ॥

एवमुक्ते भगवां सभिकं परिव्राजकमेतदुवाच ॥

श्रुत्वा सर्वधर्ममभिज्ञाय
सावद्यमनवद्यं च सदेवके लोके ।

1. BM °ndhanân pramu° M °kto kshatrajña tâye pra° B °tâye pra° BM °ti | tathâsmi-(M °smim̃) kle°. — 3. BM kleçâni vi ° hmakshetram̃. — 5. BM pramukto ko(M °ke)-çabandhanât || (M °nâ) pramukto kuçîla tâye ca pravu(M °ca punar u)ccati( M °ti | ) tathâsmi(M °smim̃) tâni°.

7. BM tâni ubha° M °ṇâni âtmavahirdhyâni çu° B °lam̃ u°. — 9. M upâvṛito pa° B °mûlam̃ upânivṛi° BM °ṇḍitâye(B °ye pra)vuccati | tathâtmâ asa°.

11. B asantâ ca jñâtvâ dha° M asam̃to ca jñâtvâ dha° BM °cittâ de°. — 13. BM °pûjaye so° M °sam̃mam̃gala° BM °so mati ||. — 15. M °bhiko bhiksho pa° tad avocat |.

16. M çrotiyeshu ca nâmo âniti kim̃ su° B çrotriyo khuttunâ mamâniti ca kim̃ su° BM °bhoti ca pra° B °gavâm̃ pṛi° M °gavân pṛishṭo ° dharma vyâ°. — 20. M evam̃m u° gavân sabhi°.

21. M çrutvâ hi sa° BM °jñâya sabhikonti bhagavantam̃ sâ ° loke a°.

असमो अपरिग्रहो विशुद्धो
अनिघो तायि तमाङ्ग श्रोत्रियन्ति ॥
हित्वा आलयानि आसयानि
बन्धनानि अतिवृत्तो नेति ।
गर्भशय्यं अरतो सर्वपापकेहि
आर्यो तायि प्रवुच्चति तथत्वा ॥
यो मे चरणेहि प्राप्तिप्राप्तो
सम्यग्ज्ञात्व उपेत्य सर्वधर्मा ।
विद्याचरणेन सो उपेतो
चरणवा तायि प्रवुच्चति तथात्वा ॥
दुःखविपाकं यदस्ति किंचिद् धर्मं
ऊर्ध्वं अधो तिर्यक्सदेवकस्मिं ।
परिवर्जयित्वा परिज्ञाचारी
मायं मानं च अथो पि क्रोधलोभं ।
पर्यन्तमकासि नामरूपं
तं परिव्राजकमाङ्ग प्राप्तिप्राप्तं ॥

अथ खलु सभिको भगवतो सुभाषितमभिनन्दित्वा अनुमोदित्वा भगवन्तमिमाहि सारूप्याहि गाथाभिरभिस्तवे ॥

यानि च त्रीणि यानि च षष्टि
श्रमणप्रवादनिश्रितानि भूरिप्रज्ञ ।
संज्ञाक्षरसंज्ञानिश्रितानि

1. B amamo° M agamo° B °ddho anighâ tâyi tenâhu çotriyanti hi° M °yi mo tenâhu çotriyam̃ ti. — 3. M hitvâ âlepati | â° B hitvâ âlepati â° M °âsanâni bandhanâni anivarttishu neti B °ndhanâti anivarttishu neti ga°. — 5. BM garbhaçayya ara(M °çaryya are)mo sarva ° hi ariyo tâpi pra° B °ti | tathoshâm̃ asatâm̃ yo° M °ti tatheshâm̃ asam̃tâ.

7. M yo me varaṇe ° pto sam̃mya ° dharmâ B °rmâm̃ vi°. — 9. M °dyâcaraṇa so° BM °to ca(B °to va)raṇe vâ tâpi pravuccati | ta° B °thâ tamâ du° M °thâtmâ.

11. BM °dharma(B °rma ûrddham̃) || atha vîrya(M °ryya) sade ° smim̃ pa°. — 13. B °varjiyitvâ° BM °rî(B °rî | ) mâryamânam̃ ca adho pi° B °kroṭalâbha parya° M °lobha parya°. — 15. B °kâçi nâma kûpetam̃ || pa° M °nâma kûpetam̃ pa ° m âhuḥ prâptaprâptâ || B °hu || prâptaprâptâ || .

17. M °gâthâm abhi° B °stave yâ°. — 19. M yâni ca triṇi yâni ca shashṭhî çravaṇapra° BM °jña sam̃°.

21. M °kshayam̃ sam̃jñâ° B °ksharam̃ sam̃jñâ ° vîrya | orâsasamâgâ anta° M °viryya orâçasamâgâ a°.

ओसरणानि वीर ओसरेसि मार्गा ॥
अन्तको सि दुःखस्य पारगो सि धर्माणां
सम्यक्संबुद्धो सि अनाश्रवो सि ।
द्युतिमां धृतिमां प्रभूतप्रज्ञो
दुःखस्यान्तकरो खु वीतरागो ॥
मुनि मौनेयपदेषु प्राप्तिप्राप्तो अकंपियो ।
अतुल्य आदित्यबन्धु विमुक्तिदो शुभव्रतो ॥
तस्य ते नागनागस्य महावीरस्य भाषतो ।
सर्वदेवतानुमोदन्ति उभौ नारदपर्वता ॥
अहं कांषितमन्वे[390b]षि तं मे व्याकार्षि चक्षुमां ।
उपयासा च ते सर्वे विध्वस्ता विनलीकृता ॥
अद्धा मुनि सि संबुद्धो नास्ति नीवरणानि च ।
एवं पुण्ये च पापे च उभयत्र न लिप्यसे ॥
शीतीभूतो दमप्राप्तो द्युतिमां सत्यविक्रमां ।
पादां वीर प्रसारेहि सभिको वन्दि शास्तुनो ॥

सो दानि भगवता बलवशीभावे विनीतो एहिभिक्षुकाये च प्रव्राजितो उपसंपादितो । एषा आयुष्मतो सभिकस्य प्रव्रज्या उपसंपदा भिक्षुभावो ॥

सभिकस्य वस्तु प्रश्ना च आश्रवक्षया प्रव्रज्या समाप्तं ॥

भगवां वाराणस्यां विहरे वरणाये नदीये पारे शास्ता देवानां च मनुष्याणां च विस्तरेण निदानं कृत्वा तस्या दानि वरणाये नदीये कूले महान्यग्रोधवृक्षो मूलवन्तो च स्कन्धवन्तो च शाखापत्रपलाशवन्तो च प्रासादिको प्रसादनीयो नीलो

2. B °go si | dha° M °ṇâm̃ sam̃mya° B °buddhesi anâçravo vi° M °si | anâçuvo vi°. — 4. BM vimucyati(M °tim̃)mâm̃ dhṛi ° prajñâ duḥkhasyântam̃karo(M °re)shu vîtarâgo mu°.

6. BM °maunapadeshu akam̃piyo akhilam atulya°. — 7. B °muktadam̃ çubhavratâ | M °ktidam̃ çubhavrataḥ ta°. — 8. BM °shato sa°. — 9. BM °nti obhau°. — 10. BM °ham̃ rakshitam anve ° kshusho ‖.

11. BM upâdâyâsâ° M °sarva vidhvastâ vilali° B °stâ vilarikṛi°. — 12. B addâ mu° M atha vâ mu ° buddham̃ nânâvaraṇâ°. — 13. BM sarve(M °rva) puṇyo ca pâpâyikâ u°. — 14. BM çiti(M °ti)bhûta saprâptâ cyuti° M °kramam̃ | . — 15. M °vîna prasâdehi°.

16. M °bhâva vinîto | e° BM °pravraji ° dito e°. — 17. BM esha â° M °bhâvaḥ ‖ . — 18. M iti çrîmahâvastuavadâne sabhi°. — 19. M atha bhagavân vârâ° BM °tasya dâ° M °diye kule° BM °vṛiksha mû° B °traphalâpalâ° M °diko prasamadanîyo ° megho sam̃kâço B °ghasakâço ta°.



IMPRIMERIE NATIONALE

अंजनमेघसंकाशो ॥ तच न्यग्रोधे यदृच्छया पुरुषेण उपयाचितं तस्य च उपयाचनं समृद्धं । तेन तस्य न्यग्रोधस्य महापूजासत्कारं कृतं । तस्य दानि पुरुषस्य दृष्टानुकृतिमापद्यन्ता अपरापरे च स्त्रियो च तत्र न्यग्रोधे सत्योपयाचनं ति कृत्वा उपयाचन्ति सर्वाये वाराणसीये तं न्यग्रोधं सत्योपयाचनातो अभिज्ञातो यो च तत्र न्यग्रोधे उपयाचति तं तस्य उपयाचनं समृध्यति ।

शुभाये पूर्वचरितो स्ति कोचिद्
अयं च देवप्रणिपातमेति ।
यदृच्छया तं पदमुपनेति
एमेवमेन्ति कुदर्शनानि ॥

वाराणस्यां च नगरे श्रेष्ठि आढ्यो महाधनो महाभोगो प्रभूतभोगो प्रभूतस्वापदेयो प्रभूतधनधान्यकोशकोष्ठागारो प्रभूतजातरूपरजतवित्तोपकरणो प्रभूतहस्त्यश्वाजगवेडको प्रभूतदासीदासकर्मकरपौरुषेयो अपुत्रो । तेन दानि पुत्राय बहूनि यष्टोपयाचितशतानि यथा मे पुत्रो भवेयाति न च भवति ॥ ताये दानि श्रेष्ठिभार्याये श्रुतं वरणाये नदीये कूले न्यग्रोधो सत्योपयाचनं तत्र यो यं याचति तस्य तं उपयाचनं समृध्यति ॥ ताये दानि श्रेष्ठिभार्याये तस्य श्रेष्ठिस्य आरोचितं । आर्यपुत्र श्रुतं मे वरणाये नदीये कूले महान्यग्रोधो सत्योपयाचनो तत्र यो यं याचति तस्य तं समृध्यति । गच्छाम तत्र [391ª] न्यग्रोधे पुत्रमुपयाचेमः ॥

श्रेष्ठि सपरिवारो महर्द्धिये समृद्धिये तहिं न्यग्रोधं गतो तहिं गत्वा तस्य न्यग्रोधस्य महापूजासत्कारं कृत्वा ताये भार्याये सार्धं श्रेष्ठिना तत्र न्यग्रोधं उपयाचितं ।

1. BM °ddham̃ te°. — 2¹. M °tasya copayâcanam̃ samṛiddham̃ | tena tasya nya°. — 2². BM °striyâ ca tatra nyagrodhe satyo(B °tyopa)yâcanam̃ ti kṛi ° sîye tam̃ nyagrodha (B °ḍha) satyo° M °jñâto abhijñâto yâ ca tatra° B °jñâto yâ ca tatra°.

6. B subhâse pûrvacaristâsti kim̃cid ayam̃ ca daivam̃ pra° M °ritâsti kim̃cid ayam̃ ca devam̃ pra° BM °pâtim e°. — 8. BM °tam̃ param u° B °panayati | evam enti° M °panamatim̃ evam enti°. — 10. B °çreshṭi âḍhyo° M °çreshṭi âdyo mahâdhano mahâbhogo prabhûtasvâ° BM °dhânyo(M °nyâ)koçakoshṭâgâ° M °ttopakaraṇaḥ prabhûtaha ° jagaḍavedâ pra° B °veḍâ pra° M °sheyâ a° BM °tro te°.

12. BM °trârthe ba° M °na ca me bhavati | . — 13. BM °çreshṭibhâ° M °dîye kulena mahânya ° tyopayâvanâ tatra yâtram̃ yâcayati tasya° B °sya te u° M °mṛiddhyati | . — 15. BM °ni çreshṭibhâ° B °çreshṭisya° BM °tam̃ â°.

16. M °diye kule ° grodhamûle satyopayâcanâ tatra yo yam̃ jâcati | tasya° B °tyopacâraṇo tatra yo yam̃ yâceti | tasya° BM °mṛiddhyati | (M °ti). — 17. M °grodha pu ° cema. — 18. BM çreshṭi sapari° M °rddhiye tahim̃ nyagrodham̃ gataḥ tahim̃ ° çreshṭinâ ta° BM °tra nyagrodha(M °dhe) upa°.

इच्छाम तव मूलातो पुत्रं यदि मे पुत्रो जातो भविष्यति ततो इह देवकुलं प्रतिष्ठापयिष्यं महांतं च ते पूजासत्कारं करिष्यामीति ।

स्त्रियः समर्था पुरुषा नियोक्तुं
यो तत्र भद्रो स्त्रिय एव मूलं ।
ये चापि संग्रामहता नरेन्द्रा
तेषां प्यनयो स्त्रिय एव मूलं ॥

ताये पि श्रेष्ठिभार्याये उपयाचितं ॥ त्वं न्यग्रोध सत्वयाचनो श्रूयसि । यथा यथा ते श्रेष्ठिना देवकुलं प्रतिश्रुतं पूजासत्कारं च तथा करिष्यामि अथ मे पुत्रं न दास्यसि ततो ते मूलानि समूलकं छिन्दापयिष्यामि ॥ यन्नामा वृक्षो तन्नामा वृक्षदेवता तत्र प्रतिवसति । तत्र न्यग्रोधे न्यग्रोधो नाम देवपुत्रो प्रतिवसति ॥ सो दानि देवपुत्रो ताये श्रेष्ठिभार्याये तथा उपयाचितो समानो भीतो । अहं न कस्य चिदेमिनापि आच्छिन्दामि एषा च मे श्रेष्ठिभार्या एवं याचति । यदि एतस्या पुत्रो न भविष्यति परशुणा मे इमं भवनं छेदापयिष्यति ॥ तेन न्यग्रोधेन देवपुत्रेण शक्रो देवानामिन्द्रो अधीष्टो । अहं कौशिक नैव कस्यचिदेमिनापि आच्छिन्दामि मम श्रेष्ठिना भवने पूजासत्कारं कृत्वा एवं चोपयाचितं तदिच्छामि तथा क्रियमाणं यथा तस्य वाराणसीयस्य श्रेष्ठिस्य पुत्रो भवेय मा मे तं भवनं छिद्येया ॥ सो दानि देवपुत्रो शक्रेण देवानामिन्द्रेणाश्वासितो । मा माहि तथा करिष्यामि यथा तस्य पुत्रो भविष्यति तव भवनं न च्छिन्दिष्यति ॥

1. BM °di se putro jâ(M °tro yâ)to bhavishyati ‖ tato i ° hâm̃ ca te pû°. — 3. BM striyaḥ(M °yo) samasamarthâ bhavanti purushâṇi vuktam̃ so tatra bhadrastriyayevam̃(M °striyam eva) mû°. — 5. BM °grâmam̃ mahatâ ca narendrâ(M °ndro) te ° striyam eva mû°.

7[1]. BM °çreshṭibhâryâye upajâci° B °tam̃ tvam̃°. — 7[2]. BM °no çruyati | . — 7[3]. BM yato ya(B °to pa)thâto çreshṭinâ° M °rishyati ‖ atha te putram̃ ° te mûlanâri sa° BM °yishyâmaḥ | . — 9. M yam̃nâmo vṛiksho tam̃nâmo tatra vṛiddho vṛikshade° B yannâmâ tatra vṛiddho vṛikshade° BM °tra pravisati | . — 10. M tatra nyagrodhasya nyagrodho nâ°.

11[1]. BM °çreshṭibhâryâ(M °ryâm̃)ye° B °bhîto a° M °bhîto 'ham̃°. — 11[2]. B °cid acchindâma e° M °cid acchindâmi mama çreshṭibhâryâ esho ca me e° B °çreshṭibhâ°. — 12. BM °etasya pu° B °vishyati caçvaryeṇa me° M °vishyati aiçvaryyeṇa me° B °nam̃ cchadâ°. — 13. B °adhishṭo | M °adhishṭho | . — 14. M °naivam̃ kasyacid acchi° B °pi acchim̃dâmi° BM °mama çreshṭinâ bhavane pu° M °evam̃ vopayâcitam̃ | tad icchâmi tam̃thâ kriyamânam̃ yathâ° B °kriyamânam̃ tathâ° M °ṇasim̃ tasya çreshṭisya pu° B °çreshṭisya pu ° cchidyayâ ‖ M °cchindeya | .

17[1]. BM °sito mâ°. — 17[2]. BM °shyâmi | ya° M °nam̃ | cchi° B °nam̃ na cchim̃dishyati | .

तहिं दानि त्रयस्त्रिंशभवने अपरो देवपुत्रो कृतपुण्यो महेशाख्यो महर्द्धिको महानुभावो कृताधिकारो पुरिमकेहि सम्यक्संबुद्धेहि परिपक्वकुशलमूलो आसंनभूतो निर्वाणस्य एकजन्मप्रतिबद्धो च्यवनधर्मो त्रयस्त्रिंशेषु देवनिकायेषु । सो शक्रेण देवानामिन्द्रेण वुच्यति । त्वं च्यवनधर्मो यं च ते च्यवनधर्मनिमित्तानि प्रादुर्भूतानि च्यविष्यसि उपपद्यिष्यसि ततो च वाराणस्यां श्रेष्ठिस्य भार्याये कुक्षिस्मिं उपपद्याहि ॥ सो दानि देवपुत्रो [391b] शक्रं देवानामिन्द्रमाह ॥ ममाभिप्रायो मनुष्येषूपपद्यित्वा बुद्धस्य भगवतो शासने प्रव्रजिष्यामि प्रव्रजित्वा च दुःखस्यान्तं करिष्यामि । ततो न शक्यं तत्र श्रेष्ठिकुले उपपद्यितुं यत्कारणं श्रेष्ठिकुलो वा प्रमोदकरो अन्तरायकरो कुशलानां धर्माणां अन्यत्राहं अत्र मध्यमे कुले उपपद्यामि । तदहं यथासुखं अविघ्नेन भगवतो शासने प्रव्रजित्वा दुःखस्यान्तं करिष्यामि ॥ शक्रो तमाह ॥ प्रणिधेहि तुवं तत्र श्रेष्ठिकुले चित्तं उपपत्तीये अहं तथा करिष्यं यथा तुवं ततः श्रेष्ठिकुलातो अभिनिष्क्रमित्वा भगवतो शासने प्रव्रजिष्यसि ॥ तेन देवपुत्रेण शक्रस्य देवानामिन्द्रस्य वचनेन तत्र वाराणसीयं ओकस्य श्रेष्ठिस्य कुले चित्तं प्रणिहितं । सो दानि त्रयस्त्रिंशेषु देवनिकायेषु च्यवित्वा वाराणसीयं श्रेष्ठिभार्याये कुक्षिस्मिं उपपन्नो कालेन समयेन नवानां वा दशानां वा मासानामत्ययेन सा श्रेष्ठिभार्या प्रजाता ॥

ताये दारको जातो प्रासादिको दर्शनीयो अक्षुद्रावकाशो परमाये वर्णपुष्कलताये समन्वागतो जातमात्रस्य च श्रेष्ठिना रमणीयानि जातकर्माणि क्रियन्ति

1. M °rddhiko maheçâkhyo mahânu° purimakasya sammyaksambuddhasya pari° B °purimake samya° M °mûla âsannabhû° B °lo âçamnabhû° BM °ekajatmapra ° dharmâ tra° shu so°. — 3. M °çakro de° B °devâm indre° BM °ṇa budhyati tvaṁ°. — 4. BM tvaṁ cyavanadharmâ(M °rmmâ) yaṁ° M °prâdubhûtâni tataḥ cyavishyasi | tato° B °dyishyasi | tato° BM °çreshṭisya° B °smiṁ upapadyohi | .

6[1]. BM °putrâ ça° M °ndram âhaṁ | . — 6[2]. M °prâyaṁ manushyeshûpapayitvâ bu° BM °ne pravrajishyâmi | pra°. — 8. M tataḥ na° BM °kyaṁ(B °kyaṁ | )tatra çreshṭikule upapadyituṁ(M °dyatuṁ | ) yatkâra(B °tkâla)nam(M °ṇaṁ) çreshṭiku(M °kule) vâ pramo(M °prasâ)da° M °rmâṇâ anya ° dhyamakule u°. — 10. M °khasyâkaṁ kari°.

11[1]. M °kro âha ||. — 11[2]. BM °dhehi(M °dhemi) tuvaṁ tatra çreshṭikule ci° M °upapattishye ahaṁ° BM °shyaṁ | yathâ tuvaṁ tataḥ(M °tato) çreshṭikulâ°. — 13. M tena na devapu° BM °çreshṭisya ku°. — 14. BM °siyaṁ çreshṭibhâryâ(B °ryâye) kukshi° M °nno | tena kâlena tena samayena navânâṁ mâsânâ° BM °tyayena sâ(B °so) çreshṭibhâ ° jâtâ to°.

17. B to | ye dâ° M toye dârako jâtaḥ prâ ° shkaratâye samatvâgato° BM °çreshṭinâ ramaṇiyâni jâta(B °taṁ)karmâṇi(M °rmâni) kriyanti çrama(M °nti | çrava)ṇabrâ° M °nîyakeshu ° nnapânasya khâjyabho° BM °çrâṇiyati(M °ti | ) tailapraṇâliyâ(M °ṇâlikâ) ca pra° B °nti | ghritapaṇâliyâ ca pâ° M °ghritapraṇâliyâ ca sa° B °liyâ ca sa°.

श्रमणब्राह्मणेषु कृपणवनीपकेषु अन्यस्य च जनकायस्य अन्नपानखज्जभोज्यगन्धमाल्यविलेपनं विश्राणीयति तैलप्रणालीयो च प्रवाहीयन्ति घृतप्रणालीयो च पानप्रणालीयो च ॥ सप्ताहस्यात्ययेन दैवज्ञब्राह्मणपरिषा शब्दापिता दारकस्य नामं करोथ ॥ तेहि तस्य दारकस्य नामं करोन्तेहि तस्य दारकस्य यशोदो ति नामं कृतं ॥ ते दानि ब्राह्मणा तेन खादनीयभोजनीयेन संतर्पयित्वा संप्रवारयित्वा हिरण्यसुवर्णस्य उत्संगशतानि दत्त्वा विसर्जिता ॥ यशोदस्य चत्वारि धात्रीयो उपस्थापिताः । एका उद्वर्तेति च स्नापेति च अपरा स्तनं पायेति अपरा उच्चारप्रस्रावमपकर्षति अपरा अंकेन धारेति ॥ एवं यशोदो कुमारो यथा उत्पलं वा पदुमं वा पुण्डरीकं वा एवं संवर्धीयति ॥ यथोक्तं भगवता ।

कृतपुण्या हि वर्धन्ति न्यग्रोधो व सुभूमियं ।
अनु[392a]पन्थको विय द्रुमो न अल्पपुण्यो विरुह्यति ॥

यदा कुमारो विज्ञप्राप्तो संजातो तदा लिपिं शिक्षितो निक्षेपणं धारणं व्यवहारं च । त्रीणि चास्य पितरेण प्रासादानि कारापितानि हैमन्तिको ग्रैष्मिको वार्षिको षष्टि च स्त्रीसहस्राणि अन्तःपुरं उपस्थापितं ॥ तेहि च प्रासादेहि यन्त्रमन्त्रयुक्तानि सोपानानि कारापितानि पंचहि पुरुषशतेहि अल्लीपियन्ति च अपनीयन्ति च तेहि सोपानेहि अल्लीपियन्तेहि च अपनीयन्तेहि च अर्धयोजनं शब्दं गच्छति ॥

द्वितीयकुलिको व्यवहारेण पूर्वदेशं गत्वा आगतो । तस्य दानि श्रेष्ठिना दूतं

3. BM °tyayena dârakasya brâhmaṇasya abhijñâ çabdâ° B °rothe | . — 4. M te dâni tasya dârakasya nâmaṁ karotha | tehi tasya dârakasya yaço° B °ntehi | ta ° taṁ te°. — 5. B °khâdanîyo bho° M °khâdanîyena bhojanîyena santarpa° B °saṁtapayi ° tsaṁgaḥ dentiti datvâ vi° M °tsaṁgo dadantîti | datvâ visarjjitâḥ ya°.

6. M yaçodo tasya datta catvâri dhâtriye u° B yaçodattasya catvâ ° trîye u° M °pitâ e°. — 7. M eko udva° BM °peti ca aparâ staṁ(B °ste)naṁ pâyeti(M °ti ca) aparâ uccârapraçâ(M °çrâ)vam a° M °râ aṅgena dhârayati | . — 8. M evaṁ dâni yaço° B °çodâ ku° BM °tparaṁ vâ padu° M °rddhishyanti || . — 9. BM °tâ kṛi°. — 10. M °puṇyo hi° BM °grodhe va°.

11. BM jâto anu(fol. 392a)pacchako° M °drumâ na alpapuṇyâni virûhyanti | B °hyanti | . — 12. B °piṁ çekshi ° paṇaṁ taṁ dhâ° M °panan taṁ dhâraṇaṁ vyavahâryya | tâṁ yeshu ca trî° B °hâryeshu ca trî°. — 13. B °shashṭiṁ ca strî° M °shashṭhîṁ ca strî° puram upa° B °taṁ te°. — 14. B °dehi yantrayantrayuktânâni sopanâni kâ° M °ktâni sopânnâni kârâpitâni tâni paṁ ° shaçatehi allipiyanti | apanîyaṁti ca tehi sopânehi ca apanîyanti ca allîpiyanti arddha° B °shaçatehi allîpiyanti ca apanîyanti ca te° M °gacchanti | .

18[1]. B dvitîye ku° M dvitîye kulake vya°. — 18[2]. BM °çreshṭinâ°.

प्रेषितं । आगच्छ मम पुत्रस्यानुभावं पश्यहीति ॥ सो दानि कुलिको श्रेष्ठिस्य सकाशं आगतो ॥ श्रेष्ठिना सो द्वितीयकुलिको एकपर्यंके उपविशापितो । कुमारो पि यशोदो शब्दावितो । सो पितुस्य द्वितीयकुलिकस्य चाभिवन्दनं कृत्वा तत्रैव पर्यंके उपविशापितो । इमे सर्वे त्रयो एकपर्यंके उपविष्टा ॥ राज्ञा श्रेष्ठिस्य दूतो प्रेषितो । अस्ति राजकार्यो सत्वरो शीघ्रमागच्छेसि ॥ श्रेष्ठि द्वितीयकुलिकस्याह ॥ आस त्वं कुमारेण सह अहं याव राजकुलातो आगच्छामि ॥ श्रेष्ठि राजकुलं गतो द्वितीयकुलिको च गृहपति यशोदेन कुमारेण सार्धं आसति ॥

सो दानि तस्य यशोदस्य श्रेष्ठिपुत्रस्य तां सम्पत्तिं दृष्ट्वा एतदभूषि । न खल्वयं घरावासो वा इच्छितव्यो यस्येदृशो उपभोगपरिभोगो । निःसंशयं अयं कुमारो बुद्धप्रत्येकबुद्धेषु श्रावकमहेशाख्येषु च कृताधिकारो इच्छितव्यो दिन्नसर्वाकारो वासितवासनो कृतपूर्वयोगो असाधारणो अवरुप्तकुशलमूलो । सचेत्सो कुमारो बुद्धं भगवन्तं देवातिदेवं पश्येय अथ महतार्थेन संयुज्येय ॥ गृहपति आह ॥ कुमार सर्वं खलु यौवनं जरापर्यवसानं सर्वं आरोग्यं व्याधिपर्यवसानं सर्वं जीवितं मरणपर्यवसानं सर्वा संपत्ति विपत्तिपर्यवसाना सर्वेहि प्रियेहि मनापेहि नानाभावं विनाभावं विप्रयोगं चिराद्वाचिराद्वा पितुं पि एतं वा अहिष्यसि एतं वा भवं जहिष्यसि । किं नु खलु ते कुमार भगवां दृष्टो ॥ कुमारो आह ॥ कीदृशो भगवां ॥ गृहपति आह ॥ कुमार देवा[392b]तिदेवो भगवां तथागतो हैं सम्यक्संबुद्धो

$1^{2}$. BM °çreshṭisya° B °sakaçam̃° BM °to çre°. — $2^{1}$. B çreshṭinâ ço dvi° M çreshṭino | so dvitîyo ku ° ekaparyyake°. — $2^{2}$. B °vito so°. — 3. M so pito so pitu ° sya nâbhi ° traivam̃ paryyake u° B °ryam̃ko u°. — $4^{1}$ M ime so ca tra° B °sarvam̃ tra° M °ekaparyyakam̃ upavishṭho || B °vishye | . — $4^{2}$. M râjâ çreshṭiyasya° B °çreshṭisya° M °dûto a°. — $5^{1}$. B °satputro çî° M °satputro çîghram̃ âga° B °gacchasi | . — $5^{2}$. BM çreshṭi dvi°.

6. M âsu cam̃ ku° B °ha | aham̃ yâ ca kumâro râ° M °yâvad râja°. — 7. BM çreshṭi râ ° dena ca ku°. — $8^{1}$. BM °çreshṭipu° B °shi na°. — $8^{2}$. B °khalv evam̃ yovâso° M °khalv eyam̃ yovâso ° ço upabhoga niḥ° B °go niḥ°. — 9. BM °mâro buddhe pra° B °çrâkamahe° M °dinno sarvakâravâsitasano° B °nnasarvakâro vâsitasanâ kṛi° M °ṇo anava ° lamulo B °lo sa°.

11. M sacet sa ku ° ntam̃ devântidevam̃ paçyeye | anyâ maha° B °çyeyam̃ || a.yâ mahatârthona sam̃° M °sam̃pûjyeyam̃ || B °jyeyam̃ || . — $12^{2}$. M kumâra sarve kha ° jarâparyyavasânam̃ sarvam ârogyam̃ vyâdhiparyyavasânam̃ sarvam ârogyam̃ sarvâ sampatti °ryyavasâno sarve° B °sam̃patti vipattiparyavasâne | sarve ° yogam̃ cirâd vâ kâlâd vâ pi pitum̃ ° etâ vâ bhava jahishyasi | M °yogam̃ virâd vâ cid vâ kâlâd vâ pi pitum̃ pi etam̃ vo jayishyasi | etâ vo bhava jahishyasi.

$16^{1}$. B kim̃ tu kha° M kin tu kha° drishṭyo || . — $16^{2}$. B °âha || ku°(*l.* $17^{2}$). — $16^{3}$. M kidri ° vân griha°. — $17^{2}$. M kumâra devântideva bha ° gato 'ham̃ sam̃mya° BM °dvâtrim̃çatihi mahâpurushalakshaṇehi samanvâgato açî(B °çitihi mahâpurushalakshaṇehi samatvâgato açî)tihi anuvyam̃° B °çobhitehi çarîro ashṭâdaçehi âvenikehi bu° M °vâm̃

